# एकावली

## - सरलाटीका





डॉ० भृगुनाथ पाण्डेय

विद्याधरकृता-

# एकावली- सरलाटीका

# EKĀVALĪ- SARALĀṬĪKĀ




टीकाकार: डॉ० भृगुनाथपाण्डेय:

( प्राध्यापकचर:, शिक्षाशास्त्रविभागे, काशीविद्यापीठे )




"Published with the financial assistance from the Rāṣtriya Sanskrit Sansthāna, New Delhi."

"नवदिल्लीस्थ-राष्ट्रियसंस्कृतसंस्थानस्य वित्तीयसाहाय्येन प्रकाशितम्"



संस्करणम् १९९६ ई०

१,००० प्र०



मूल्यम् ६०/-

मुद्रकः
अजय प्रिन्टर्स, कज्जाकपुरा, वाराणसी।
फोन संख्या ३३०४९६

# प्रास्ताविकम्

समालोचनाप्रवृत्तिश्चिरात् प्रक्रान्ताऽभूद् भारते वर्षे, तथापि षष्ठशताब्दीकाद् काव्यशास्त्रपरम्परा। दण्डि-भट्टोद्भट-वामन-रुद्रटेभ्यः परत आनन्दवर्धन-धनिकाभिनवगुप्त-कुन्तक-महिमभट्ट-क्षेमेन्द्र-भोजराज-मम्मट-रुय्यक-देव-विश्वनाथादयो महामनीषिणो लक्षणा-ग्रन्थरचनाचणा विचक्षणाः णपरा अग्रेसारयामासुस्तत्परम्पराम्। लक्ष्यभूतकाव्यपुरुषस्याङ्गभूततया न्यलङ्कारादिभिर्विवेचनीयतामर्हन्ति प्रामुख्यतः काव्यानि। तस्माद्धेतो विनिर्धार्यते लक्षणं तत्परिभाषणं वाऽऽलङ्कारिकैः। काव्यं नाम हृदयसापेक्षं ाव्यशास्त्रं नाम धिषणासापेक्षं दोषज्ञविभावनम्।

अङ्ग-वङ्ग-कलिङ्ग-भवानां बुधानामिह दिशि रमते निर्भरं मनः। यदि मम्मटः मीरिकस्तर्हि विश्वनाथस्तावदौत्कलः। वाग्वैदग्ध्यामग्रेसरतितरां विश्वनाथो मम्मटात्। ततः परं त्य एव विपश्चिदपश्चिमो विद्याधरो नरसिंहदेवभूभुजो राजपण्डितः खलु काव्यप्रकाशसाहित्यदर्पणौ शेषतोऽवलम्ब्य स्वकीयामनितरसाधारणप्रतिभां प्राचीकटदेकावलीनामकग्रन्थमुखेन। ापरुद्रयशोभूषणकर्तुर्विद्यानाथात् पण्डितराजजगन्नाथाच्च प्रागयमेव सूरिवरो यो लक्षणग्रन्थोदाहरणानि सिंहदेवस्तुतिपराणि स्वयमेव विरचय्य यथायथमाविरबीभवदेकावल्याम्। एका श्रेष्ठा, वली=मालाऽलङ्काररूपा, तामिमां विरचय्य स समार्पिपन्नरसिंहदेवभूभुजे। इदमेवास्ति रहस्यमस्या भिधानस्य, यतस्तत्रालङ्कारादीनामन्तर्भावितत्वात् तदावपनस्य काव्यस्य स्वयमेव गतार्थता सम्पद्यते।

एकावल्या अस्याः पाठ्यग्रन्थत्वाभावेन भूयिष्ठप्रचारवैकल्यात् संस्कृतसाहित्येतिहासकारा तस्या वा प्रणेतारं विस्तरशो विवेचयामासुरिति दैवविडम्बनामेव वितर्कयामः प्रकामम्। वलीं काव्यशास्त्रगुणगणगरिष्ठामभ्युपजग्मुषा मल्लिनाथेन व्यतानीह तरलाख्या व्याख्येत्येतस्या ता सिद्धैव। मल्लिनाथीया व्याख्या भवति तथा गभीरा यद् व्याख्यान्तरमपेक्षत एवेति जानन्त्येव त्रिदः। काव्यशास्त्रमर्मविदा डॉ० भृगुनाथपाण्डेयेन तस्या अस्या एकावल्या उपादेयतां जिज्ञासुजनानामुपकाराय सुरगिरा प्रकल्पिता 'सरला' इत्याख्या व्याख्या। बालानां सुखबोधाय द्यनुवादः पल्लवित आङ्गलटिप्पणीसमेतः। आशासे डॉ० पाण्डेयमहाशयस्य प्रयासेनानेन ः प्रीणिता जिज्ञासुजनाश्च भृशमुपकृताः स्युरिति विभावयति।

---

दशहरापर्वणि
२०५३ वै.
गचेतनापीठम्
ला, वाराणसी

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री
निदेशकः
अनुसन्धानसंस्थानस्य
संपूर्णानन्दसंस्कृतविश्वविद्यालये।

प्रो० राम कुमार त्रिपाठी
कुलपति
**Prof. Ram Kumar Tripathi**
Vice-Chancellor

फोन 358160-कार्यालय
350268-आवास
Fax : 91-542-350268
**महात्मा गांधी काशी विद्यापीठ**
वाराणसी-२२१००२
Mahatma Gandhi Kashi Vidyapith
VARANASI-221002
दिनांक / Date. ..... .......

25 - 5 - 1996

Ekāvalī, a book of rhetorics and poetics composed by Vidyadhara, a great poetician, has been translated into Sanskrit, Hindi and English by Dr. Bhrigu Nāth Pāndeya. Saralātīkā on Ekāvalī is very easy and simple for the readers of poetics. Taralātīkā on Ekāvalī has already been written by a great scholar, Mallinātha. Comparatively it is not simple. Details and criticism have been given in respect of suggestion, qualities, blemishes, concealed, suggestion, word & sense, explanation and figures of word and sense. This book is a good contribution to the Indian literature and classical Sanskrit Language.

(R. K. Tripathi)
Vice-Chancellor.

# Introduction

Ekāvalī is written by Vidyādhara, a great poetician who flourished in southern India.

Ekāvalī is his only work written in the praise of Rājā Narsingh II of Utkala in the beginning of 14 th century. Kavi Vidyādhara was Vidyādhara and not Vaidya Vidyādhara. Mahāmāheswara word in Ekāvalī expresses that Vidyādhara was a devotee of Lord Śiva. In the beginning of the book (Ekāvalī), he prayed to Lord Siva also.

More details regarding his family are not known, yet it is definitely said that he has been in the period of Utkala king Narsingh II nd of 14 th century, because instances of this book are based on the praise of this king. Ekāvalī is based on Mammaṭa's Kāvyaprakāśa and Ruyyaka's Alankārasarvasva. There are eight chapters.

The first chapter deals with poetry, the Causes and its purposes. Word has no power to express predominant suggestion. To some extent by the help of indication, it can be known. The soul of poetry is predominant suggestion (Dhvani). This can be compared with the work of Ānandavardhana's Dhvanyāloka.

The second chapter deals with expression, indication and suggestion of word. Like Vedantins Vidyādhara has added one more type of indication called as jahadajahat and (tattvamasi) is its Suitable example for understanding. Mammaṭa has described only six kinds of indication, while Vidyādhara, seven.

The third chapter deals with the predominant suggestion and its kinds amounting to 51 in number and also (Rasa) sentiment and its nine types. Poetry of predominant suggestion becomes best of all. Vidyādhara totally follows Mammaṭa in this regard.

The fourth chapter of Ekāvalī deals with the middle class of poetry (Guṇībhūtavyangya), where the suggested meaning is not predominant. but it is subordinate suggested sense.

Excellences, qualities and style with their kinds are described in the fifth chapter of Ekāvalī. Bhojarāja, Vāmana and Daṇḍin have been criticised by Vidyādhara. He has followed Mammaṭa in toto in respect of excellences and style three kinds of excellences such as sweetness, floridity and perspicuity and Vaidarbhī, Gauṇī, Pāncālī styles three in numbers are described in this chapter like Mammaṭa's kāvya Prakāśa.

The sixth chapter deals with poetic blemishes like

1- Avimriṣṭavidheyānśa
2- Prakramabhanga
3- Avacyāvacana
4- vacyāvacana
5- Arthapaunaruktya etc.

These are the main poetic blemishes.

The seventh chapter deals with the word figures of speech such as figure of repetition based on word and sense.

This is common to both based on word and sense figures of speech. Alliteration of cheka and Vritti, yamaka and Lāta alliteration and the fifth pictorial figures are described in this chapter. Pictorial figures of speech like Gomūtrikā etc are based on sāhitya Darpaṇa of Viswanātha kavirāja.

The last eighth chapter deals with the figures of speech based on sense. These are seventy three in numbers. Main figures are simile, metaphor, hyperbole, Delusion, concealment, oxymoron, pun in consistent, inference, Commixture and fusion etc.

There is no mention of three figures of Parikarānkura, tatkara, Prasnottarikā in Alankārasarvasva of Ruyyaka. New idea in respect of three figures namely, Pariṇāma, vicitra and ullekha has been given by Vidyādhara. These are available in Alankāra sarvasva of Ruyyaka. He thas described two types of hyperbole and two types of vyāghāta figures. Arthāpatti, vikalpa and vakrokti figures are presented by Vidyādhara in his own ways.

The contribution of Vidyādhara to poetics in general is conspicuous, because of his stand as a strong supporter of school of suggestion and his contri bution to this branch of poetics namely the figures of speech is particularly conspicuous in so for as, he has accepted only such as are logically flawless. Besides this, his own instances have excelled the beauty of poetics.

First chapter of Ekāvalī is the first and last portion of fifth chapter of Kāvyaprakāśa of Mammaṭa. Second chapter of it includes the second and third chapters of Kāvyaprakāśa. The third chapter includes fourth chapter, the fourth deals with the fifth chapter and fifth chapter with eighth chapter and sixth chapter with seventh, the last seventh and eighth chapters deal with the nineth and tenth chapters of Kāvya Prakāśa. only Taralā Tīkā of Mallinātha on Ekāvalī is available. Vidyādhara was a great poetician, Mimānsaka, grammarian and logician as evident from Ekāvalī[1]. Saralā Tīkā on Ekāvalī has been written now by the writer of this book entitled (Ekāvalī Saralā Tīkā) for the knowledge of the keen readers.

I thank the librarians of Sarswatī-Bhawana-Pustakālaya Vārāṇasī and Goenakā college, Vārāṇasī. I pay tribute to Dr. Bhāgīratha Prasāda Tripāṭhī, 'Vāgīśa Śāstrī, Director, Research Institute, Sampurṇānand Sanskrit University, Vārāṇasī and also to Shri Śivādhāra Singh Exprincipal, T. D. college, Jaunpur. I owe to the authorities of sanskrit Sansthāna, New Delhi, Who gave financial assistance for the printing of this book.

शीर्षकाक्षरदौर्बल्याद् दृष्टिदोषाद् वा समापतिता इह
मुद्रणदोषा ग्रन्थान्तसंलग्नशुद्धिपत्रसाहाय्येन परमार्जनीया दौषज्ञैः।

Dr. Bhrigunātha Pāṇḍeya

---

1- अङ्गतयाङ्गीक्रियमाणमपि संनिपत्योपकारकत्वेनेदमभिमतमारादुपकारकत्वेन वा।---
अनुमानस्य चाङ्गं व्याप्तिः। ---------------------------
जात्यादिर्जातिगुणक्रियाद्रव्यरूपः। -----------------------
—विद्याधरकृतैकावल्याम्। प्रथमोन्मेषे॥

# विषय-प्रवेश :

एकावली कवेर्विद्याधरस्यासाधारणी कृतिः। एकावल्याः केवलं मल्लीनाथकृतातरलाटीकास्ति। सरलाटीकास्य ग्रन्थस्य मया ग्रन्थकारेण प्रणीता। एकावली लक्षणग्रन्थः। नामकरणमन्यनामभ्यो भिन्नं विचित्रञ्च। प्रमुखकाव्यशास्त्रज्ञै राजशेखरमम्मटहेमचन्द्रैः क्रमेण काव्यमीमांसा काव्यप्रकाशः काव्यानुशासनम् इति काव्यशास्त्राणां नामानि कृतानि। कविराजो विश्वनाथस्तु साहित्यदर्पणम् प्रणीतवान्। कवेर्विद्याधरस्यैकावल्री त्रयोदशशतकान्ते चतुर्दशशत्यादावुत्कलनरेशस्य द्वितीयस्य नरसिंहस्य प्रशस्तौ निर्मिता। विद्याधरेण स्वयमेव रचिताः श्लोकाः (चाटुश्लोकाः) इति काथितम्।१ नवीनेयं प्रवृत्तिर्विद्याधरेणोद्भाविता। अनन्तरञ्च सरणिमिमामनुकृत्य विद्यानाथेन 'प्रतापरुद्रीयम्' ग्रन्थो लिखितः। 'एकावली' ग्रन्थस्य संस्करणं मुम्बईतः १९०३ खीस्ताब्दे प्रकाशितम्। सरल-संस्कृतभाषायां सरलाटीका मया कृता।

## विद्याधरस्य जीवनवृत्तम्

कालोऽयमुत्कलनरेशनरसिंहद्वितीयस्यास्ति। अयं समयस्तु रव्रीस्ताब्दः (१२८०-१३१४)। विद्याधरस्य कालोऽयम्। यस्मिन् स महामनाः प्रादुर्भूतः। चतुर्दशखीस्ताब्दस्यारम्भ एवायं समयः। महामाहेश्वरः कविर्विद्याधर एक एव, न त्वन्यः। अयं विद्याधरः कविर्विद्याधरः। अन्यश्च वैद्यविद्याधरो यस्मादेकावलीकारो भिन्नः। सम्प्रति तस्य वंशविषये बृहद् विवरणं प्रामाणिकञ्च नोपलब्धम्। सर्वमान्य एवायं यत् स उत्कलाधिपतिनरसिंहद्वितीयस्य शासनकालेऽलङ्कृतवान् भारतवर्षमिदम्। उदात्तवंशे स उत्पन्नः। महामाहेश्वरेति विशेषणेन सिद्धमिदं मतं यत् स शिवभक्त आसीत्। नमस्कारात्मकश्लोकेनापि परिपुष्टञ्च।२

## कृतित्वम्

एकावली विद्याधरस्याधारणी कृतिः। अस्मिन् ग्रन्थेऽष्टावुन्मेषाः। प्रथमोन्मेषो भूतभावनशङ्करस्य वन्दनाश्लोकादारब्धः। तदनन्तरं नमस्कारात्मकपदकारणसम्बन्धे तर्कोहापोहौ। निर्विघ्नरूपेण ग्रन्थ-परिसमाप्त्यर्थं विद्याधरेण मीमांसादर्शनस्य संनिपत्योपकारकाङ्गभूता आरादुपकारकाङ्गभूता वा शब्दद्वयी प्रयुक्ता। अर्थात् प्रत्यक्षरूपेणाथवाऽप्रत्यक्षरूपेण कार्येऽयं सहायकः। मीमांसादर्शने

---

१. एष विद्याधरस्तेषु कान्तासम्मितलक्षणम्।
करोमि नरसिंहस्य चाटुश्लोकानुदाहरन्॥

(एकावली। १ ।७ ॥)

२. प्रालेयाचलकन्यकाकुचतटीपत्रावलीशिल्पिनः,
प्रेङ्खद्भालविलोचनानलशिखानिष्पीतचेतोभुवः।
देवस्येन्दुविभूषणस्य सुचिरं पादारविन्दद्वयं,
युष्मान् पातु सुरासुरेश्वरशिरोरत्नांशुकिञ्जल्कितम्॥

(एकावली ।१ ।१ ॥)

विधिविवेचनम्। त्रयश्च विधयः—नित्यविधिः, नैमित्तिकविधिः, काम्यविधिः। —— नित्यविधौ (अहरहः सन्ध्यामुपासीत) इति सन्ध्योपासनाया नित्यत्वम्। नित्यकरणीयमेव, तद्वैपरीत्ये प्रत्यवायो भवेत्। नैमित्तिकं कर्म विना निमित्तं क्रियेत, यथा ग्रहणश्राद्धादौ कर्म नैमित्तिकम्। काम्यकर्मणि तु कामनाधीनक्रियायां फलम्। यथा स्वर्गोद्देश्येन कृतमश्वमेधयागादि। एकावल्या वन्दना काम्यविधिरूपेण स्वीकृता, यथा काव्यग्रन्थस्य परिसमाप्तिर्निर्विघ्नरूपेण भविता, कामना च पूरिता। काव्यं व्यक्तौ सकलकामनानां कविसिद्धिं प्रददाति। अतो ध्वनिः, अथवा मुख्यभावः काव्यस्यात्मैव भवति। अभाववादिभिर्भामहादिभिर्ध्वनिसत्ता न स्वीक्रियते। अन्येषामपि गतिरियम्। भामहरुद्रटावन्तर्भाववादिनौ, याभ्यां गुणालङ्कारयोर्ध्वनिः स्वीकृतः। व्यक्तिविवेककारमहिमभट्टेन ध्वनिस्त्वनुमानान्तर्गतः स्वीकृतः। कुमारिलभट्टोऽभिहितान्वयवादी, प्रभाकरगुरुश्चान्विताभिधानवादी। भट्टलोल्लटो दीर्घव्यापारवादी। ध्वनिव्यवस्थापनार्थं विद्याधरेणोपन्यस्तं यत्— (अस्य ध्वनेः सत्तापि न संभाव्यते, अप्रामाणिकत्वान्नाङ्गीक्रियत इत्यर्थः। गुणालङ्कारव्यावर्तको धर्म इत्यर्थः। अनिर्वाच्यः सहृदयहृदयैकसंवेद्यः, न तु निर्वक्तुं शक्यः। भाक्त औपचारिकः। ततो विप्रतिपत्तिसद्भावात्।) शब्दार्थशरीरं काव्यम्, तत्र ध्वनिरात्मेति सिद्धान्तः[१]। आनन्दवर्धनकृतध्वन्यालोकस्य प्रथमश्लोकेन सादृश्यम्। २

एकावल्या द्वितीयोन्मेषे शब्दार्थस्वरूपं निरूपितम्। मम्मटेन 'लक्षणा तेन षड्विधा' उक्ता। परञ्चेति विद्याधरेण लक्षणायाः सप्तभेदाः प्रदर्शिताः। इह जहदजहत्स्वार्था लक्षणाधिकोल्लिखिता, (तत्त्वमसि) महावाक्यमिदं, भेदो वेदान्तानुसारेण दर्शनीयः। इयं तु भागत्यागलक्षणा।

तृतीयोन्मेषे ध्वनिभेदाः प्रभेदा वर्णिताः। उत्तमकाव्ये तु ध्वनिः। अस्मिन् काव्ये व्यङ्ग्यार्थस्तु वाच्यार्थादधिकचमत्कारको भवति। विभिन्नमतानां रसभेदान् प्रदर्शयता वात्सल्यरसमन्यमतेषु सविशेषं मन्यमानेन विद्याधरेण नवरसा एव निरूपिताः। असंलक्ष्यक्रमकाव्यस्याष्टौ भेदाः— १. रसः २. भावः ३. रसाभासः ४. भावाभासः ५. भावशान्तिः ६. भावोदयः ७. भावसन्धिः ८. भावशाबल्यञ्च।

चतुर्थोन्मेषे द्वितीयप्रकारककाव्यस्यार्थाद् गुणीभूतव्यङ्ग्यस्य सोदाहरणा व्याख्या प्रस्तुता। वाच्यार्थाद् व्यङ्ग्यार्थस्त्वधिकचमत्कारको न भवत्यस्मिन् काव्ये।

---

१- **शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनि-**
**श्चार्वाकैरिव कैश्चिदस्य न पुनः सतापि सम्भाव्यते।**
**कर्तुं लक्षणमक्षमैरयमनिर्वाच्यः परैरुच्यते**
**भाक्तोऽन्यैः समुदीर्यतेऽस्य हि ततो ब्रूमः स्वरूपं वयम्॥**

**(एकावली। १। १३॥)**

२- **काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।**
**केचिद् वाचां स्थितिविषये तत्वमूचुस्तदीयं**
**तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्॥**

**(ध्वन्यालोक। १। १॥)**

पञ्चमोन्मेषे माधुर्यौज:प्रसादगुणानां विवेचनमस्ति। अलङ्कारस्य परिभाषापि च। दण्डि-वामन-भोजराजप्रभृतीनां गुणान् खण्डयता कतिपया दोषाभावा:। अन्ये च गुणान्तर्गता:। तथापरे चान्तर्भावा: प्रदर्शिता:। वैदर्भी पाञ्चाली गौडीरीतयश्च वर्णिता:। षष्ठोन्मेषे प्रमुखदोषा:, यथा-अविमृष्टविधेयांश:-प्रक्रमभङ्ग-अवाच्यवचन-वाच्यावचन-अर्थपौनरुक्त्यादय: सोदाहरणा उपलब्धा:। सप्तमोन्मेषेऽष्टमोन्मेषे च क्रमेण शब्दालङ्कारार्थालङ्कारलक्षणोदाहरणानि प्रदर्शितानि।

एकावल्या: प्रथमोन्मेषे मम्मटकृतकाव्यप्रकाशस्य प्रथमपञ्चमोल्लासान्तिमभागौ, द्वितीयोन्मेषे द्वितीयतृतीयोल्लासौ, तृतीयोन्मेषे चतुर्थोल्लास:, चतुर्थोन्मेषे पञ्चमोल्लास:, पञ्चमोन्मेषे ऽष्टमोल्लास:, षष्ठोन्मेषे सप्तमोल्लास:, सप्तमोन्मेषे षष्ठनवमोल्लासौ, अन्तिमाष्टमोन्मेषे दशमोल्लासोऽन्तर्निहित:। प्रत्येकोन्मेषे कारिकोदाहरणवृत्तय:। कारिका सूत्ररूपे, वृत्तिस्तु व्याख्यारूपे, तथोदाहरणानि पुष्टिरूपे लिखितानि, यानि स्वयमेव विद्याधरेण रचितानि। एवञ्च कलिङ्गनरेशनरसिंहद्वितीयस्य प्रशस्तौ विनिर्मितानि। विद्यानाथेनापि 'प्रतापरुद्रयशोभूषणम्', कविनरसिंहेन 'नञ्जराजयशोभूषणम्' लिखितम्। क्रमेण प्रतापरुद्रस्यैव नञ्जराजनीतिप्रशंसायां लिखितौ ग्रन्थौ स्त:।

एकावलीग्रन्थोल्लेखस्तु मल्लिनाथटीकाग्रन्थेषु यथा -मेघदूत-किरातार्जुनीय-शिशुपालवधेषु। एवञ्च शिङ्गभूपालकृतरसार्णवसुधाकरनामककाव्यशास्त्रेऽस्ति।

'एकावली' नाम त्वप्पय्यदीक्षितस्य चित्रमीमांसाकुवलयानन्दग्रन्थयो:, पर्वतीयपण्डित-विश्वेश्वरकृतालङ्कारकौस्तुभे ग्रन्थे च समुपलब्धम्।

'एकावली' व्यतिरिक्तं डॉ० औफेख्टमहोदयस्य ग्रन्थ सूचीषु विद्याधरस्य द्वितीयरचनोल्लेख: 'केलिरहस्य' ग्रन्थो 'रायलएशियाटिकसोसाइटी', बङ्गप्रदेशस्थग्रन्थालये हस्तलिपिरूपेण (१९०३) ख्रीस्ताब्दे समुपलब्ध:। अस्मिन्नेव ग्रन्थे ईश्वरं प्रति प्रेमभक्तिवर्णनम्। प्रथमपद्यमिदमुद्धृतम्।१ ' ग्रन्थेऽष्टादशपरिच्छेदा:। आकारे तु महानयं ग्रन्थ: प्रतीयते।'

मल्लिनाथेन प्रायो रतिरहस्यस्य नामाङ्कितम्। अस्मिन्नुल्लेख:- 'एतच्छ्री-वैद्य विद्याधरक-विविरचिते केलिरहस्यं समाप्तम्'। वैद्य शब्दस्याधिकोल्लेखेन स्पष्टं यत् सोऽन्यो विद्याधर आसीत्। एकावल्यां कविविद्याधरनामोल्लेख:। वैद्यविद्याधर: कविविद्याधराद्भिन्न:। एक एव नास्ति। अत: कविविद्याधरस्यासाधारणी कृति: 'एकावली' इति।

**समय :**

उत्कलनरेशनरसिंहद्वितीयस्य प्रशस्तौ निर्मितोऽयं ग्रन्थ: 'एकावली'। अनेन ग्रन्थेन परिज्ञायतेऽस्मिन्नेव काले कविविद्याधर आसीत्। यत् सूक्ष्मवर्णनमस्ति ग्रन्थेऽस्मिन्। अत एव कविविद्याधरस्य समयश्चतुर्दश-शताब्द्यामस्ति। कलिङ्गनरेशनरसिंहद्वितीयस्यापि समयोऽयमेव। अष्टौ राजानो बभूवुर्नाम्नोऽस्य। निम्नतालिका प्रसङ्गेऽस्मिन् द्रष्टव्या—

| | | | |
|---|---|---|---|
| १- | नरसिंहदेव: | ख्रैस्ताब्दपूर्वं | (४२१-३०६) |

---

**१- येनाकारि प्रसभमचिरादर्धनारीश्वरत्वं,**
**दग्धेनापि त्रिपुरजयिनो ज्योतिषा चाक्षुषेण।**
**इन्दोर्मित्रं स जयति मुदां वामवामप्रचारो,**
**देव: श्रीमान् भवरसभुजां दैवतं चित्तजन्मा॥**

**—(केलिरहस्य १।१।)**

| | | | |
|---|---|---|---|
| २- | नरसिंहकेशरी | खैस्ताब्द: | (१०१३-१०२४) |
| ३- | लाङ्गुलीयनरसिंह: | तदेव | (१२३६-१२८२) |
| ४- | केशरीनरसिंह: | तदेव | (१२८२-१३०७) |
| ५- | प्रतापनरसिंह: | तदेव | (१३०७-१३२७) |
| ६- | कपिलनरसिंह: | तदेव | (१३२९-१३३०) |
| ७- | नरसिंहजन: | तदेव | (१५४९-१५५०) |
| ८- | नरसिंहदेव: | तदेव | (१६२८-१६५३) |

उत्कलभूभृतां परिज्ञानसम्बन्धे नरसिंहदेवचतुर्थनरसिंहदेवद्वितीययोस्ताम्रपत्रलेखौ क्रमेण १८९५ खीस्ताब्दे 'एशियाटिक-सोसाइटी', बङ्गपत्रिकायाश्चतु:षष्टिखण्डे पञ्चषष्टिखण्डे च प्रथमभागे प्रकाशितौ। लेखेनोपलब्धोत्कलनृपाणां शासनकालोऽधोलिखित:-

| नामानि | शासनवर्षाणि | खैस्ताब्द: |
|---|---|---|
| चोडगङ्ग: | ७० | १०७० |
| कामार्णव: | १० | १०८० |
| राघव: | १५ | १०९५ |
| राजराज: | २५ | ११२० |
| अनङ्गभीमदेव: (प्रथम:) | १० | ११३० |
| राजराज: (द्वितीय:) | १७ | ११४७ |
| अनङ्गभीमदेव: (द्वितीय:) | ३४ | ११८१ |
| नरसिंहदेव: (प्रथम:) | ३३ | १२१४ |
| भानुदेव: (प्रथम:) | १८ | १२३२ |
| नरसिंहदेव: (द्वितीय:) | ३४ | १२६६ |
| भानुदेव: (द्वितीय:) | २४ | १२९० |
| नरसिंहदेव: (तृतीय:) | २४ | १३१४ |
| भानुदेव: (तृतीय:) | २६ | १३४० |
| नरसिंहदेव: (चतुर्थ:) | | —१३९७ |

**'नरसिंह:' इति नाम्ना चतुर्णां राज्ञां समय: प्राप्तलेखानुसारेणाधोलिखित:-**

| | | |
|---|---|---|
| नरसिंहदेव: (प्रथम:) | खैस्ताब्द: | (१२२९-१२६२) |
| नरसिंहदेव: (द्वितीय:) | तदेव | (१२८०-१३१४) |
| नरसिंहदेव: (तृतीय:) | तदेव | (१३३८-१३६२) |
| नरसिंहदेव: (चतुर्थ:) | तदेव | (१३८८-१३९७) |

शिङ्गभूपालकृत'रसार्णवसुधाकरे' एकावलीग्रन्थस्योल्लेखेन ज्ञायते यद् नरसिंहनरेशस्य समयश्चतुर्दशशताब्द्या अन्तिम: समय:, यस्मिन् काले मल्लिनाथेन टीकापि लिखिता। अतो विद्याधरस्य कालस्त्रयोदशशतकस्यान्तिमो भागश्चतुर्दशशतकस्यारम्भश्चासीत्। मिस्टर स्वेलानुसारेण प्रतापनरसिंहनरेशस्य समय: (१३०७-१३२७), स एव कालो विद्याधरकृतैकावल्या:।

मल्लिनाथस्तु भट्टिकाव्यान्यमहाकाव्यानां टीकाकार:। एकावल्यास्तरला टीकाऽपि तेनैव लिखिता। तस्य टीका: सरलाबोधगम्याश्च। मल्लिनाथस्यापि समयश्चतुर्दशशतकस्यान्तिमो भाग:। एवमेव विद्याधरस्य समयो नरसिंहद्वितीयस्योत्कलाधिपतेरवधि:।[१]'

१- मुम्बापुरीस्थराजकीय ग्रन्थशालाधिकारिणा प्रकाशितैकावल्या: प्रथमसंस्करणस्य भूमिकाया: खीस्ताब्दे (१९०३) उद्धृतोऽयमंश:।

**व्यक्तित्वम्**- विद्याधरस्य व्यक्तित्वमुच्चतमम्। यतः स नरेशनरसिंहस्याश्रये पल्लवितो बभूव। पूर्णरूपेणायं महाभागः सर्वमान्यः। विद्याधरस्यासाधारणी कृतिः 'एकावली' एव। एककृतिद्वारेणायं महाभागोऽमरोऽभूत्।

अस्य नाम सदा स्मरणीयम्। विद्याधरेण नरसिंहनरेशः काव्यालङ्कारमीमांसातर्कन्यायादिशास्त्र-व्याकरणागमज्ञः स्वीकृतः। एकावल्याः प्रथमोन्मेषे तर्कपूर्णयुक्तयः। मीमांसायाः पूर्णपण्डितो विद्याधर[1]ः। न्यायप्रणाल्या[2] तर्कोहापोहश्चानेन महात्मनाऽद्वितीयोऽनुपमश्च। साधारणविदुषेऽस्य ग्रन्थस्य टीका दुरूहा। मीमांसकव्याकरणज्ञमल्लिनाथेनास्य ग्रन्थस्य तरलाटीका लिखिता। विद्याधरो व्याकरणज्ञ आसीत्[3]। विद्याधरः शिवोपासकः, उच्चवंशावतंसनरसिंहो राजा, द्वितीयोत्कलनरेशस्य छत्रच्छायायां चतुर्दशशतकस्यारम्भे त्रयोदशशतकस्यान्तिमसमये पल्लवितः पुष्पितश्च बभूव। विद्याधरस्य वैशिष्ट्यमेकावलीत्यनुपमनामकरणम्। अस्मिन्नेव ग्रन्थे पूर्वं पूर्वं प्रत्युत्तरोत्तरोपस्कारकत्वं प्रदर्शितम्। विद्याधरेण स्वरचितान्युदाहरणानि प्रदर्शितानि। अन्यका-व्यशास्त्रज्ञेभ्यो भिन्नवैशिष्ट्यमस्ति महात्मनोऽस्य। अस्य विषये 'कविर्मनीषी परिभूः स्वयंभूः', 'जगत्स्रष्टा' इत्यक्षरशश्चरितार्थः। [4]

---

१- ननु नमस्कारात्मकं यत् कर्म तत् किं शास्त्रस्याङ्गमिति प्रथमत एवं क्रियते प्रधानमिति वा। -------------------------अङ्गतया क्रियमाणमपि संनिपत्योपकारत्वेनेदमभि-मतमारादुपकारकत्वेन वा ? ---------------------- 'अहरहः सन्ध्यामुपासीत' इत्यादिवदस्य नित्यत्वे प्रमाणाभावात्। ---------------------- न द्वितीयः। उपरागे स्नायात् ------------------------- न तृतीयः, पुत्रादिकामनाया अधिकारि-विशेषणाभावेन ग्रन्थारम्भे नमस्कारकरणानुपपत्तेः। (एकावली १ पृ० ३-७।)

२- यत् पुनरनुमानतो नातिरिच्यते ध्वनिरित्याचष्ट महिमभट्टः, तदपि पलालायमानम्। अनुमानस्य चाङ्गं व्याप्तिः। अनया विनाऽनुमानमपि कथङ्कारमात्मानमासादयितुमीशिष्यते। — (एकावली १। पृ० ३२-३५)

३- साक्षादव्यवधानेन। जात्यादिर्जातिगुणक्रियाद्रव्यरूपः। यद्यप्यर्थक्रियाकारितया व्यक्तेरेव प्रवृत्तिनिवृत्तियोग्यता, तथापि व्यक्तीनामानन्त्याद् व्यभिचाराच्च प्रति व्यक्ति न शक्यते सङ्केतः कर्तुमिति जातिरेव विषयः सङ्केतस्य—(एकावली १। पृ० ५५-५६।)

४- कविर्मनीषी परिभूः स्वयंभूः। (शुक्लयजुः संहिता-अ० ४, मं० ८)। अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथा वै रोचते विश्वं तथेदं परिवर्तते॥

(अग्निपुराणम्। अध्यायः ३३९। १०)।

## विषय-सूची पृष्ठसंख्या

# अथ विद्याधरकृतैकावली

## प्रथमोन्मेषः

प्रालेयाचलकन्यकाकुचतटीपत्रावलीशिल्पिनः,
प्रेङ्खद्भालविलोचनानलशिखानिष्पीतचेतोभुवः ।
देवस्येन्दुविभूषणस्य सुचिरं पादारविन्दद्वयं,
युष्मान्पातु सुरासुरेश्वरशिरोरत्नांशुकिञ्जल्कितम् ॥

## एकावलीसरलाटीका

भृगुनाथपाण्डेयोऽहं जिज्ञासूनां विबोधनार्थाय ।
साम्बशिवं नमस्कृत्य रचयाम्येकावलीसरलाम् ॥

## संस्कृतव्याख्या

### प्रथमोन्मेषः

पर्वतराजपुत्र्याः पार्वत्याः स्तनतटे स्तनाग्रभागोपरि पत्रावलीनां निर्मातुः दोलायमानया शिवमस्तकनेत्रज्वालया निर्दग्धकामस्य चन्द्रालङ्कारयुक्तस्य महादेवस्य देवासुरेश्वरशिरोरत्नांशुभिः कर्बुरितं चरणकमलयुगलं सुचिरं वोऽवतु ।

हिन्दी व्याख्या—

मैं भृगुनाथ पाण्डेय सहृदय पाठकों के पूर्णरूपेण ज्ञान करने निमित्त पार्वती सहित शंकर को प्रणाम कर "एकावलीसरलाटीका" की रचना करता हूँ ।

श्री विद्याधर द्वारा रचित 'एकावली' का प्रथम अध्याय प्रारम्भ होता है । कवि विद्याधर शङ्कर की वन्दना करते हैं । हिमालय की पुत्री पार्वतीजी के स्तनों के तट पर चित्र के कलाकार शिव के मस्तक के तृतीय नेत्र की अग्निज्वाला से कामदेव के विनाशक अलङ्कार रूप चन्द्रमा धारण करने वाले महादेव हैं । सुर एवं असुरों के स्वामी के मस्तक के नमन से रत्न किरण द्वारा अलंकृत दोनों शिव के चरण चिरकाल तक तुम्हारी रक्षा करें ।

Ekāvalī Saralā Tīkā—

I, Bhrigu Nath Pandey, saluting Lord śiva along with Pārvatī Compose, the book named 'Ekāvalī Saralā' for complete knowledge of keen readers.

Ekāvalī by Vidyādhara

Chapter I

'śiva is the painter of the nippled breast of Himālaya's daughter; Pārvatī. The third eye on the forehead of 'śiva is the destroyer of Cupid. The moon is an ornament of his head.

ननु नमस्कारात्मकं यत्कर्म तत् किं शास्त्रस्याङ्गमिति प्रथमत एव क्रियते प्रधानमिति वा। अङ्गतयाङ्गीक्रियमाणमपि संनिपत्योपकारकत्वेनेदमभिमतमारादुपकारकत्वेन वा। नादिमः पक्षः। द्वाराभावात्। शास्त्रप्रतिवन्धकदुरितोच्छेद एव द्वारमिति चेन्न। उच्छेद्यस्य सन्देहास्पदत्वेनोच्छेदकानुष्ठानाभावप्रसङ्गात्। नापरः।

---

ननु नमस्कारात्मकं वचनं शास्त्रस्याङ्गमथवा प्रधानम्। अङ्गतया स्वीक्रियमाणमपि मङ्गलाचरणमिदं शास्त्रस्य करणशरीरनिर्वर्तनाङ्गद्रव्यदेवतादिसदृशं यद्वा फलोपकार्यङ्गं प्रयाजादि सदृशमिति तत्र नाद्यः। शास्त्रशरीरस्य शब्दार्थैकनिर्वर्त्यत्वात्। न च द्वितीयः। अन्यस्यानुपलम्भादिति। शास्त्रशरीरस्यानिवृत्तेरित्यर्थः। प्रतिबन्धदुरितानां विनाशाय नमस्कारप्रवृत्तिर्न सम्यगवगम्यते। सन्निपत्योपकारकपक्षं दूषयित्वारादुपकारकपक्षं दूषयति। अनुपपत्तिस्तत्र का।

---

वन्दना के सम्बन्ध में पूर्वपक्ष उपस्थापित करते हुए कवि विद्याधर कहते हैं कि निश्चय ही नमस्कारात्मक जो कर्म है, वह क्या शास्त्र का अङ्ग है ? जो पहले से किया जाता है। अथवा प्रधान है ? अङ्ग रूप से स्वीकार किया जाता हुआ भी प्रत्यक्ष रूप से यह उपकारक अभीष्ट है। सिद्धान्त रूप में प्रथम पक्ष स्वीकार्य नहीं है। द्वाराभाव इसका कारण है। शास्त्र के प्रतिवन्धक पाप का विनाशक अनुष्ठानाभाव का प्रसङ्ग इसमें कारण होता है। दूसरा पक्ष भी नहीं कहा जा सकता।

---

Great Gods and devils bow down at the feet of 'śiva. May his lotus feet protect you for ever.

Let us see how far this prayer chiefly holds validity. 'Sannipatyopkāraka' and Ārādupkāraka are technical terms of the 'Mimānsā' philosophy and mean 'assisting the main action directly, or indirectly.'

'Sannipatayopkāraka' is more powerful than 'Ārādupkāraka.' The first assists directly and the second, indirectly. Both of the injunctions are described. Neither of them is applicable here. This view is acceptable to all the scholars.

Involuntary salutation, in the beginning of work is extraordinary ( Alaukika ); while composition of a work is ordinary ( Laukika ). The relation of principal and the subordinate cannot subsist between the two. Salutation, therefore, can not be indirectly subservient to the composition of a work. Sacrificial rites are either eternal, or causative or desirable. The first rite

अलौकिकस्य नमस्कारस्य लौकिकशास्त्रकर्माङ्गतानुपपत्तेर्ग्राहकग्रहणाभावात् । अथ प्रधानं तर्हि नित्यमिदं नैमित्तिकं काम्यं वा । नाद्यः । अहरहः संध्यामुपासीतेत्यादिवदस्य नित्यत्वे प्रमाणाभावात् । अस्तु वा तथापि सन्ध्यावन्दनादेरिवास्यापि ग्रन्थारम्भे करणीयत्वानुपपत्तेः । न द्वितीयः । उपरागे स्नायादितिवन्नमस्कारं प्रति ग्रन्थस्य निमित्तत्वेनासंकीर्तनात् । समाचारबलादेवमुन्नीयत इति चेन्न ।

---

काव्यशास्त्रनिर्माणं तु रागतः प्राप्तं न विधिप्राप्तम् । लौकिकालौकिकाङ्गताभावाभावे स्वशेषत्वे स्वीकरोति । तेन ग्रहणं स्वीकारस्तदभावात् । अङ्गाङ्गिभावप्रयोजकस्य प्रकरणासंभवेनासंभवादिति । अनङ्गस्य नमस्कारस्यानङ्गिनं शास्त्रारम्भं प्रति नारादुपकारकत्वप्रत्याशापि । त्रिविधेषु नित्यं नैमित्तिकं काम्यं वा प्रधानम् । नादिमः । (यावज्जीवमग्निहोत्रं जुहोतीत्यादिवत् । नित्यत्वे प्रमाणं तस्याभावात् । संध्यावन्दनादिवदेवानुष्ठीयते च नियमे तु शास्त्रारम्भे । तस्मान्न नित्यम् । नापरः, नैमित्तिकं दूषयति । ग्रहणे स्नानं प्रति निमित्तं तथा नमस्कारं प्रति शास्त्रारम्भस्य निमित्तत्ववचनाभावः । शिष्टाचारबलादुन्नेयः ।

---

अलौकिक नमस्कार को लौकिक शास्त्रानुष्ठान रूप कर्म का अङ्ग नहीं माना जा सकता । क्योंकि ग्राहक प्रमाण नहीं है । यदि इसको प्रधान माना जाय तो यह नित्य है । अथवा नैमित्तिक है ? अथवा काम्य है ? इनमें प्रथम पक्ष नहीं हो सकता । अर्थात् नित्य कर्म नहीं है । प्रतिदिन सन्ध्या उपासना आदि के सदृश इसके नित्यत्व में प्रमाण का अभाव कारण है । अथवा इसके होने पर भी सन्ध्या वन्दना आदि के समान इसकी भी ग्रन्थारम्भ में कार्य की सिद्धि नहीं होती है । इसी प्रकार नैमित्तिक भी नहीं है । ग्रहण आदि में स्नान करें । इस प्रकार के नमस्कार के प्रति ग्रन्थ के निमित्त का कथन नहीं होता है । शिष्टाचार बल से इस प्रकार का अनुमान किया जाता है, ऐसी बात नहीं है ।

---

is regularly prescribed and its ommission at the prescribed time Causes sin. vespar is a regular prescription. A sacrificial rite is to be performed on the occurrence of a certain event. Its performance is obligatory; as a bath in eclipses.

A desirable rite is performed with a certain object, for fulfilment of certain desire; as for example, an issueless person wants an issue on performing this rite. Eternal and causative rites are rejected. Desirable rite is applicable here; as the writer wants to complete his work, without any hindrance. Hence the salutation of Lord śiva; the destroyer of all evils.

नैमित्तिकं कर्म समाचारबलादन्यदुन्नेयं किमपि नास्तीति दृष्टान्ताभावात् । न तृतीयः । पुत्रादिकामनाया अधिकारिविशेषणभावेन ग्रन्थारम्भे नमस्कारकारणानुपपत्तेः । प्रतिबन्धकोच्छेदकामनैवाधिकारिविशेषणत्वमस्त्विति चेन्न । प्रतिबन्धकसन्देहे त्वधिकारिसन्देह इति नमस्काराचरणप्रवृत्यभावप्रसङ्गात् । अत्रोच्यते । काम्यमेवेदं कर्म । ग्रन्थसमाप्तिकामनैवाधिकारिविशेषणम् । तत्र न काचिदनुपपत्तिरिति नीतिनेत्राचार्याः ।

---

शिष्टाचारबलादपि नैमित्तिकं कर्म नास्ति यदनुमेयः । तत्र दृष्टान्ताभावः । न तु काम्यम् । पुत्रादिकामनयाधिकारिविशेषणभावेन ग्रन्थस्यारम्भे नमस्कारं प्रत्यनुपपत्तिः । विघ्नविनाशेच्छैवाधिकारिविशेषणमित्यपि नास्ति । विघ्नसन्देहे त्वधिकारिसन्देहः । नमस्काराचरणप्रवृत्तेरभावप्रसङ्गः तत्र कारणम् । अतः काम्यमिदं कर्म । ग्रन्थसमाप्तिकामनैवाधिकारिविशेषणम् । नीतिनिर्देशकाचार्याणां मतम् । तत्र न काचिदनुपपत्तिः ।

---

शिष्टाचार बल से कोई भी नैमित्तिक कर्म ऐसा नहीं है, जो अनुमेय हो । इसमें दृष्टान्त का अभाव कारण है । तीसरा पक्ष भी नहीं हो सकता । पुत्र आदि कामना से अधिकारी के अभाव से ग्रन्थ के आरम्भ में नमस्कार करने में सिद्धि नहीं मानी जाती । विघ्न विनाश की इच्छा ही अधिकारी का विशेषण हो, तो ऐसा भी नहीं है । विघ्न सन्देह में तो अधिकारी का सन्देह है । इसमें नमस्कार आचरण प्रवृत्ति के अभाव का प्रसङ्ग कारण है । अब सिद्धान्त का प्रतिपादन करते हैं । यहाँ कहा गया है । काम्य ही यह कर्म है । ग्रन्थ की समाप्ति कामना ही अधिकारी विशेषण है । इसमें कोई अनुपपत्ति नहीं है । ऐसा नीतिनिर्देशक आचार्यों का मत है ।

---

By using the word ( you ); in his salutation, the poet—vidyādhara Invokes Lord 'śiva's blessings not only for the success of his own work; but also of the readers and critics who will enjoy and appreciate it. Protection is possible by the destruction of any obstacle. This is possible only through the salutation of God.

The contradiction of two sentiments of love and anger in first and second lines respectively is removed by the interposition of sentiment of wonder in the divine love of Lord 'śiva for Goddess; Pārvatī.

अयं च ग्रन्थकारः स्वयं भगवतश्चन्द्रचूडामणेः प्रणामेन कलयन्नपि कृतार्थतामात्मनो व्याख्यातृश्रोतृणामपि निर्विघ्नव्याख्यानश्रवणसम्पत्समासादनं समुचिताशीः प्रकाशनद्वारा परमेश्वरस्य सामुख्यं दर्शयन्नाह। युष्मानिति। व्याख्यातृश्रोतॄन्। एषामेवात्र सम्बोधनयोग्यत्वात् सम्बोधनप्रधानत्वाच्च युष्मदर्थस्य। अभिलषितफलवितरणप्रवणत्वमत्र त्राणमभिमतम्। एतस्य च प्रत्यूहशमनेनैव सिद्धिः। तच्चाभिमतदेवतानमस्कारजन्मना परमपुण्येन भवति। किंचात्र कामिनोऽपि कामरिपोरिति विरोधो ध्वन्यते।

---

अयं विद्याधरः स्वयं भगवन्तं शिवं नमस्कुर्वन्नात्मानं कृतार्थं मन्वानोऽपि व्याख्यातॄन् श्रोतॄनपि निर्विघ्नरूपेण व्याख्यानसम्पत्रूपसमुचिताशीः प्रकाशनद्वारेण तेभ्योऽपि शङ्करस्यानुकूल्यं द्योतयन् कथयति 'युष्मानिति'। अर्थात् शिवो व्याख्यातॄन्श्रोतॄँश्चावतु। एतेषामेवात्र सम्बोधनयोग्यता। यतः 'युष्मद्' पदस्यार्थः सम्बोधनप्रधानरूपोऽस्ति। इच्छितफलवितरणभूयस्त्वमिह रक्षणरूपं स्वीकरोति। रक्षणस्य सिद्धिश्च विघ्नोपशमनेनैव शक्यते। तथा सो विघ्नोपशमोऽभीष्टदेवस्य प्रणामेन जनितपुण्येन संभाव्यते। अत्र शङ्करमेव कामिनं कामरिपुञ्च द्वाभ्यामर्थाभ्यां संयोज्य विरोधालङ्कारः स्पष्टरूपेण व्यङ्ग्यः।

---

और यह ग्रन्थकार ( विद्याधर ) स्वयं भगवान् शंकर को प्रणाम करने से अपने को सफल मानते हुए भी व्याख्याता एवं श्रोताओं को भी विघ्न रहित व्याख्यान सम्पत्ति रूप समुचित आशीर्वाद-प्राप्ति प्रकाशन द्वारा उनके लिए भी शिव की अनुकूलता द्योतित करते हुए कहते हैं कि 'युष्मानिति'। अर्थात् शिवजी व्याख्याता एवं श्रोताओं की रक्षा करें। इन्हीं की सम्बोधन योग्यता है। क्योंकि ( युष्मद् ) पद का अर्थ सम्बोधन प्रधान होता है। इच्छित फल वितरण की अधिकता यहाँ 'रक्षण' रूप में स्वीकार किया गया है। और रक्षण की सिद्धि विघ्न शान्ति से ही हो सकती है। तथा वह विघ्नशान्ति अभीष्ट देवता के नमस्कार से उत्पन्न पुण्य से संभव है। यहाँ पर शिव को ही कामी एवं कामरिपु रूप दो अर्थों से युक्त करने से विरोधालङ्कार स्पष्ट व्यङ्ग्य है।

---

This salutation with love and a devoted heart is the reason, otherwise salutation will be ridiculous.

According to vidyādhara; Poetry is not mere versification and rhyming free from technical forms; but something more enshrining deeply felt emotions and sublime thoughts and he cites (Vilhaṇa) in support of his view of the excellence of Poetry.

तेन लोकोत्तरं चरितमस्य ज्ञातुं न शक्यत इति वस्तु । तेन चाद्भुतरूपेण मध्यनिविशितेन शृंङ्गाररौद्रयोर्नैरन्तर्यकृतविशेषपरिहारः । देव्यां देवस्य रतेरुपनिबन्धाद् सम्भोगात्मा शृङ्गारः । देवताविषयारतिरितिभावश्च । तथाविधभक्तिश्रद्धाभरविधुरान्तःकरणतयैव नमस्कृतेः कृतत्वात् । अन्यथोपहासादावपि नमस्कारः संभवति ।

यथा— बिन्दुद्वन्दतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं,
कर्मेतिक्रमशिक्षितान्वयकलाये केऽपि तेभ्योऽञ्जलिः ।
ये तुग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरामुल्लेखैः
कवयन्ति विल्हणकविस्तेष्वेव संनह्यति ॥२॥

---

अनेन भगवतो भूतभावनस्य लोकोत्तरचरितरूपो वस्तुध्वनिः । ध्वनितेनानेन वस्तुना शृंङ्गाररौद्ररसयोर्मध्येऽद्भुतरसस्य संन्निवेशेन शृंङ्गाररौद्रगतनैरन्तर्यदोषस्य परिहारो भविष्यति । देव्यां शैलजायां भगवतः शङ्करस्य रतिः संयोगशृंगारं द्योतयन् प्रधानत्वेन कविनिष्ठभगवद्विषयकरतौ भावे शृंगारोऽङ्गम् । तेन प्रकारेण भक्तिश्रद्धोपेतेनान्तःकरणेनैव नमस्करणं कारणम् । अन्यथोपहासादिष्वपि नमस्कारस्य संभावना भविष्यति । यथा—

यः कविः विसर्गयुक्तकवितां करोति । यस्य कर्म चानुस्वारस्य प्रयोगः काव्ये । एवञ्च काव्यकरणेऽन्वायार्थकरणकलायुक्तान् कवीन् प्रति नमस्कारः । यः कविर्ग्रन्थेषु सहस्रशाणकषणदोषविमुक्तगिरमुल्लेखैः कवयति; विल्हणकविस्तानेव नमति ।

---

इससे भगवान् शङ्कर की लोकोत्तर चरितरूपी वस्तु ध्वनित होती है । ध्वनित इस वस्तु से शृङ्गार और रौद्र रसों के मध्य अद्भुत रस का सन्निवेश हो जाने से शृङ्गार तथा रौद्रगत नैरन्तर्य दोष का परिहार हो जायेगा । पार्वती में भगवान् शङ्कर की रति अभिव्यक्त होने से संयोग शृङ्गार अभिव्यक्त होकर कविनिष्ठ भगवद् विषयक रति की प्रधानता होने से भाव में शृंगार अङ्ग है । उसी प्रकार भक्ति एवं श्रद्धा से युक्त अन्तःकरण से ही नमस्कार करना कारण होता है । अन्यथा उपहास आदि में भी नमस्कार की सम्भावना होगी । उदाहरणार्थ—'जो कवि दो विन्दुओं, अर्थात् विसर्ग को आगे रखने वाली कविता करते हैं और जिनका कार्य केवल ऊपर विन्दु अर्थात् अनुस्वार रखना है । इसी प्रकार के काव्य करने, अन्वय एवं अर्थ करने की कला वाले कवियों के प्रति नमस्कार है । जो कवि ग्रन्थ में हजारों कसौटी पर कसने से दोषों से रहित वाणी के उल्लेखन से कविता करते हैं; विल्हण कवि उन्हीं को नमन करता है ।

---

The purport of salutation is helped by the suggestion of the emotion, being helped by three fold suggestions of matter, sentiment and figure; known as "fusion of suggestion."

परमेश्वरः पुनरिह न परमभिमतदैवतमपि तु समुचितमपि भवति। निखिल-भुवननिर्माणकर्मठस्य भगवतः श्रीकण्ठस्य ग्रन्थनिर्माणावसरे नमस्कर्तुमुचितत्वात्। किं चात्र वाक्यार्थीभूतत्वाद्विश्रान्तिधामत्वेन प्राधान्यमुपेयुषो भावध्वनेर्वस्त्वलङ्कारसध्वनिभिः सहास्त्येवोपस्कार्योपस्काकारकभावेन संकर इति त्रिविधोऽपि सूचित एव ध्वनिः॥

पाणिनिप्रमुखैस्तैस्तैः सर्वशास्त्रविशारदैः।
इह तावत् त्रिधा शास्त्रमभ्यधीयत तत्र च ॥३॥
शब्दप्रधानं वेदाख्यं प्रभुसंमितमुच्यते।
ईषत्पाठान्यथापाठे प्रत्यवायस्य दर्शनात् ॥४॥

---

परमेश्वरः शिवः पुनरिह परमाभिमत एव नास्ति, अपितु समुचितेष्टदेवोऽप्यस्ति। सम्पूर्णपृथिव्याः निर्माणकर्तारं भगवन्तं श्रीकण्ठशंकरं प्रति ग्रन्थनिर्माणावसरे नमनमुचितम्। किं चेह वाक्यार्थीभूतत्वात् विश्रामे प्रधानत्वस्य प्राप्तिः? भावध्वनेर्वस्त्वलाङ्कारसध्वनिभिः सहोपस्कार्योपस्कारकभावेन संकरालङ्कारो भवति। एवं त्रयो ध्वनयः संसूच्यन्ते। सम्पूर्णशास्त्रपारंगतैः पाणिनिप्रमुखैः शास्त्रविषये त्रयो विभागाः कथ्यन्ते। शब्दप्रधानकाव्येषु वेदनामकशास्त्रं यदपौरुषेयं प्रभुसम्मितञ्च भवति। ईषत् पाठेनाथवान्यथापाठेन च प्रत्यवायो भवति।

---

परमेश्वर शिवजी पुनः यहाँ परम अभिमत ही नहीं अपितु समुचित इष्टदेव भी हैं। सम्पूर्ण पृथ्वी के निर्माणकर्ता भगवान श्रीकण्ठ शंकर को ग्रन्थ रचने के समय नमस्कार करना उचित है। और यहाँ वाक्यार्थीभूत होने से इसी में विश्राम करना प्रधानता की प्राप्ति है। वही भावध्वनि का वस्तु एवं अलंकार तथा रस ध्वनियों के साथ ही उपस्कार्य उपस्कारक भाव से संकर अलंकार होता है। इस प्रकार की तीन प्रकार की ध्वनियाँ सूचित होती हैं।

सम्पूर्ण शास्त्रों के पण्डित प्रमुख पाणिनि आदि द्वारा शास्त्रों के विषय में तीन विभाग कहा गया है। शब्द प्रधान वेद नामक शास्त्र है। जो अपौरुषेय एवं प्रभुसम्मित कहा जाता है। थोड़ा पाठ अथवा गड़बड़ पाठ करने में विघ्न देखना पड़ता है।

---

The learned people of olden times like Pāṇini and others have classified (śastras) as under.

1. Those in which the spoken word is an authoritative and any change in the word or its order is prohibited; because such changes are supposed to fail to give the desired result and might lead also to some evil. These are injunctive in nature e. g. the vedas.

इतिहासादिकं शास्त्रं मित्रसंमितमुच्यते ।
अस्यार्थवादरूपत्वात् कथ्यतेऽर्थप्रधानता ।।५।।
ध्वनिप्रधानं काव्यंतु कान्तासंमितमीरितम् ।
शब्दार्थौ गुणतां नीत्वा व्यंजनप्रवणं यतः ।।६।।
एष विद्याधरस्तेषु कान्तासंमितलक्षणम् ।
करोमि नरसिंहस्य चाटुश्लोकानुदाहरन् ।।७।।
अन्तरेण नरसिंहभूपतिं नेतरोऽस्ति मम वाङ्मयोचितः ।
चन्द्रचूडमपहाय जाह्नवीवारि—वोढुमपरः क ईश्वरः ।।८।।

---

इतिहासादिशास्त्रं मित्रसंमितमुच्यते । अर्थवादरूपत्वादिदं शास्त्रमर्थप्रधानम् । ध्वनिप्रधानं काव्यं कान्तासम्मितमभिमतम् । शब्दार्थौ गुणीभूतौ यत्र, व्यंजनाबाहुल्यं तत्र भवति । एष कविषु विद्याधरनामा कविरयं कान्तासम्मितं काव्यं रचयति । यस्मिन् नरसिंहभूपतेः चाटुश्लोकाः दृश्यन्ते । नरसिंहनरपतिं विना न कोऽपि जनोऽन्यो मम वाङ्मयस्य मूल्याङ्कनकर्ता । आश्रयदाता वा नास्ति । यथा शिवं विहाय न कोऽपि देवो यो गङ्गाजलधारां धारयितुं क्षमेत ।

---

इतिहास आदि शास्त्र मित्रसम्मित कहा जाता है । इस शास्त्रको अर्थवाद रूप होने के कारण अर्थप्रधान कहा जाता है । ध्वनि प्रधान तो काव्य होता है, जो कान्ता सम्मित कहा गया है । शब्द अर्थ दोनों को गुणीभूत(अप्रधान) बनाकर जिससे व्यंजना का बाहुल्य होता है । इन कवियों में यह विद्याधर नामक कवि कान्ता सम्मित लक्षण से युक्त काव्य की रचना करता है, जिसमें नरसिंह भूपति के बिना कोई दूसरा राजा नहीं है, जो मेरे इस वाङ्मय का मूल्याङ्कन कर सके अथवा आश्रय प्रदान करे । शंकर को छोड़कर कोई दूसरा देव गंगाजल धारा को धारण करने में असमर्थ है ।

---

2. Those in which change of word and its order is allowed, because in this type of (śastras); the element of meaning is predominant, so that the words employed in giving that meaning are not supposed to leave to any evil. Under this category come (śastras) like Mahābhārata etc.

3. The third type is that in which both word and meaning are unimportant, because the object of these (śastras) is to give out some suggested meaning, whieh is of primary importance. Under this category come the (kāvyas); poetry. Vidyādhara proposes to compose this third type of (sāstras) and in this he seeks to describe the great qualities of Narsingha's lofty character; because in his times none of the kings in Vidyādhara's opinion was so great as Narsingha.

विश्वोल्लङ्घनजाङ्घिकीं वितनुते कीर्तिं विधत्ते श्रियं
हेलाधिक्कृतयक्षराजविभवां चिन्ताकरं हन्त्यघम् ।
दुग्धे स्वादुतरान् रसान् वितरति स्फारं–
कलाकौशलं काव्यं निर्वृतिमावहत्यपि परिस्पन्दापहं चेतसः ॥९॥

कवयत इति कविस्तस्य कर्म काव्यं तच्चार्थाद्वर्णनात्मकम् । यदुक्तम्—

शाणोत्कीर्णमिवोज्वलद्युतिपदं बन्धोऽर्धनारीश्वर-श्लाघालङ्घन-
जाङ्घिको दिवि लतोद्भिन्नेव चार्थोद्गतिः ।
किञ्चित् पीडितचन्द्रमण्डलगलत्पीयूषहृद्यो रसः,
तत् किञ्चित् कविकर्ममर्म न पुनर्वाग्डिण्डिमाडम्बरः ॥१०॥

कृत्वा काव्यमवाप विश्वमहितां कीर्तिं कविग्रामणीः,
श्रीहर्षः श्रियमद्भुतां हरिहरो लेभेऽर्जुनक्ष्माभुजः ।
मृत्योस्त्रासमपाचकार मलयक्ष्मामण्डलाखण्डल-स्तत्
किञ्चिन्न विलोक्यते न किल यत् काव्यात् समुन्मीलति ॥११॥

---

विश्वोल्लङ्घनकरं यशः काव्येन भवति । यक्षराजमप्यभिभूयमानं धनं कवितयैव सम्भवति । काव्यं चिन्तां विनाशयति । पापं दूरीकरोति । स्वादुतरान् रसान् वितरति । कलाकौशलं प्रदर्शयंश्च हृदयमाह्लादयति । यः कवयति सः कविः । तस्य कर्म काव्यं भवति । अर्थात् वर्णनात्मकं भवति । यदुक्तम्—

काव्यं शाणोत्कीर्णं सदृशमुज्ज्वलं द्युतिपरिप्लुतं पदसंघटनं विद्युल्लतेवार्थं स्फुरति । किञ्चित् पीडितहृदयं हर्षेण प्रियतरं करोति । कवेः कार्यं रहस्यमयमिदम् । वागाडम्बरोऽयं नास्ति । कविषु श्रेष्ठः कविः जगति काव्येनापारं यशः प्राप्नोति । श्रीहर्षोऽद्भुतं वैभवं प्राप्तवान् । हरिहरोऽपि लेभे । अर्जुनराजा मृत्युकष्टाद् विमुक्तः । यः यक्ष्मासदृशेण रोगेण प्रपीडितः । निखिलभुवने यद् दृश्यते, तस्योन्मीलनं प्रकटीकरणञ्चानेन काव्येनैव सम्भवति ॥

---

काव्य के द्वारा संसारातिशायी यश प्राप्त होता है । कुबेर को अभिभूत करने वाला वैभव वा कविता से ही संभव होता है । काव्य चिन्ता दूर करता है । पाप का नाश करता है । आस्वाद्य रसों को प्रदान करता है । कला कौशल को प्रदर्शित करता हुआ चित्त को आनन्दित करता है ।

जो कविता करता है, उसे कवि कहते हैं । उसका कर्म काव्य होता है । अर्थात् वह वर्णनात्मक होता है । जैसा कहा गया है—कविता कसौटी पर कसी, समान रूप से उज्ज्वल द्युतियुक्त पद संघटना विद्युत् लता के समान अर्थ को प्रकाशित करती है । कुछ पीडित हृदयों को हर्ष से प्रिय बनाती है । यह कवि का कार्य रहस्यमय है । यह वागाडम्बर नहीं है । कवियों में श्रेष्ठ कवि विश्व में काव्य

प्रतिभा बहुशास्त्रदर्शिता बहुधा काव्यविदां च शिक्षया ।
मुहुरभ्यसनं मनीषिभिः कथितं कारणमस्य संभवे ॥१२॥

शब्दार्थगुणालङ्काराः प्रतिभान्त्यनयेति प्रतिभाशक्तिः यया विना काव्यं कर्त्तुमेव न क्षमते कविः कुर्वन् वा हास्यास्पदं भवति । अकवितैव वरं कुकवितायाः । कुकविता हि कायानपेतमनस्कं मरणम् । बहुशास्त्रदर्शिताव्युत्पत्तिः । सर्वपथीनाः खलु कवयो भवन्ति । प्रतिभायाः प्रागुपादानं व्युत्पत्त्यपेक्षया प्राधान्यद्योतनाय व्युत्पत्तिमान्द्याविर्भूतदोषापाकरणाय प्रभविष्णुत्वात् प्रतिभायाः । काव्यं कर्तुं विदन्ति विन्दत इति काव्यविदः कवयः सहृदयाश्च वेति विन्दत्योरावृत्याग्रहणात् परिस्फुरतः प्रकृतिश्लेषस्य महिम्नाभिधीयन्ते ।

---

प्रतिभा नाम बहुशास्त्रदर्शिता सा खलु काव्यविदां शिक्षया संजायते । पुनश्च शास्त्राभ्यसनमित्येतत् समुदितं काव्योत्पत्तौ कारणमाख्यातम् । हेतवो विद्वद्भिः कथिताः शब्दार्थगुणालंकाराः काव्ये भवन्ति । प्रतिभा सा शक्तिः, यया विना कविः काव्यसर्जनेऽसमर्थो भवति । तस्या अभावे काव्यसर्जने हास्यतां याति । कुकविताकरणापेक्षया कवितायाा अकरणमेव वरम् । कुकवितामरणसदृशी दुःखदायिनी । शास्त्रयुक्तव्युत्पत्तिः समस्तलोकवेदादिमार्गान् प्रापयति । प्रतिभा व्युत्पत्त्यपेक्षया श्रेष्ठा । अतः प्रतिभाया गणना प्राथम्येन कृता । काव्यकरणे ज्ञानवान् विचारशीलः कविः सहृदयहृदयाह्लादकारी भवति ।

---

द्वारा विशद कीर्ति प्राप्त करता है । श्री हर्ष अद्भुत श्री प्राप्त किए । हरिहर ने भी इसे प्राप्त किया । अर्जुन राजा के मृत्यु के कष्ट दूर हो गए । जो यक्ष्मा जैसे रोग से पीडित थे । सम्पूर्ण पृथ्वी पर जो कुछ दिखाई पड़ता है, उन सभी का उन्मीलन एवं प्रकटीकरण इस काव्य से ही सम्भावित है ।

प्रतिभा शास्त्रों से होती है और वह काव्यविदों की शिक्षा से उत्पन्न होती है । काव्य की उत्पत्ति में शास्त्राभ्यास कारण होता है । शब्दार्थ गुण अलङ्कार आदि काव्य में होते हैं । प्रतिभा वह शास्त्र है, जिसके बिना कवि कविता करने में समर्थ नहीं होता है और उसके अभाव में काव्य सृजन करने पर हास्यता को प्राप्त होता है । कुकविता से कविता न करना श्रेयस्कर है । कुकविता मरण समान दुःखदायिनी होती है । शास्त्रों से युक्त व्युत्पत्ति समस्त लोक वेदादि मार्गों की प्राप्ति कराती है । व्युत्पत्ति से प्रतिभा श्रेष्ठ है । अतः प्रतिभा की गणना पहले की गई है । काव्य करने में ज्ञान एवं विचार रखने वाला कवि और अधिक सहृदय होता है ।

---

Dealing with the object of the poetry, Vidyādhara says that it leads to the acqusition of wealth, sets the poet and the reader of poetry free from anxiety and sins. It also introduces the poet and the students of poetry to the techniques of different arts and yields

तेषां हि शिक्षया काव्यकरणविचारयोरविच्छेदेन परिशीलनमभ्यासः। अनवरत-मभ्यस्यतामेव कवीनां वाक्यानि पाकमासादयन्ति ॥

पाकस्तु रसोचितशब्दार्थनिबन्धनम्। श्रवणसुधास्यन्दिनी पदव्युत्पत्तिः पाक इत्यन्ये। पदानां परिवृत्तिवैमुख्यं पाक इत्यपरे ॥

शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायिध्वनिश्चार्वा—
कैरिव कैश्चिदस्य न पुनः सत्तापि संभाव्यते।
कर्तुं लक्षणमक्षमैरयमनिर्वाच्यः परैरुच्यते
भाक्तोऽन्यैः समुदीर्यतेऽस्य हि ततो ब्रूमः स्वरूपं वयम् ॥१३॥

---

शिक्षया काव्यविचारेषु चाभिन्नपरिशीलनमभ्यासः काव्यस्य तृतीयो हेतुः। सततमभ्यासं कुर्वतां कवीनां वाक्येषु परिपाको जायते। को नाम पाक इति जिज्ञासायामुच्यते—पाकस्त्विति। शृङ्गारादिरसानुगुण्येण शब्दार्थप्रयोगौचित्य-मिति तदाकूतम्। अपरेषां मते तु श्रवणामृतप्रवाहयुक्तपदव्युत्पत्तिः पाकोऽस्ति। अन्ये तु कथयन्ति। यत्पदानां परिवृत्तिवैमुख्यं पाको भवति। काव्यस्य शरीरं शब्दार्थौ! बुधैः काव्यस्यात्माध्वनिरिति कथ्यते। चार्वाकदार्शनिकानां समानैः कतिपयैः काव्यशास्त्रमर्मज्ञैर्ध्वनिसत्तापि न संभाव्यते मन्यते चेति। काव्यलक्षणकरणेऽसमर्थैः कतिपयैः काव्यशास्त्रमर्मज्ञैर्ध्वनिरयमनिर्वाच्यः कथितः। अन्ये तु लाक्षणिकमिति ब्रुवते। वयं काव्यस्वरूपमेवंविधं ब्रूमः।

---

उनकी शिक्षा से काव्य करने एवं विचारों में अभिन्न परिशीलन अभ्यास काव्य का तीसरा हेतु है। कवियों के अनवरत अभ्यास करने से वह पाक युक्त हो जाता है। रसोचित निबन्धन को पाक कहते हैं। श्रवण को अमृत लगने वाला पद व्युत्पत्ति है। कुछ लोग इसी को पाक की संज्ञा देते हैं। पदों की परिवृत्ति वैमुख्य पाक है। इसे दूसरे लोग भी मानते हैं। काव्य का शरीर शब्द और अर्थ दोनों हैं। बुद्धिमानों द्वारा काव्य की आत्मा को ध्वनिकी संज्ञा दी गई है। चार्वाक जैसे दार्शनिकों के समान कतिपय काव्यशास्त्रज्ञों द्वारा ध्वनि की संज्ञा भी संभावित नहीं मानी गई है। काव्य के लक्षण करने में असमर्थ कुछ काव्यशास्त्रमर्मज्ञों ने ध्वनि को अनिर्वाच्य बताया है। अन्य विद्वान् ध्वनि को लाक्षणिक कहते हैं। अब हम काव्य का स्वरूप बता रहे हैं :—

---

to both the highest amount of artistic pleasure. The composition of a poet must give evidence of his dexterity in the selection and ordering of words, so that they suggest the loftiest meaning and also enthrills by the beauty of their music.

Speaking about the means by which composition of poetry is possible, Vidyādhara enumerates the following. Intution, mastery of numerous branches of learning, a training obtained under the

शब्दार्थवपुस्तावत् काव्यं वपुषि च केनाप्यात्मना भवितव्यमात्मा च ध्वनिरेव तस्य चाभावं मन्यमाना लोकायतिका इव केचन नास्ति ध्वनिरित्याचक्षते। अपरे तु वाग्गोचरतामवतारयितुमयं न शक्यते इति ब्रुवते। अन्ये तु भाक्तमेनं भाषन्ते। तदेवमुपस्थितासु तिसृषु विमतिषु समयमपेक्षमाणस्य शब्दस्यार्थबोधकत्वमिति न विचारितरमणीया वाच्याद्व्यतिरिच्यमानता प्रतीयमानस्येति मन्वानानभाववादिनः प्रति प्रथमं वदामः। ननु ध्वनिर्नास्तीति प्रतिज्ञाविरोधः। ध्वनिरित्यनेन विधिर्नास्तीत्यनेन च निषेधस्तयोश्च परस्परविरुद्धयोरेकस्मिन् धर्मिणि तिमिरातपयोरिव सहानवस्थानदुःस्थयोरेव निवारित्वात्।

---

काव्यस्यात्मभूतं यत् तत्वं तत् पण्डिताः ध्वनिं कथयन्ति, कतिपयैर्विद्वद्भिस्तस्याभावो मन्यते। अन्ये च तं गौणं लक्षणागम्यं वदन्ति। अपरे च मनीषिणो ध्वनिरहस्यं-वाणीविषयतामानेतुमशक्यमिति ब्रुवन्ति। इह तु त्रिषु मतेषु वर्तमानेषु समयमपेक्षमाणस्य शब्दार्थबोधकत्वमिति प्रतीयमानस्य वाच्याद्व्यतिरिच्यमानता वा विचारितरमणीया नास्तीति येऽभाववादिनो मन्यन्ते तान् प्रति प्रथमं ब्रूमः। एषामभाववादीनां प्रथमः पक्षः सम्प्रत्युपस्थाप्यते। काव्ये नास्ति ध्वनिरिति प्रतिज्ञाविरोधोऽस्त्यस्मिन्। 'ध्वनि' इत्युक्त्या विधिर्गम्यते. नास्तीत्युक्त्या निषेधः। एतयोर्द्वयोर्विधिनिषेधयोः परस्परविरोधयोरेकस्मिन् धर्मेऽन्धकारप्रकाशयोरिवानवस्थानदुःस्थितेर्निवारणं भवति।

---

काव्य के आत्मभूत जिस-जिस तत्वको पण्डितों द्वारा ध्वनि कहा गया है, कुछ लोग उसका अभाव मानते हैं। दूसरे लोग उसे लक्षणागम्य कहते हैं और कुछ लोग उसके रहस्य को वाणी विषयता में लाने में अनिर्वचनीय बताते हैं। यहाँ तीन विभिन्न मत उपस्थित हैं। शब्द के अर्थबोधक तत्व को प्रतीयमान के वाच्य से अतिरिक्त जो अभाव मानते हैं। इन अभाववादियों का प्रथम पक्ष अब कहते हैं। काव्य में ध्वनि नहीं हैं; इसमें प्रतिज्ञा विरोध होता है। ध्वनि से विधि है; ध्वनि न होने से निषेध है। इन दोनों के विधि निषेध के परस्पर विरोध में एक धर्म में अन्धकार और प्रकाश के समान अनवस्थान दुःस्थिति का निवारण हो जाता है।

---

guidance of master—minds and intensive practice. Of these, intution is taken to be best of all means, because a person devoid of this faculty utterly fails to compose poetry and if he does; his composition becomes lifeless and ridiculous; Without intution a poet fails to breathe life into his sclection of words; meanings; (Guṇas) properties or virtues of lucidity; tenderness, eloquence and rhetorical embellishment suitable for the object described.

Other means are merely aids to this intutive faculty. Therefore, the number of means leading to the composition of poetry is just one and not many i. e. (Intution)

न चात्र विरोधपरिहारप्रयोजकयोः देशकालयोरन्यतरस्याप्युपादानमस्ति येन विरोधः समाधीयते। किं च प्रतीतः प्रतिषिध्यते ध्वनिरप्रतीतो वा। आद्येऽपि क्वचिन्नास्ति क्वचिदपि नास्तीति वा। प्रथमे सिद्धसाधनम्। अस्माभिरपि ध्वनेः क्वाचित्कनिषेधप्रतियोगित्वस्याभ्युपगतत्वात्। न द्वितीयः। प्रतीतस्य सार्वत्रिकनिषेध प्रतियोगित्वे व्याघातात्। अप्रतीतेश्चेन्न। प्रतियोगिप्रतीतेः प्रतिषेधं प्रति कारणत्वात्। अथ लब्धसत्ताक एव ध्वनिस्तथापि यदि न करोति काव्यस्य कामनीयकं तर्हि किमनेनाजागलस्तनायमानेन। उतस्वित् करोति तर्हि गुणालंकारान्तर्भूत एव।

---

अत्र विरोधपरिहारस्य प्रयोजनयोर्देशकालयोरन्यतरस्याप्युपादानमस्ति। येन विरोधस्य समाधानं भवति। किं चात्र प्रतीतस्य ध्वनेः प्रतिषेधः। अप्रतीतस्य तस्य वा? प्रथमे सिद्धसाध्यम्। अस्माभिरपि ध्वनेः क्वचित् निषेधः। प्रतियोगित्वस्याभ्युपगमनं तत्र कारणम्। न द्वितीयः। प्रतीतस्य समस्तस्थलेषु निषेधप्रतियोगित्वस्य व्याघातो भवति। इति तु यदि कथ्यतेऽप्रतीतोऽयमपि नास्ति। प्रतियोगित्वस्य प्रतीतेः प्रतिषेधस्य कारणम्।

अथ प्राप्तसत्ताक एव ध्वनिः। तथापि यदि नायं काव्यस्य सौन्दर्यं वर्धयति तर्हि अजागलस्तन इव निरर्थको भवति। उतस्विद् ध्वनिः काव्यकामनीयकं करोति तर्हि गुणालङ्कारान्तर्गत एव।

---

इसमें यहाँ विरोध एवं परिहार के प्रयोजन के देश और काल दोनों का भी उपादान कारण होता है, जिससे विरोध का समाधान होता है। और क्या प्रतीत ध्वनि का प्रतिषेध होता है? अथवा ध्वनि अप्रतीत है? प्रथम में सिद्ध साधन है? हम लोगों के द्वारा भी ध्वनि का कहीं निषेध होता है। प्रतियोगित्व का आगमन कारण होता है। इस प्रकार दूसरा नहीं है। प्रतीत के सभी स्थानों पर निषेध के प्रतियोगी का व्याघात होता है। यह कहा जाय कि अप्रतीत है, तो ऐसा नहीं है। प्रतियोगित्व के प्रतीत के प्रतिषेध का कारण होता है।

प्राप्त सत्ता ही ध्वनि है, इसपर भी यदि काव्य की सुन्दरता नहीं होती है; तो बकरी के गले में उत्पन्न स्तन के समान निरर्थक है। अथवा ध्वनि काव्य को सुन्दर बनाता है, तो गुण और अलङ्कार के अन्तर्गत ही होता है।

---

If a poet is gifted with the highest amount of intutive faculty; he will be able to employ; only such words and meanings as can appropriately suggest the sentiment that must suffuse every context that is sought to be described. This suggestion of the proper sentiment with the help of appropriate meanings called (Pāk) in sanskrit. Word and meaning are the body of poetry and the predominance of suggestion is its soul.

तथाविधस्य च नामान्तरकरणे नैपुणं कियन्नाम । अत्रानुमानमपि । ध्वनिर्गुणालङ्कारेभ्यो न व्यतिरिच्यते । चारुताहेतुत्वात् । यदेभ्यो व्यतिरिच्यते न तच्चारुताहेतुः । अविमृष्टविधेयांशादिदोषवत् । चारुताहेतुश्च ध्वनिः । ततो न व्यतिरिच्यते तेभ्य इति । ननु गुणालङ्कारव्यतिरिक्ता अपि रीतयो वृत्तयश्च यथा चारुताहेतवस्तथैव ध्वनिरपि भवतीति चेदुच्यते तन्नविचारानुगुणम् । गुणातिक्रमेणोपजातमहिमानः कथमपि न भवन्ति रीतयः । वृत्तयस्तावदलङ्कारान्तर्भूता एव परुषमधुरमध्यमार्थनिरूपणाय दीप्तमसृणमध्यमवर्णारब्धानां तासामनुप्रासजातिरूपतयाभ्युपगमात् । जातिस्तु जातिमतो नातिरिच्यते ।

---

तथाविधान्यनामकरणे किं चातुर्यम् । इहानुमानमपि । ध्वनिर्गुणालङ्कारेभ्यो नातिरिच्यते । ध्वनौ चारुताहेतुत्वात् । यदि गुणालङ्कारेभ्यो ध्वनिर्व्यतिरिच्यते तर्हि तत्र तच्चारुताहेतुर्नास्ति । अयमविमृष्टविधेयांशादिदोषसदृशः । सौन्दर्यहेतुर्ध्वनिः । गुणालङ्कारेभ्यो भिन्ना अपि रीतयो वृत्तयश्च यथा चारुताहेतवस्तथैव ध्वनिरपि भवतीति केषाञ्चिदुक्तिर्न विचारसहा । किं विचारणीयमत्र । गुणातिक्रमेण जनितमहिमानो रीतयः कथमपि न भवन्ति ।

वृत्तयस्तावदलङ्कारान्तर्गता एव कठोरमधुरमध्यमार्थनिरूपितत्वाय कठिनकोमलमध्यमवर्णैस्तासामारब्धानामनुप्रासजातिरूपता कारणं भवति । जातिस्तु जातिमतो न व्यतिरिच्यते ।

---

इस प्रकार से दूसरा नामकरण करने में क्या चातुर्य है ? यहाँ अनुमान भी है। यदि ध्वनि गुण एवं अलङ्कार से अतिरिक्त नहीं है। सौन्दर्य इसका कारण हैं। यदि पदों में भिन्नता हो जाती है, तो वह सौन्दर्य का हेतु नहीं है। यह अविमृष्टविधेयांश आदि दोष के समान है और सौन्दर्य का हेतु ध्वनि है। उससे यदि भिन्न नहीं है, तो वे दूसरे हैं। गुण एवं अलङ्कार से भिन्न भी रीतियाँ और वृत्तियाँ जैसे सौन्दर्य निमित्त होती हैं, वैसे ही ध्वनि भी होती है। यह भी किन्हीं की युक्ति नहीं विचारणीय है। गुण के अतिक्रमण से उत्पन्न महिमा वाली रीतियाँ किस प्रकार नहीं होती है ?

वृत्तियाँ तो अलङ्कार के अन्तर्भूत ही हैं। कठोर मधुर तथा मध्यम अर्थ निरूपित करने के लिए कठिन, कोमल तथा मध्यम वर्णों से आरम्भ होने वाली उनकी अनुप्रास जाति रूपता कारण होती हैं। जाति तो जातिमत् से भिन्न नहीं होता है।

---

Those who do not believe in a soul or those failing to define poetry; take the real element behind poetry for something that transcends all modes of thoughts and is, therefore, inexpressible.

तस्मादभिधाव्यापारवैचित्र्यानन्त्याच्चारुत्वविधायिनः संभवतोऽपि सामान्यलक्षणेनैव परिगृहीतत्वाच्चिरन्तनैः पृथक्त्वेनाप्रदर्शितस्य गुणालङ्कारयोरन्यतरस्य कस्यचिद्ध्वनिरिति पारिभाषिकं नामान्तरं विधाय यदेतन्निरतिशयतर्कताटङ्कितशेमुषीकत्वमात्मानस्ताण्डवयितुमुद्युञ्जते भवन्तस्तत्र को वेद किं निमित्तमिति चेदुच्यते तत् किमत्रापि न ब्रूमः । गुणेषु तावन्न ध्वनेरन्तर्भावो रसधर्मत्वात्तेषाम् । न हि धर्मे धर्मिणोऽन्तर्भावः । नाप्यलङ्कारेषु । वाच्यविश्रान्तेषु श्लेषादिषु व्यभिचारात् । ननु यत्रालङ्कारेषु न ध्वनेः प्रतीतिस्तत्र मा भूदन्तर्भावः ।

---

अत एवाभिधाव्यापारवैचित्र्यस्यानन्त्यात्सौन्दर्यविधायिसंभवादपि सामान्यलक्षणेनैव परिग्रहणेन प्राचीनैः अप्रदर्शितगुणालङ्कारयोरन्यतरस्य ध्वनिरेकोऽस्ति । एवमेव पारिभाषिकनामान्तरं कृत्वा यदि एतन्निरतिशयतर्कयुक्तं भवन्तो ब्रुवन्ति । तत् किं कारणमस्ति । एवं यदि कथ्यते, तर्हि सम्बन्धेऽस्मिन् वयं न किञ्चिदपि ब्रूमः । रसधर्मत्वात् न तेषां गुणेषु ध्वनेरन्तर्भावो भवति । यतो धर्मे धर्मिणोऽन्तर्भावो न भवति । अलङ्कारेष्वपि ध्वनेरन्तर्भावो नास्ति । वाच्यमात्रश्लेषादिषु व्यभिचारात् । यत्रालङ्कारेषु ध्वनेः प्रतीतिर्नास्ति, तत्रान्तर्भावो नास्ति ।

---

अतएव अभिधा व्यापार की विचित्रता के आनन्त्य से सौन्दर्य विधायी संभव होता हुआ भी सामान्य लक्षण से ही परिग्रहण से प्राचीनों के द्वारा अप्रदर्शित गुण एवं अलङ्कारों में से किसी एक की ध्वनि होती है । ऐसा पारिभाषिक नाम करके यदि इस निरतिशय तर्क से युक्त आप लोग इसे करते हैं, तो कारण को कौन जानता है ? यदि यह कहा जाय तो इस सम्बन्ध में हमें कुछ नहीं कहना है । कारण, धर्म में धर्मी का अन्तर्भाव नहीं होता । अलङ्कारों में भी ध्वनि का अन्तर्भाव नहीं होता है । वाच्यमात्र होने वाले श्लेष आदि में व्यभिचार दोष होता है ।

जहाँ अलङ्कारों में ध्वनि की प्रतीति नहीं होती है, वहाँ अन्तर्भाव नहीं होता है ।

---

There are others, who take suggestions to be nothing different from expression. Yet others take suggestion for a nonentity; because in their opinion rhetorical embellishment (Guṇas) and style are the soul of poetry and therefore the suggestive element by itself can be of little avail in a poetic composition.

यत्र तु समासोक्त्यादिषु स्फुटैव प्रतीतिः प्रतीयमानस्य तत्र तदन्तर्भावो न भङ्गुर इति यत् पुनरलङ्कारकोटिनिविष्टत्वं वस्तुध्वनेरुद्भावयन् भामहादयस्तदपि विचारविधुरम्। व्यङ्ग्यस्य प्राधान्ये ध्वनिरुपसर्जनत्वे पुनः प्रसिद्धाः समासोक्त्यादयोऽलङ्कारास्ततस्तेषु कथङ्कारमन्तर्भावोऽस्य भवतु। यदेभिरेव रूपकदीपकतुल्ययोगितादिष्वलङ्कारेषु पुनरुपमालङ्कारः प्रतीयमानो वाच्यस्योपस्कुरुत इत्यलङ्कारध्वनेरप्यलङ्कारत्वं शङ्कितं तदपि न विचारसहिष्णु। तत्रापि गुणिभूतव्यङ्ग्यतयैवोपमायाः स्थितत्वात्। रसवत् प्रेयऊर्जस्विसमाहिताभिधानेष्वलङ्कारेष्वपि रसभावरसाभासभावाभासभावप्रशमानामङ्गत्वमेव। किं चैवमन्तर्भावाभिधानं न संगच्छते।

---

यत्र तु समासोक्त्यादिष्वलङ्कारेषु स्पष्टरूपेण ध्वनेः प्रतीतिः, तत्र प्रतीयमानध्वनेरन्तर्भावहानिर्नास्तीति मत्वा भामाहादयो वस्तुध्वनेरलङ्कारकोटिनिविष्टत्वमूरीकुर्वन्ति, तन्न युक्तियुक्तम्। व्यङ्ग्ये प्राधान्ये सति ध्वनेरुपसर्जने पुनः प्रसिद्धसमासोक्त्यादयोऽलङ्कारा भवन्ति, तर्हि तेषु कथमस्यान्तर्भावोऽस्तु ? योऽननैव रूपकदीपकतुल्ययोगिताद्यलङ्कारेषु पुनः प्रतीतिरस्त्युपमालङ्कारस्य। वाच्यस्योपकारकोऽस्ति। एवं विधस्यालङ्कारध्वनेरपि शङ्कनीयमलङ्कारत्वम्। तदपि न विचारयुक्तम्। तत्रापि गुणीभूतव्यङ्ग्यत्वेनोपमायाः स्थितिहेतुत्वात्। रसवत् प्रेयऊर्जस्विसमाहितनामाद्यलङ्कारेष्वपि रसभावरसाभासभावाभासभावशान्त्यादीनामङ्गत्वमेव। किं नान्तर्भावो भवति।

---

जहाँ समासोक्ति आदि अलंकारों में स्पष्ट रूप से ध्वनि की प्रतीति होती है; वहाँ प्रतीत होने वाली ध्वनि के (अन्तर्भाव) की हानि नहीं है, ऐसा मानकर भामह आदि वस्तु ध्वनि के अलङ्कार में सन्निवेशन स्वीकार करते हैं, वह भी युक्तियुक्त नहीं है। व्यङ्ग्य की प्रधानता होने पर ध्वनि के उपसर्जन होने पर पुनः प्रसिद्ध समासोक्त आदि अलङ्कार होते हैं, तो उनमें इसका किस प्रकार अन्तर्भाव हो ? जो इनसे ही रूपक दीपक, तुल्ययोगिता आदि अलङ्कारों में पुनः उपमा अलङ्कार की प्रतीति होती है, तो वाच्य का उपस्कारक होता है। इस प्रकार की अलङ्कार ध्वनि की भी अलङ्कारता शङ्कनीय है। वह भी विचार में युक्तियुक्त नहीं है। वहाँ भी गुणीभूत व्यङ्ग्य होता है। उपमा की स्थिति कारण है। रसवत् प्रेय, ऊर्जस्वि तथा समाहित नामक अलङ्कारों में भी रस, भाव रसाभास, भावाभास तथा भावशान्ति का अङ्गत्व ही है। और अन्तर्भाव नामकरण इस प्रकार क्यों नहीं हो जाता है ?

रसादीनामात्मत्वे प्रतिपन्नानामलङ्कारत्वशङ्काया अपि दूरनिरस्तत्वात् । किं च ध्वनिर्गुणालङ्कारेभ्यो न व्यतिरिच्यते चारुत्वहेतुत्वादिति यद्भवद्भिरभ्यधायि तदपि दुरभिधानम् । ध्वनेर्ध्वन्यात्मतया चारुत्वहेतुत्वादिति हेतोः सिद्धिपद्धत्यनध्यासः । एवं त्रिविधस्यापि ध्वनेरलंकारत्वं तावत् प्रत्यादिष्टम् ।।

यत् पुनरनुमानतो नातिरिच्यते ध्वनिरित्याचष्ट महिमभट्टस्तदपि पलालायमानम् । अनुमानस्य चाङ्गं व्याप्तिः । अनया विनानुमानमपि कथंकारमात्मानमासादयितुमीशिष्यते । अथ क एवमाह नास्ति व्याप्तिरिति । तर्हि तामेव व्याप्तिमनुमानवादिनो वदनादवतरन्तीमाकर्णयितुमुत्कण्ठाभारमन्थरा नः श्रवणसीमानः । साध्यसामान्येन साधनसामान्यस्याविनाभावो हि व्याप्तिः ।

---

रसादीनामात्मत्वे निष्पन्नालङ्कारतायाः शङ्काया अपि निरसनं जायते । ध्वनिर्गुणालङ्कारेभ्यो व्यतिरिक्तो नास्ति चारुत्वकारणत्वादिति यद् भवद्भिरुक्तं तदपि न विचारसहम् । ध्वनेर्ध्वन्यात्मत्वेन सौन्दर्यनिमित्ततया हेतुसिद्धेरध्यासाभावो भवति । एवं त्रिविधध्वनेरलंकारता कथिता ।

पुनः यद् महिमभट्टः कथयति ध्वनिरनुमानेन न व्यतिरिच्यते, तदपि न युक्तियुक्तम् । अनुमानस्याङ्गं व्याप्तिः । अनया विनानुमानमपि कथं स्वं साधयितुं समर्थम् । केनोक्तं व्याप्तिर्नास्ति सम्प्रति । तर्हि तस्या व्याप्तेरनुमानवादिनो मुखात् श्रोतुं वयमुत्सुकाः । व्याप्तिस्तु साध्यसामान्येन साधनसामान्यस्याविनाभावो भवति ।

---

रस आदि के आत्मत्व में निष्पन्न अलंकारता की शङ्का का भी निरास हो जाता है और क्या ध्वनि गुणालङ्कार से अन्य नहीं, सौन्दर्य के कारण । आप ने जो कहा वह भी उचित नहीं है । ध्वनि का ध्वनित्व अपने से चारुता के कारणता से हेतु सिद्धि का अध्यासाभाव होता है । इस प्रकार तीन प्रकार की ध्वनि की अलङ्कारता हुई ।

पुनः महिमभट्ट ने जो ध्वनि को अनुमान से भिन्न नहीं कहा, तो उचित नहीं । अनुमान का अङ्ग व्याप्ति है । अनुमान के बिना अनुमान भी कैसे अपने को सिद्ध करने में सक्षम है ? अब किसी ने कहा कि व्याप्ति नहीं होती, तो उस व्याप्ति का प्रसंग अनुमानवादियों के मुख से सुनने को उत्सुक हैं । व्याप्ति तो साध्य से साधन का अविनाभाव होता है ।

प्रकृते ध्वनिः साध्यसामान्यं शब्दार्थौ च साधनसामान्यं तत्र च ध्वनेरनुपलब्धिर्वा शब्दार्थयोस्तादात्म्यं वा तदुत्पत्तिर्वा साधिका। न तावदनुपलब्धिः साध्यं बोधयतीति शक्यतेऽभिधातुमभावरूपसाध्यैकसाधनाय प्रगल्भमानत्वात्तस्याः। यथात्र न कुम्भः। उपलम्भयोग्यस्य तस्यानुपलब्धेरिति। प्रकृते त्वन्यतरासिद्धो हेतुः। न हि वयं ध्वन्यनुपलम्भेन ध्वन्यभावं साधयामः। ध्वन्यनुपलम्भेन ध्वनेरेवास्माभिः साध्यमानत्वात्। नापि शब्दार्थयोरनुपलम्भेन। न हि कुम्भानुपलम्भः स्तम्भाभावं साधयितुमीष्टे। नापि तादात्म्यम्। तादात्म्यं ह्ययं वृक्षः शिंशपात्वात् या या शिंशपा स स वृक्षः यथा सम्प्रतिपन्नः शिंशपा चेयं तस्माद्वृक्ष इतिवद्भविष्यति।

---

प्रकृते ध्वनिः साध्यसामान्यं शब्दार्थौ च साधनसामान्यं भवति। तत्र ध्वनेरप्राप्तिः शब्दार्थयोस्तादात्म्यं वा तज्जन्मनः साधिकास्ति। ध्वनेरप्राप्तिर्नास्ति यतः साध्यं बोधयितुमसमर्थत्वम्। अभावरूपसाध्यसाधनाय प्रगल्भत्वम्। यथात्र न घटः। परन्तु तस्य प्राप्तेर्योग्यतानुपलब्धेरिति। मूले चान्यतरस्यासिद्धहेतुः। ध्वन्यप्राप्तेन वयं ध्वनेरभावस्य सिद्धिं न कुर्मः। अस्माभिर्ध्वनेः साध्यमानत्वात् ध्वन्यप्राप्तेन साध्यते। शब्दार्थयोरनुपलम्भेन न। यतो घटानुपलब्धिः स्तम्भाभावं साधयितुं नेष्टः। तादात्म्यमपि नास्ति। तादात्म्यं हि वृक्षोऽयं शिंशपात्वात्। यत्र यत्र शिंशपात्वं तत्र तत्र वृक्षत्वं यथेदानीं शिंशपेयम्। अत एवायं वृक्षः।

---

मूलतः ध्वनि साध्यसामान्य, शब्दार्थ साधनसामान्य है। ध्वनि की अप्राप्ति अथवा शब्द और अर्थ का तादात्म्य अथवा उसकी उत्पत्ति साधिका है। ध्वनि की अनुपलब्धि नहीं है, क्योंकि साध्यता को ज्ञान कराने में असमर्थता है। अभावरूप-साध्य साधन के लिए प्रगल्भता है। जैसे यहाँ घड़ा नहीं है। किन्तु उसकी प्राप्ति की योग्यता की अनुपलब्धि है। मूलतः एक दूसरे के असिद्ध हेतु ध्वनि के न प्राप्त करने से हम ध्वनि का अभाव सिद्धि नहीं करते हैं। ध्वनि की साध्यता के कारण ध्वनि की अप्राप्ति साधते हैं। शब्द और अर्थ के अनुपलम्भ से नहीं है, क्योंकि घड़े की अनुपलब्धि स्तम्भ के अभाव को साधन करने में इष्ट नहीं है। तादात्म्य भी नहीं है। क्योंकि शीशम होने के कारण यह वृक्ष है, यह तादात्म्य है। जहाँ शीशम का वृक्षत्व है, वहाँ वह वृक्ष है। जैसे यह शीशम है। अतः यह वृक्ष है।

साध्यसाधनयोस्तादात्म्यव्यवस्थितयोरेव गम्यगमकभावदर्शनात् । यद्यपि यो यो वृक्षः स स शींशपेति नास्ति व्याप्तिश्चन्दनचम्पकादौ व्यभिचारात् तथापि वृक्षोऽयं शिंशपात्वात् यः या शिंशपा स स वृक्ष इत्यस्त्येव व्याप्तिः । यद्यपि वृक्षाः शिंशपात्वं व्यभिचरन्तो व्यलोक्यन्त तथापि शिंशपा वृक्षत्वं व्यभिचरन्ती ना व्यलोक्यतेति वृक्षं गमयति । तथा प्रकृते न घटते । न हि शब्दोऽर्थो वा गमकत्वेन योऽभ्युगम्यते तस्य प्रतीयमानेन साध्येन सह गम्यगमकभावस्तादात्म्येन व्यवस्थितः । प्रत्युत शब्दार्थन्यक्कारेणैव तस्य प्रवर्तमानत्वात् । तर्हि चरमा तदुत्पत्तिरेव परिशिष्यते । सापि विचार्यमाणा न प्रतिष्ठामधिष्ठास्यति ।

---

साध्यसाधनयोस्तादात्म्योपस्थितयोः गम्यगमकभावदर्शनकारणात् । यद्यपि यो यो वृक्षः सः स शिंशपेति नास्ति व्याप्तिश्चन्दनचम्पकादौ व्यभिचारदोषात् तथाप्ययं वृक्षः शिंशपात्वात् । यत्र यत्र शिंशपात्वं तत्र तत्र वृक्षत्वमिति त्वस्त्येव व्याप्तिः । यद्यपि वृक्षत्वं शिंशपासु दृश्यते, तथापि शिंशापात्वं वृक्षेषु न दृश्यते । इति हेतोः शिंशपात्वं तु वृक्षत्वं गमयति । तथा मूले न घटते शब्देऽर्थे वा गमकत्वं यद् ज्ञायते । तस्य प्रतीतिः साध्येन सह गम्यगमकभावस्तादात्म्येन व्यवस्थितः । प्रत्युत शब्दार्थयोः तिरस्कारेणैव तस्य कारणं प्रवर्तितम् । तदुत्पत्तिरेवावशिष्यते तु चरमा । विचार्यमाणेसति तस्याः न प्रतिष्ठामधिष्ठास्यति ।

---

साध्य साधन की तादात्म्य उपस्थिति होने के कारण ही गम्य और गमक भाव का दर्शन होता है । यद्यपि जो जो वृक्ष है, वह वह शीशम है । ऐसी बात नहीं है और व्याप्ति का चन्दन चम्पक आदि में व्यभिचार दोष होगा । तथापि यह वृक्ष है, । शीशम होने के कारण । जो जो शीशम है, वह वह वृक्ष है । इसमें व्याप्ति है । यद्यपि वृक्ष शिंशपात्व का व्यभिचार दोष होता है, तथापि शीशम वृक्षत्व में व्यभिचार दोष न देखकर वृक्ष को जाना जाता है । वैसे प्रकृत में नहीं होता है । शब्द और गमकत्वरूप से जो जाना जाता है, उसकी प्रतीति से साध्य सहित गम्य गमक भाव तादात्म्य की व्यवस्थिति नहीं होती है । प्रत्युत शब्द और अर्थ के तिरस्कार से ही उसका प्रवर्तमानता कारण है । तो अन्त में उसकी उत्पत्ति ही शेष बचती है । उस पर भी विचार किया जाय, तो भी प्रतिष्ठा नहीं हो पावेगी ।

यतस्तदुत्पत्तेरिदमुदाहरणम् । बह्निमानयं प्रदेशो धूमवत्त्वादिति । धूमो हि बह्नेरात्मज इति कृत्वात्मनो जनकमेनमनुमापयितुमीष्टे । न च प्रस्तुते शब्दार्थयोरनुमानवादिना लिङ्गत्वेनाङ्गीकृतयोः प्रतीयमानाज्जायमानत्वमनुमतम् । आत्मजन्मनः प्राचिकाले स्वसामग्रीसंनिधानादेव तयोराविर्भावदर्शनात् ।।

अथ अभिहितानामेव पदार्थानामन्वय इति मन्वानान् प्रतीयमानं प्रति विवदमानानभिहितान्वयवादिनो नैय्यायिकान् वदामः । नन्वानन्त्याद्व्यभिचाराच्च विशेषाश्लेषाय न प्रभवति संकेत इति सामान्यरूपाः पदार्थाः संकेतविषयाः । तत्र संकेतः पदेष्वेव । संकेतितानि च पदानि पदार्थानभिदधति ।

---

यतस्तदुत्पत्तेरिदमुदाहरणम् । प्रदेशोऽयमग्निमान् धूमवत्वात् । अग्नेरात्मजइति हि धूमो मत्वा स्वपितरमेनमनुमापयितुमीष्टे । न च प्रस्तुतशब्दार्थयोरनुमानवादिना लिङ्गत्वेनाङ्गीकृतयोः प्रतीयमानाज्जायमानत्वं स्वीकृतम् । आत्मजन्मनः प्राचि, काले स्वोपकरणसंयोगेनैव तयोराविर्भावावलोकनात् ।

अथ अभिहितानामेव पदार्थनामन्वय इति मन्वानान् प्रतीयमानं प्रति शास्त्रार्थकर्तॄन् अभिहितान्वयवादिनो नैय्यायिकान् कथयामः । ननु संकेत इति च विशेषस्य सङ्केतग्रहो नास्ति व्यभिचारादानन्त्याच्च । सामान्यरूप पदार्थः सङ्केतविषयः । सङ्केतस्तु पदेषु भवति । अर्थात् सामान्येन भवत्येव । संकेतितपदं तु पदार्थस्याभिधानं करोति ।

---

उसकी उत्पत्ति का यह उदाहरण है । यह स्थान अग्निवाला है, धुआँ होने से । कारण कि धुआँ को अग्नि का आत्मज ऐसा मान कर अपने जनक का अनुमान कराना इष्ट है । और प्रस्तुत में अनुमानवादी द्वारा लिङ्गत्व से अङ्गीकृत शब्द और अर्थ के प्रतीयमान होने से जायमानत्व अभीष्ट नहीं है । शब्द अर्थ के आविर्भाव का दर्शन कारण है ।

अब अभिहित पदार्थों के अन्वय को मानने वाले प्रतीयमान (ध्वनि) के प्रति विवाद करने वाले अभिहितान्वयवादीमीमांसकों के प्रति विद्याधर ने पूर्व पक्ष उपस्थापित करते हुए कहा है कि आनन्त्य व्यभिचार दोष से विशेष का संग्रह नहीं होता है । सामान्य रूपप दार्थ संकेतविषय और संकेतपदों में नहीं होता है । (अर्थात् सामान्य में ही होता है) संकेतितपद पदार्थों का अभिधान करता है ।

अभिहितानां च पदार्थानां तेषामाकाङ्क्षासन्निधियोग्यतावशादन्योन्यमन्वये जातेऽननुभूतपूर्वः कोऽप्यभूतपूर्वः पदानभिधेयो विशिष्टरूपो वाक्यार्थः परिस्फुरति ॥ विशिष्टे च वाक्यार्थे नास्ति पदानां संकेत इति । यत्र स्वस्वपदार्थमात्राभिधानाय जागरूकव्यापाराण्यपि पदानि स्वैः स्वैः पदार्थैरारब्धमपि न वाक्यार्थमभिधातुमीशते तत्रार्थान्तरभूतो ध्वनिरभिधामवगाहिष्यत इति का नाम वः प्रत्याशा ॥

आरोह जयाय कुञ्जरमित्यादि वाक्यं प्रयोक्तारं प्रत्यक्षीकरोति प्रथमम् । चरममनेनास्माद्वाक्यादयमर्थोऽधिगत इति तदभिमुखानुसरणरूपया चेष्टयानुमिनोति । इयं प्रवृत्तिरर्थावधारणपूर्विका प्रवृत्तित्वात् सम्प्रतिपन्नप्रवृत्तिवदिति ।

---

तस्याकांक्षासन्निधियोग्यताकारणात् अभिहितपदार्थस्यान्यतरस्यान्वये सति कोऽप्यभूतपूर्वोऽननुभूतपूर्वो विशेषरूपेण पदानभिधेयो वाक्यार्थस्य परिस्फुरणं भवति ।

विशिष्टे च वाक्यार्थे पदानां संकेतो न भवति । सिद्धान्तपक्षे—यत्र स्वस्वपदार्थमात्राभिधानाय जागृतव्यापाराणि पदानि निजपदार्थैरारब्धमपि न वाक्यार्थं बोधयितुमिष्टानि तत्रार्थान्तरभूतो ध्वनिरित्यवगाहिष्यते का प्रत्याशास्मिन् विषये भवति ।

प्रथमेऽन्विताभिधानवादी 'आरोह जयाय कुञ्जरमादिप्रयोगकर्तारं प्रत्यक्षीकरोति । अन्ततोऽस्मिन् वाक्येऽर्थोऽयं प्राप्स्यति । सम्मुखेऽनुसरणरूपया चेष्टयानुमानं करोतीत्यनेन । इयं प्रवृत्तिरर्थनिश्चयकरणात् पूर्वं प्रवृत्तित्वात् प्रवृत्तिवदिति ।

---

और अभिहित पदार्थों का उनकी आकांक्षा, सन्निधि, योग्यता के कारण एक दूसरे के अन्वय होने पर किसी अभूतपूर्व और पदों के द्वारा अनभिधेय विशिष्टरूप वाक्यार्थ का परिस्फुरण होता है ।

विशिष्टवाक्यार्थ में पदों का संकेत नहीं होता है । सिद्धान्तपक्षमें—"यह है कि जहाँ अपने अपने पदार्थ मात्र अभिधान के लिए जागरूक व्यापार वाले भी पद निज से आरम्भ वाक्यार्थ को भी कहने के लिए समर्थ नहीं होते हैं, तो वहाँ वे अर्थान्तरभूतध्वनि का अवगाहन करा सकेंगे ? यह आशा कैसे की जाय ?

अन्विताभिधानवाद—'आरोह जयाय कुञ्जरम्' आदि वाक्य का प्रयोग करनेवाला इसका प्रत्यक्षीकरण करता है । अन्त में इस वाक्य से यह अर्थ प्राप्त होता है । उसके अभिमुख अनुसरणरूप चेष्टा से अनुमान करता है । यह प्रवृत्ति अर्थ के निश्चय करने के पूर्व प्रवृत्ति के कारण प्रवृत्ति के समान सम्पन्न होती है ।

यद्यमुमर्थमस्माद्वाक्यान्नाज्ञासीत् तर्हि कथं तदभिमुखं चेष्टत इत्यर्थापत्त्या पुनरखण्डस्य वाक्यार्थस्य तादृशमेव वाक्यं वाचकमिति तयोर्वाक्यवाक्यार्थयोर्वाच्य-वाचकभावलक्षणसम्बन्धमवधारयति। ततस्तत्र व्युत्पत्तिमासादयति बालः। अनन्त-रमवरोह कुञ्जराज्जातस्ते जय इत्यादि प्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवगच्छ-तीत्यन्वयव्यतिरेकाभ्यां प्रवृत्तिनिमित्तस्य वाक्यस्यैव प्रयोगयोग्यता यस्मात् तस्मात्त-द्वाक्यान्तर्वर्तिनामेव पदानामितरेतरमाकाङ्क्षासंनिधियोग्यतावशादन्वितैः पदार्थै-रन्वयं गतानामेव संकेत विषयत्वमिति विशेषणविशेष्यभावापन्नः कृत्युद्देशविशिष्टः पदार्थसार्थ एव वाक्यार्थः।

---

यदीममर्थमनेन वाक्येन नाज्ञासीत् तर्हि कथ तं प्रति चेष्टा भवेत्। इत्यर्था-पत्त्या पुनरखण्डस्य वाक्यार्थस्य तादृशमेव वाक्यं वाचकमिति द्वयोः वाक्यवाक्यार्थ-योर्वाच्यवाचकभावलक्षणसम्बन्धं निश्चिनोति।

तदनन्तरं तत्र बालको व्युत्पत्तिं प्राप्नोति। अथवावरोह कुञ्जराज्जातस्ते जय इत्यादिप्रयोगे तस्य शब्दस्य तमर्थमवबोधयति। इत्यन्वयव्यतिरेकाभ्यां प्रवृत्तिनि-मित्तस्य वाक्यस्यैव प्रयागयोग्यता यस्मात् वाक्यान्तर्गतविद्यमानानां पदानामेवा-परेतरमाकाङ्क्षासन्निधियोग्यतावशादन्वितैः पदार्थैरन्वयं गतानामेव संकेतविषय-त्वमिति विशेषणविशेष्यभावयुक्तप्रयत्नोद्देशविषयेन विशिष्टपदार्थसार्थं वाक्यार्थो भवति।

---

इस अर्थापत्ति से पुनः अखण्ड वाक्यार्थ के उसी प्रकार के ही वाक्य को वाचक ऐसे दोनों वाक्यवाक्यार्थ वाच्यवाचकभावलक्षण सम्बन्ध का निश्चय करता है।

तदनन्तर वहाँ बालक को व्युत्पत्ति प्राप्त हो जाती है। बाद में 'अवरोह कुञ्जराज्जातस्ते जयः' इत्यादि के प्रयोग में उस उस शब्द के, उसके उसके अर्थ को जान लेता है। इस प्रकार अन्वय व्यतिरेक द्वारा प्रवृत्ति निमित्त वाक्य की ही योग्यता है, जिसके द्वारा उससे उस वाक्य के अन्तर्भूत विद्यमान पदों के ही एक दूसरे को आकाङ्क्षा सन्निधि तथा योग्यता के कारण अन्वित पदार्थों द्वारा अन्वयगत के ही संकेत विषय को विशेषणविशेष्यभाव से युक्त प्रयत्न उद्देश्य विषय से विशिष्ट पदार्थ अर्थ सहित ही वाक्यार्थ होता है।

अन्वितानामेव पदार्थानां विशिष्टत्वमित्यभिदधानैरन्विताभिधानवादिभिरिहाप्यभिधानं विधेयम् । यत्र संकेतनिकेतनीकृतविशिष्टरूपवाक्यार्थाभिधायिनो वाक्यस्य स्ववाच्यानतिरिक्तासंकेतिताविशेषभूतपदार्थाभिधानेऽपि न सामर्थ्यं तत्रार्थान्तरभूतः प्रतीयमानः कथमिवावतरिष्यति वचनीयताम् । यदि पुनः सोऽयमिषोरिव दीर्घदीर्घो व्यापार इति मन्वानाः शब्दश्रवणसमनन्तरं यावतोऽर्थस्य प्रतिभानं तावत्यभिधैव व्यापारः प्रगल्भत इत्यभिदधति । इत्थमपि वृथा विकत्थनम् । सम्प्रत्यभिषिषेणयिषतिवः कुपित एष नरसिंहनरपतिः । किं च विमुञ्चत कान्दिशीकतामनुप्रविशत मामिति च कथयत्ययमित्यादावखिलभूपालगतत्वेनोल्लसतां त्रासश्वासादीनामपि वाच्यत्वप्रसङ्गात । अपि च यदि न व्यापारान्तरमभिधातः स्वीक्रियते तर्हि कृतं लक्षणया ।

---

अन्विताभिधानवादिनं मीमांसकं प्रति कथ्यतेऽन्वितपदार्थानां वैशिष्ट्याभिधानेनान्विताभिधानं विधेयम् । यत्र संकेतयुक्तविशिष्टरूपवाक्यार्थाभिधायिनो वाक्यस्य स्वस्ववाच्येनाभिन्नोऽसंकेतिताविशेषभूतपदार्थाभिधानेऽपि न समर्थः तत्रार्थान्तरभूतो भविष्यति कथमवतारणा प्रतीयमानस्य ।

यदि पुनः सोऽयं वाणस्येव दीर्घतरो व्यापार इति शब्दश्रवणानन्तरं यस्यार्थस्य प्रतीयमानता भवति । अभिधैव व्यापारः सो भवति । एवमपि वृथा कल्पना । कुपितोऽयं राजा नरसिंहः वः सम्प्रति अभिषिषेणयति । मां प्रति कथयति किं भयं प्रतिभासि । अयमित्यादावखिलभूपतिगतत्वेनोल्लसतां त्रासश्वासादीनामपि वाक्यताप्रसङ्गकारणात् । अपि च यदि न व्यापारान्तरमभिधातोऽङ्गीक्रियते तर्हि कृतं लक्षणया ।

---

अन्विताभिधानवादी मीमांसकों के प्रति विद्याधर कहते हैं कि अन्वित पदार्थों की विशेषता अभिधान करने से अन्विताभिधानवादी का यहाँ अभिधान होगा। जहाँ संकेत विषयीकृत विशिष्टरूप वाक्यार्थ के अभिधान करनेवाले वाक्य का अपने वाच्य से अभिन्न, असंकेतित, अविशेषभूत साधारण पदार्थों के अभिधान में भी नहीं समर्थ है। वहाँ अर्थ के अन्तरभूत प्रतीयमान कैसे अवतरित हो।

यदि पुनः वह यह बाण के सदृश ही दीर्घ व्यापार ऐसा मानते हुए शब्द सुनने के अनन्तर जिस अर्थ की प्रतीयमानता होती है, अभिधा ही वह व्यापार होता है। इस प्रकार की यह व्यर्थ कल्पना है। "सम्प्रतिक्रोधित" यह राजा जाना चाहते हैं मुझसे कहते हैं। क्यों भययुक्त हो। 'अयम्' इत्यादि वाक्य में अखिल राजागतत्व उल्लासता को त्रास श्वास आदि की भी वाच्यताप्रसंग कारण कहाता है। यदि व्यापारान्तर को अभिधा से स्वीकार नहीं करते तो लक्षणा से किया गया।

दीर्घदीर्घाभिधाव्यापारेणैव लक्ष्यस्याप्यर्थस्य प्रतीत्या तस्याः स्वीकारवैय्यार्थ्यापत्तेः। अपि च नास्ति यदि व्यङ्ग्यव्यञ्जकभाव इत्युच्यते तर्हि च्युतसंस्कृतिप्रमुखाणां दोषाणां नित्यत्वं श्रुतिकटुप्रभृतीनां त्वनित्यत्वमिति विभागकरणस्य कैमर्थ्यं प्रसज्यते। अपि च यदि प्रतीयमानोऽर्थो नाभविष्यत् तर्हि काव्यान्तर्निविष्टस्यासभ्यस्मृतिहेतोः पदार्थान्तरान्वयविरहिणः पदस्य हेयत्व न सम्पत्स्यत। अपि च यदि विद्यमानेऽपि विरुद्धधर्माध्यासे कारणभेदे वाच्यव्यङ्ग्ययोर्भेदो नाभ्युपेयते तर्हि क्वचिदपि न भवितव्यं भेदेन। तत्र वाच्यव्यङ्ग्ययोः स्वरूपभेदो यथा--

दिङ्मातङ्गाः कनकशिखरी सप्तयः सप्तसप्तेः
चिन्तारत्नं दिविचरतरुः श्रीनृसिंहक्षितीन्द्र।
अद्याप्येतत् सकलमकृथा नार्थिसादित्यपार्थ-
स्तेनायं ते वितरणकलाकौशलेनावलेपः॥ १४॥

---

दीर्घतराभिधाव्यापारेणैव लक्ष्यार्थस्यापि प्रतीत्या, तस्याः स्वीकारे व्यर्थतापत्तिकारणात्। यदि व्यङ्ग्यव्यञ्जकभावो नेति कथ्यतेऽपि च तर्हि च्युतसंस्कृतिप्रमुखदोषाणां नित्यता श्रुतिकट्वादीनां त्वनित्यतेति विभागकरणस्य व्यर्थता कथम्?

यद्यपि प्रतीयमानोऽर्थो नाभविष्यत् तर्हि काव्यान्तर्गतस्यासभ्यस्मृतिकारणात् पदार्थान्यान्वयरहितस्य पदस्य हेयत्वं न प्राप्स्यते। यदि वर्तमाने सति विरुद्धधर्मयोगित्वे कारणभेदे वाच्यव्यङ्ग्ययोर्भेदो न प्राप्यते तर्हि कुत्रापि भेदे न भवितव्यम्। वाच्यव्यङ्ग्ययोः स्वरूपभेदस्तत्र, उदाहरणम्—हे नरसिंहनरेश! दिग्गजाः सुमेरुगिरिः सूर्यस्याश्वाः चिन्तामणिः कल्पवृक्षोऽद्यापि सम्पूर्णमेतत् याचकस्याधीनाः न कृताः। अतः त्वदानकलाकौशलेन जनिताभिमानो व्यर्थः।

---

दीर्घ अभिधा व्यापार से ही लक्ष्य अर्थ की प्राप्ति से उसके स्वीकार होने में व्यर्थ की आपत्ति होती है। यदि इसे नहीं मानते तो यह व्यङ्ग्यव्यञ्जक भाव कहा जाय तो च्युतसंस्कृति मुख्य दोषों के नित्यत्वश्रुतिकटुत्व आदि दोषों के अनित्यत्व के विभाग के कारण यह व्यर्थ है।

यदि प्रतीयमान अर्थ नहीं होता तो काव्य के अन्तर्गत समाविष्ट असभ्यस्मृति ( अमंगलादि ) के कारण प्रकरणान्वय विरही पद की हेयता की प्राप्ति नहीं होती। यदि विरुद्धधर्मयोगी के वर्तमान रहने पर कारणभेद में वाच्य और व्यङ्ग्य के दो भेद नहीं होते हैं। तो कहीं भी भेद नहीं होना चाहिए। वाच्य और व्यङ्ग्य का स्वरूपगत भेद होता है।

उदाहरण—हे नरसिंह नरेश! दिग्गज, सुमेरुगिरि, सूर्य के घोड़े, चिन्तामणि, कल्पवृक्ष आज भी इन्हें याचक के अधीन नहीं किया। तुम्हारे दान कला की कुशलता में अभिमान व्यर्थ है।

अत्र निन्दा वाच्याप्रतीयमाना च स्तुतिस्तयोश्च स्वरूपत एव भिन्नत्वं वाच्यप्रतीत्यनन्तरभाविनी व्यङ्ग्यप्रतीतिरिति कालभेदाप्यनयोर्भेदः। आश्रयभेदाद्भेदो यथा। शब्दमात्रमाश्रयो यथा वाच्यस्य शब्दैकदेशतदर्थवर्णसंघटनाश्च प्रतीयमानस्य। शब्दार्थशास्त्रज्ञानमात्रं कारणं वाच्यस्य प्रकरणादिसध्रोचीनप्रतिभातिशयसनाथं च तत् प्रतीयमानस्येत्यनयोःकारणभेदादपि भेदः। बुधबोद्धृविद्वदादिभिः पदैर्व्यपदिश्यते वाच्यज्ञः सहृदयविदग्धप्रतिभानवदादिभिस्तत्प्रतीयमानज्ञ इति। वाच्यस्यावबोधः प्रतीतिमात्रमभिधीयते प्रतीयमानस्य तु चमत्कार इति। वाच्यस्य सम्बन्धमभिधामभिदधति प्रतीयमानस्य पुनः परामर्शमिति कार्यभेदादप्यनयोर्भेदः। विषयभेदेन भेदो यथा।

---

उदाहरणेऽस्मिन् निन्दा वाच्या प्रतीयमाना च स्तुतिः, तयोश्च स्वरूपत्वेनैव भिन्नत्व वाच्यप्रतीतेः पश्चाद्भाविनीव्यङ्ग्यप्रतीतिरिति कालभेदादपि द्वयोरनयोर्वाच्यव्यङ्ग्ययोर्भेदः। आश्रयभेदाद्भेदो भवति। वाच्यस्य शब्दमात्रमाश्रयः। व्यङ्ग्यस्य चाश्रयशब्दैकदेशतदर्थवर्णसङ्घटनाश्च भवन्ति प्रतीयमानस्य। शब्दार्थशास्त्रज्ञानमात्रकारणं वाच्यस्य प्रकरणादिकारणं प्रतीयमानस्य ध्वनेश्च। अनयोर्वाच्यप्रतीयमानयोः कारणभेदाद् भेदो भवति। बुधबोद्धृविद्वदादिभिः पदैर्व्यपदिश्यते कथ्यते वाच्यज्ञः सहृदयविदग्धजनप्रतिभानवदादिभिस्तत्प्रतीयमानज्ञ इति। वाच्यस्य ज्ञानं प्रतीतिमात्रं प्रतीयमानस्य च ज्ञानं चमत्काररूपम्। वाच्यस्य सम्बन्धमभिधां कथयति पुनः प्रतीयमानस्य च कर्म परामर्शः। कार्यभेदादपि भेदोऽनयोः। विषयभेदेन भेदोदाहरणमिह।

---

इस उदाहरण में निन्दा वाच्य है, तो प्रतीयमान(ध्वनि) नरसिंह की स्तुति होती है। इन दोनों के स्वरूप में ही भिन्नता है। वाच्यप्रतीति के बाद होनेवाली व्यङ्ग्यप्रतीति इस कालभेद से भी इन दोनों वाच्य व्यंग्य में भेद है।

आश्रयभेद से भेद होता है। वाच्य का शब्दमात्र आश्रय है और प्रतीयमान व्यंग्य का आश्रय शब्द उसका एकदेश तथा तदर्थ वर्णसंघटना। शब्दार्थ शास्त्र ज्ञानमात्र कारण वाच्य का होता है और प्रकरण आदि कारण प्रतीयमान (ध्वनि) का होता है। इन दोनों वाच्य प्रतीयमान में कारण भेद से भी भेद होता है। बुध, बोद्धा विद्वान् आदि पदों का व्यवहार वाच्यज्ञ के लिए होता है। सहृदय विदग्ध प्रतिभा आदि पदों का व्यवहार व्यंग्य जाननेवालों के लिए होता है। वाच्य का ज्ञान प्रतीतिमात्र है। प्रतीयमान का ज्ञान चमत्काररूप है। वाच्य का सम्बन्ध अभिधा से होता है। प्रतीयमान का कार्य परामर्श है। कार्यभेद से भी इन दोनों में भेद है। विषयभेद से उदाहरण भेद यहाँ दिया जाता है।

कस्स वण होइ रोसो दट्ठूणपि आए सव्वणं अहरं ।
सभमर पदुमग्धायिणी वारिअवामे सहसु एण्हिम् ॥ १५ ॥

(कस्स व कस्य वा अनीर्ष्यालोरपि वारि अवामे मद्वचनानङ्गीकारिणि सहस्वेदानीमुपालम्भपरम्परामितिमावः) अत्र काचित् स्वैरिणी केनचिदुपपतिना खण्डिताधरा तदुपपतिसन्निधिं निश्चितवति प्रियतमेतमनवलोकमानयेव कयापि विदग्धया सख्या तदपराधप्रच्छादनायेदमभिधीयते । इह सहस्वेदानीमिति वाच्यं स्वैरिणीविषयम् । अनपराधत्वमस्या इति व्यङ्ग्यं पुनः प्रियतमविषयम् । सहस्वेत्यपि च तद्विषयम् । बल्लभेन सुतरामुपलभ्यमानायामस्यां तद्व्यलीकशङ्कितेति पुनरविनयगोपनेन तत्प्रत्यायनं प्रातिवेशिकविषयम् । प्रियाया इति पदापादानात् सौभाग्यातिशयप्रतिपादनं तदविनयोपालम्भसम्भूतप्रमोदसपत्नीविषयम् ।

---

कस्य रोषो न स्वप्रियायाः सव्रणमधरं दृष्ट्वा भवति । भ्रमरयुक्तकमलघ्रायिणि वारितवामे सहस्वेदानीम् । प्रियायाः कस्या अपि व्रणयुक्तमधरं दृष्ट्वा सहचरी कथयति । हे सुन्दरि । मम वचनानि नाङ्गीकृतानि । अत उपालम्भपरम्परां सहस्व साम्प्रतम् । इह काचित् स्वैरिणी परपुरुषेण दन्तक्षताधरा । एवं प्रियतमस्यावधारणे तं न दृष्ट्वा काचित् दक्षस्वैरिण्या दोषापराधगोपनाय कथयति । हे सुन्दरि इदानीं सहस्व पत्युः क्रोधम् । वाच्यमिदं स्वैरिणीविषयकम् । तस्य नापराधः । व्यङ्ग्योऽयमिति नास्ति प्रियतमविषयकः । सहस्वेति तस्य विषयान्तर्गतः । प्रियतमेन स्वैरिणीं प्रति निरन्तरोपालम्भदानेऽलीकशङ्का कृता । पुनरविनयगोपनेन तां प्रति विश्वासविषयः । प्रियायाः पदग्रहणेनात्यन्तेन सौभाग्यप्रतिपादनम् । द्वितीयोऽयं पक्षः । तदविनयोपालम्भजनितप्रमोदः सपत्नीविषयकः ।

---

इसमें किसी दुष्टा स्त्री की सखी उससे कह रही है । स्त्री के अधर पर परपुरुष द्वारा किया गया दन्तक्षत का चिन्ह बना हुआ है । इसको देखकर पति का नाराज होना स्वाभाविक है । उससे बचने के लिए सखी कह रही है । इसने कमल का फूल सूँघ लिया है जिसमें बैठे भौरों ने काटा है और इसके अधर में काटने का चिन्ह बन गया है । पर पुरुष के दन्तक्षत का चिन्ह नहीं है । किसी को भी अपनी स्त्री के अधर कटे देखने से क्रोध हो सकता है । कमल पर बैठे भौंरे द्वारा स्त्री के कमल सूँघने पर अधर काट लिया गया है । हे सखी ! इसे अब सहन करो । दन्तक्षत का चिन्ह जब परपुरुष द्वारा स्त्री के अधर पर बना हुआ हो तो किसी भी पुरुष को अपनी स्त्री के प्रति क्रोध करना स्वाभाविक है । उस स्त्री से सखी कहती है कि हे सखी ! अब इसे सहन करो । कोई स्वैरिणी पर पुरुष द्वारा क्षत अधर वाली है । उसे उपपति का सान्निध्य हुआ है । ऐसा प्रियतमके निश्चित करने पर उसे न देखने वाली किसी चतुर सखी द्वारा स्त्री के अपराध छिपाने के लिए यह कहा जा रहा है । हे सखी ! अब सहन करो जो पति का क्रोध होगा । यह स्वैरिणी स्त्री विषयक वाच्य है । इसका अपराध नही है । यह व्यङ्ग्य पुनः प्रियतम विषयक नहीं है । सहन करना भी उसके विषय के अन्तर्गत है । प्रियतम द्वारा स्त्री के प्रति निरन्तर उलाहना देने में झूठी शंका की जाती है । इसमें पुनः अविनय छिपाने से उसके प्रति विश्वास होना विषय है । प्रिया पदग्रहण करने से अत्यन्त सौभाग्य होता है, यह दूसरा पक्ष है । उसके अविनय के प्रति उत्पन्न प्रसन्नता सपत्नी विषयक है ।

अत एव सहस्वेति प्रियतमविषयं च। प्रकटापराधप्रच्छादनेन स्ववैदग्ध्यप्रकाशनं तटस्थविदग्धजनविषयम्। उपलक्ष्यमाणोपभोगचिह्ना पुनरियं न त्वया कर्तव्येति प्रच्छन्नकामुकविषयम्। इत्थं मयैवापह्नुतमेतन्न भवतीभिरित्यपरसखीविषयमित्यनयोर्विषयभेदाद्भेदः।

येऽपि सहृदयसंवेद्यमनाख्येयमेव ध्वनिमाख्यातवन्तस्तेऽपि न परीक्ष्यवादिनः। सामान्यतो विशेषतो ध्वनिलक्षणस्यास्माभिः प्रदर्शितत्वात्। तथापि यदि तस्यानाख्येयत्वं तदा सर्वेष्वपि वस्तुषु तदतिप्रसज्यमानमनिवार्यं स्यात्। अथानयातिशयोक्त्या लोकोत्तरत्वमस्य निरूप्यते तदा सिद्धं नः समीहितम्।

अथ भक्तेरुपचारादागतोऽयमिति ये भाक्तमभिदधते त एवं प्रष्टव्याः। भक्तिर्व्यक्तिश्चेति न तत्वान्तरमिति यद्यभिसन्धिस्तदा भक्तिव्यक्त्योः किं तादात्म्यमुत भक्तिर्व्यक्तेर्लक्षणमुपलक्षणं वा।

---

अत एव सहस्वेति प्रियतमविषयं च। स्पष्टापराधगोपनेन स्वदाक्षिण्यं प्रकाशनं तटस्थदक्षजनविषयम्। उपलक्षितोपभोगचिह्नयुक्तेयं प्रियतमा। एवं पुनः त्वया न कार्यमिदं प्रच्छन्नकामुकविषयम्। अनेन प्रकारेण ममैवापह्नुतमेतत्। न भवतीभिरित्यन्यसखीविषयम्। इत्यनयोर्विषयभेदाद्भेदः।

अन्ये चालक्षणीयतावादिनः ये सहृदयसंवेद्यानिर्वचनीयध्वनिं वदन्ति, तेऽपि न विचारशीलाः। सामान्येन विशेषध्वनेः लक्षणस्य प्रदर्शनम्। यदि तथा न ब्रूते, तर्हि समस्तेषु वस्तुष्वनिर्वचनीयता भविष्यति। अनयातिशयोक्त्या लोकोत्तरानन्दस्य निरूपणं भवितुं शक्यते। आनन्दरूपरसध्वनिरेव प्रधानोऽस्ति। अनेनेत्थं संसूच्यते। अन्ते ध्वनिः गौणः लक्षणागम्यं मन्वानां मतस्य व्याख्या। भक्तेरुपचारेणाथवारोपेणागत भाक्तमिति कथ्यते। भक्तिव्यक्त्योः न तु तत्वान्तरम्। एवंविधो यद्यपि सन्धिः तदा लक्षणाव्यञ्जनयोः कथं तादात्म्यम्। अथवा लक्षणाव्यञ्जनयोर्लक्षणमुपलक्षणं वा भवति।

---

इसलिए सहन करो। ऐसा यह प्रियतम विषयक है। प्रकट अपराध छिपाने से अपने चातुर्य का प्रकाशन तटस्थ चतुरजन का विषय होता है। उपलक्षित उपभोग चिह्नवाली यह स्त्री है। ऐसा पुनः तुम्हारे द्वारा कार्य न होना चाहिए। यह छिपा हुआ कामुक का विषय है। इस प्रकार यह मेरे द्वारा ही छिपाया गया। यह आप द्वारा नहीं किया गया है। यह अन्य सखी का विषय है। इन दोनों के विषय भेद होने से भिन्नता होती है।

अलक्षणीयतावाद दूसरे जो अलक्षणीयतावादी सहृदय संवेद्य अनिर्वचनीय ध्वनि को कहते हैं, वे भी विचारशील नहीं है। सामान्य से विशेष ध्वनि के लक्षण का प्रदर्शन होता है। यदि वैसा न कहा जाय तो सभी वस्तुओं में अनिर्वचनीयता होगी। इस अतिशयोक्ति से लोकोत्तर आनन्द का निरूपण किया जा सकता है। आनन्दरूपरसध्वनि ही प्रधान है। यह बात इससे सूचित होती है।

भक्तिवाद—अन्त में ध्वनि को गौणलक्षणागम्य माननेवालों के मत की व्याख्या है। भक्ति के उपचार अथवा आरोप से आए हुए को भाक्त की संज्ञा दी जाती है। भक्ति और व्यक्ति में तत्वान्तर नहीं है। इस प्रकार यद्यपि सन्धि हो, तब लक्षणा और व्यञ्जना का क्या तादात्म्य है? लक्षणा व्यञ्जना का लक्षण अथवा उपलक्षण है।

न प्रथमः पक्षः । उभयोरप्यनयोः परस्परविरुद्धानां धर्माणामुपलम्भसंभवात् । तथा हि मुख्यार्थबाधाद्यनुसन्धानप्रवृत्तत्वं भक्तेः । वक्तृबोद्धव्यादिवैशिष्ट्यानुसन्धानप्रवृत्तत्वं तु व्यक्तेः । तत् कुतस्तयोस्तादात्म्यशङ्काकलङ्कावतारः । किं च भेदसिद्धयेऽनुमानमप्यस्ति । भक्तिव्यक्ती मिथो भिन्ने । भिन्नधर्मयोगित्वात् । यद्भिन्नधर्मयोगि तन्मिथो भिन्नम् । यथा घटपटादि । न द्वितीयः । वक्ष्यमाणदूषणगणग्रस्तत्वात् । तथा हि । लक्षणस्य केवलव्यतिरेकित्वादेवं किलानुमानरचना । व्यक्तिरितरेभ्यो भिद्यते । भक्तिमत्वात् । यत् पुनरितरेभ्यो न भिद्यते न तद्भक्तिमत् । यथाभिधादि । तथा च सत्यभिधैकमूले ध्वनौ भक्तेरभावाद् भागासिद्धो हेतुः । व्यक्तेरितरेभ्यो भिन्नत्वे साध्येऽस्य हेतोरितराभिन्ने विवेचकत्वमात्रं लक्षयति कुशलादौ रूढेऽपि क्वचिद्गतत्वाद्विरुद्धत्वमपि ।

---

न त्वाद्यः पक्षः । एतयोः परस्परविरुद्धानां धर्माणामुपलब्धिः । भक्तिर्लक्षणाया मुख्यार्थबाधाद्यनुसंधानप्रवृत्तिः । व्यञ्जनाया वक्तृबोद्धव्यादिविशिष्टतायामनुसन्धानप्रवृत्तिः । अतोऽनयोर्द्वयोस्तादात्म्यं कथं भविष्यति । किं च भेदसिद्धयेऽनुमानमप्यस्ति । लक्षणाव्यञ्जने परस्परभिन्ने । भिन्नधर्मयोगित्वाद् । यत्तु भिन्नधर्मयोगित्वं तत्तु परस्परभिन्नम् । यथा घटपटादि । द्वितीयोऽयं पक्षोऽपि नादृतः । कथने तु दोषग्रस्तः । तथाविधलक्षणस्य केवलव्यतिरेकिकारणादेवं विधस्यानुमानस्य सम्भावना भवति । व्यञ्जना त्वन्येभ्यो भिद्यते । लक्षणाकारणत्वात् । पुनः नेतरेभ्योभिद्यते यदि तत्तु न भक्तिमत् । अर्थात लाक्षणिको न भवति । यथाभिधादि । तथैकमूलध्वनावभिधा भक्तेरभावभागासिद्धहेतुः । व्यक्तेरितरेभ्यो भिन्नत्वे सति साध्येऽस्या हेतोः सत्यपरेभिन्नत्वे विवेचनमात्रं लक्ष्यते । कुशलादिशब्दे रूढ़ेऽपि क्वचिद् न भिन्नत्वम् ।

---

प्रथम पक्ष ठीक नहीं है । लक्षणा एवं व्यंजना इन दोनों में परस्पर विरुद्ध धर्मो की उपलब्धि होती है । भक्ति लक्षणा की मुख्यार्थ बाधादि अनुसंधानप्रवृत्ति होती है । (व्यक्ति) व्यंजना की वक्ता, बोद्धव्य आदि की विशिष्टता में अनुसन्धान प्रवृत्ति होती है । अतः दोनों में तादात्म्य कैसे होगा ? और क्या भेदसिद्धि के लिए अनुमान भी होता है । लक्षणा एवं व्यंजना दोनों परस्पर भिन्न हैं । भिन्न धर्मयोगी होने के कारण । यदि धर्मयोगी भिन्न हैं तो लक्षणा और व्यंजना दोनों परस्पर भिन्न हैं । जैसे घटपटादि भिन्न हैं । यह दूसरा पक्ष भी ठीक नहीं है । कहने में यह दोषयुक्त है । वैसे लक्षणा के केवलव्यतिरेकी होने से इस प्रकार के अनुमान की रचना होती है । व्यंजना दूसरे से भिन्न है । लक्षणा होने के कारण । यदि पुनः यह दूसरे से भिन्न नहीं होता है, तो लाक्षणिक नहीं है । जैसे अभिधा आदि । और वैसे एक मूल ध्वनि में अभिधा लक्षणा के अभाव भागा सिद्ध हेतु है । व्यंजना के दूसरे से भिन्न होने पर साध्य में इसके हेतु दूसरे में अभिन्न होने से विवेचनमात्र लक्षित होता है । 'कुशल' आदि शब्दों में रूढ़ होने पर भी कहीं विरुद्ध अर्थ होता है ।

अनेन हि विवेचकत्वादिमात्रं लक्ष्यते न तु किंचिद् व्यज्यते । न तृतीयः । विवक्षितान्यपरवाच्ये ध्वनौ भक्त्युपलक्षितत्वाभावादुपलक्षणत्वाभ्युपगमेऽपि भक्तिव्यक्त्योरभिन्नत्वासंभवाच्च । उपलक्षणेन विनाप्युपलक्षणीयस्य सिद्धेश्च । एतेन यत्र कुन्तकेन भक्तावन्तर्भावितो ध्वनिस्तदपि प्रत्याख्यातम् । यत्तु गुणविशिष्टपदरचनात्मिकाया रीतेः काव्यात्मत्वमनानि वामनेन तदपि न साधु । माधुर्यादिगुणानतिक्रमणात् तस्याः । किं चानुमानमपि ध्वनिसाधने लब्धप्रसरमेव । तथा हि—

क्रियेत चेत् साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया ।
या स्वौजसां साधयितुं विलासैस्तावत् क्षमा नाम पदं बहु स्यात् ॥१६॥

---

अनेन विवेचनमात्रं लक्ष्यते । परञ्च न किञ्चिदपि व्यज्यते । अतस्तृतीयः पक्षोऽपि नास्ति । विवक्षितान्यपरवाच्यध्वनौ लक्षणाया उपलक्षितभावेनोपलक्षित्वे सति लक्षणाव्यंजनयोर्द्वयोरभिन्नत्वमसम्भाव्यम् । उपलक्षणं विनाप्युपलक्षणीयस्य सिद्धिर्भवति । अनेन यत्र कुन्तकेन लक्षणायामन्तर्भावितध्वनिः क्रियते, तस्यापि प्रत्याख्यानम् । वामनेन गुणविशिष्टपदरचनायुक्तारीतिः ( रीतिरात्मा काव्यस्य ) कथ्यते । तदपि नोचितम् । यतः तस्याः माधुर्यादिगुणेषु नातिक्रमणात् , अनुमाने ध्वनेरन्तर्भावः न साधु । यथा—यदि साधु विभक्तिषु विमर्शः क्रियते, तर्हि प्रथमाविभक्तिः प्रथमे स्वीक्रियते । स्वौजसां प्रयोगे साधु शब्दानां साधनाय प्रयोगो यदि न क्रियते बहूनि पदान्यपदानि भविष्यन्ति । अर्थात् यदि सज्जनानां विभागे विमर्शः क्रियते तर्हि भवतो नामाग्रगण्यम् । स्वतेजोबलप्रकाशसाधुसाधनं यदि न भवेत् तर्हि पदहीनप्रतिष्ठाराहित्यं भवेत् ।

---

इससे विवेचन मात्र ही लक्षित होता है । पर कुछ भी व्यञ्जित नहीं होता है । अतः यह तीसरा मत भी अमान्य है । विवक्षितान्यपरवाच्य ध्वनि में लक्षणा के उपलक्षिताभाव से उपलक्षणत्व होने पर लक्षणाव्यंजना दोनों की अभिन्नता असंभव है । उपलक्षण के बिना भी उपलक्षणीय की सिद्धि होती है । इससे जहाँ कुन्तक द्वारा लक्षणा में अन्तर्भावित ध्वनि की जाती है, उसका भी प्रत्याख्यान हुआ । वामन द्वारा गुणविशिष्ट पद रचना करानेवाली रीति (रीतिरात्मा काव्यस्य") जो कहा गया है, वह भी ठीक नहीं है । क्योंकि इसका माधुर्य आदि गुणों में अतिक्रमण नहीं होता है । अनुमान में भी ध्वनि का अन्तर्भाव उचित नहीं है ।

उदाहरणार्थ--यदि साधु विभक्तियों का विचार किया जाय तो प्रथमा विभक्ति पहले प्रयोग की जाती है, जो सु, औ, जस् के प्रयोग को साधु शब्दों के साधन के लिए प्रयोग यदि न किया जाय तो बहुत से पद अपद हो जायंगे । अर्थात् यदि सज्जनों के विभाग का विचार किया जाय तो आपका नाम सबसे पहले आता है । जो अपने तेज बल प्रकाश साधुसाधन यदि न किया जाय, तो पदविहीन प्रतिष्ठारहित हो जायगा ।

इत्येतद्वाक्यमेतद्वाक्यवाच्यातिरिक्तार्थप्रकाशकम् । वाक्यत्वात् । यद्यद्वाक्यं तत्तद्वाच्यातिरिक्तार्थप्रकाशकम् । यथा कालिदासादिवाक्यम् । वाक्यं चेदम् । तस्मादेतद्वाक्यवाच्यातिरिक्तार्थप्रकाशकम् । पर्यायवाक्येऽनैकान्तिकमिति चेन्न । तस्यापि पक्षकोटिनिविष्टत्वात् । तस्मादस्ति ध्वनिः । अयं च वस्त्वलंकाररसादिरूपतया भवन्न त्रैविध्यमतिवर्तते । वस्तुध्वनिरलंकारध्वनिः रसादिध्वनिश्चेति ॥

इति श्रीमहामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रे
ध्वनिव्यवस्थापनं नाम प्रथम उन्मेषः ।

---

एवंविधमिदं वाक्यं वाच्यव्यतिरिक्तार्थप्रकाशकम् । वाक्यत्वकारणात् । यद्-वाक्यं तद् वाच्यातिरिक्तप्रकाशकम् । यथा कालिदासादिवाक्यम् । तथा चेदं वाक्यम् । अतः वाक्यं वाच्यातिरिक्तार्थप्रकाशम् । पर्यायवाक्येऽनैकान्तिकदोषो भविष्यति । इति चेन्न । तस्यापि पक्षकोटिसन्निवेशात् । तस्यार्थः सदृशार्थः शक्तित्वात् । तत्राप्यर्थान्तरप्रकाशनस्य विरोधोऽव्यभिचारो भवतीति भावः । अतोऽस्ति ध्वनिः । अयं च वस्त्वलंकाररसादिरूपतया त्रिविधः । नातिरिच्यते । एवं वस्त्व-लंकाररसादिध्वनयः ।

श्रीमहामाहेश्वरकविविद्याधरकृतैकावलीनामकालंकारशास्त्रग्रन्थे
ध्वनिव्यवस्थापनं नाम प्रथमोऽध्यायः ।

एकावलीसरलाटीकायां प्रथमोऽध्यायः ।

---

इस प्रकार यह वाक्य वाच्य से अतिरिक्त अर्थ का प्रकाशक है, वाक्य होने के कारण । जो-जो वाक्य है वह वह वाच्यातिरिक्तार्थप्रकाशक है । जैसे कालिदास आदि के वाक्य । और यह वाक्य है ।

अतः वाक्यवाच्यातिरिक्त अर्थ प्रकाशक है । पर्याय वाक्य में अनैकान्तिक दोष होगा । ऐसा नहीं । उसका भी पक्ष कोटि में सन्निवेश होने से, उसके समान अर्थ के सत्सदृश शक्ति के कारण वहाँ भी अर्थान्तर प्रकाशन के अविरोध न होने का पक्ष ही व्यभिचार है, ऐसा भाव है । इसलिए ध्वनि हैं और यह वस्तु अलंकार रसादि रूपता के कारण तीन से अधिक नहीं है । इस प्रकार वस्तु ध्वनि, अलंकार ध्वनि तथा रसध्वनि तीन ध्वनियाँ हैं ।

महामाहेश्वर कवि विद्याधरकृत एकावली नामक अलंकारशास्त्रग्रन्थ में
ध्वनि व्यवस्थापन नामक प्रथम उन्मेष समाप्त हुआ ।

एकावलीसरलाटीका का प्रथम अध्याय समाप्त ।

The discussion started by Vidyadhara here is more or less the the Same type as the one propounded by Ānandavardhana, Abhinavagupta and Mammata.

Vidyadhara makes no new points in propounding the theory that the suggestive elment is the soul of poetry. All he writes in this context does not go beyod indicating his implicit faith in the theory of Ānandavardhana, Abhinavagupta and Mammata.

# अथ द्वितीय उन्मेषः

शब्दार्थयोरेव काव्यत्वमतस्तयोरेव स्वरूपं निरूपयन्नाह—

यः संकेतितमर्थं साक्षाद्ब्रूते स वाचकः शब्दः ।
संकेतितश्चतुर्धाजात्यादिर्जातिरेव वा भवति ॥ १ ॥

साक्षादव्यवधानेन । जात्यादिर्जातिगुणक्रियाद्रव्यरूपः । यद्यप्यर्थक्रियाकारितया व्यक्तेरेव प्रवृत्तिनिवृत्तियोग्यता तथापि व्यक्तीनामानन्त्याद्व्यभिचाराच्च प्रतिव्यक्ति न शक्यते संकेतः कर्तुमिति जातिरेव विषयः संकेतस्य ॥

---

अथ द्वितीयोऽध्यायः

सरलाटीकायाम्

काव्यत्वमेव शब्दार्थयोः । अतः शब्दार्थयोः स्वरूपं निरूप्यते ।

विद्याधरमते साक्षात् संकेतितार्थयुक्तशब्दो वाचको भवति । सङ्केतितस्तु जातिगुणक्रियाद्रव्येषु भवति । स चतुर्विधः । अथवा जातिमात्रसाक्षाद्व्यवधानहीनः शब्दः । संकेतितश्चतुर्विधः । यद्यप्यर्थक्रियाकारित्वेन व्यक्तेः प्रवृत्तिनिवृत्तियोग्यता । तथापि व्यक्तेरानन्त्यदोषात् प्रतिव्यक्तिर्न शक्यतेऽभिधापि न समर्था भवति । संकेतस्य विषयो जातिः ।

---

यहाँ से द्वितीय अध्याय प्रारम्भ है ।

अभिधा - शब्दार्थ में ही काव्यत्व होता है । अतः शब्द एवं अर्थ दोनों के स्वरूप का विवेचन होता है ।

विद्याधर के मत में साक्षात् अर्थ को बतलाने वाला शब्द वाचक होता है । संकेतित जातिगुण क्रिया द्रव्य आदि भेद से चार प्रकार का होता है । अथवा जाति मात्र साक्षात् व्यवधान रहित होता है । जात्यादि अर्थात् जाति, गुण, क्रिया द्रव्यरूप से संकेतित चार हैं । यद्यपि अर्थ क्रियाकारित्व से व्यक्ति की ही प्रवृत्ति निवृत्ति योग्यता होती है । तथापि व्यक्ति के आनन्त्यदोष से प्रति व्यक्ति के बोध कराने में अभिधा नहीं समर्थ है । सङ्केत का जाति ही विषय है ।

Chapter II

Because the word and its significance are the Constituents of poetry, it is imperative to determine their essentials. A word is that which is Capable of connoting a meaning without the intervention of any other aids and this connoted meaning is of four types. 1— the genus; the property, action and name given to something are basically without reference to the reason for so naming. A word can not connote particulars; e. g. the word horse can not connote a particnlar horse; although it is the particular that is capable of acting and participating in the general.

But because particulars are too numerous within each genus;

मुख्यं तमर्थमाहुः साक्षाद्यत्रास्य संकेतः ।
व्यापारोऽपि च मुख्येऽभिधीयतेऽस्याभिधारूपः ॥ २ ॥

अनुवाद्यानामर्थानां विधेयार्थपरत्वं तात्पर्यमिति व्यापारान्तर परैरभ्युपगतम् । यथा 'उमां स पश्यनृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः' इत्यत्र दर्शनस्य चक्षुः करणकत्वाव्यभिचारात्तदुपादानं तद्विशेषणार्थं तदेव चात्र विधेयं तत्परत्वमेव तात्पर्यम्

संयोगादिभिरभिधा शृङ्खलिता यत्र कुण्ठतामेति ।
अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्र ॥ ३ ॥

---

साक्षाद् व्यवधानरहितो यत्र शब्दस्य सङ्केतोऽस्ति, तत्र सोऽर्थो मुख्योऽस्ति । इति मन्यमानः संकेतितार्थमेव मुख्यार्थं ब्रूते । संकेतितार्थगोचरशब्दस्य व्यापारोऽप्यभिधारूपो मुख्यो भवति । अनुवाद्यार्थस्य विधेयार्थं परत्वं तात्पर्यम् । इति त्वन्यैरितरशब्दस्य व्यापारोतिज्ञा उमां स पश्यनृजुनैव चक्षुषप्रचक्रमे वक्तुमनुतेज्झतक्रमः 'इत्यत्र दर्शनस्य करण चक्षुः । व्यभिचारात्तु तदुपादान तद्विशेषणार्थं तदेवात्र विधेयम् । तत्परत्वमेव तात्पर्यम् । यत्राभिधाशक्तिः कुण्ठिता तत्रान्यबोधाय व्यञ्जनाशक्तिः समर्था संयोगादिभिः ।

---

साक्षात् व्यवधानरहित जहाँ शब्द का संकेत होता है, उस अर्थ को मुख्य कहा हैं, ऐसा मानते हुए संकेतितार्थ को ही मुख्यार्थ कहा हैं । संकेतितार्थ गोचर शब्द का व्यापार भी अभिधारूप मुख्य होता है । अनुवाद किए जाने योग्य अर्थों के विधेय अर्थपरत्व को तात्पर्य कहा जाता है । ऐसा अन्य द्वारा दूसरे शब्द का व्यापार जाना जाता है ।

जैसे 'उमां स पश्यनृजुनैवव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः' में शिवजी ने उमा को सरल नेत्रों से ही देखते हुए बोलना प्रारम्भ किया । इसमें दर्शन नेत्र से ही होता है । आर्जव विशेषणार्थ है । यहाँ नेत्र विशेष्य का आर्जव विशेषण विधेय में पर्यवसान तात्पर्य है ।

व्यंजना—अभिधा शक्ति जहाँ संयोगादि अर्थ से कुण्ठित होती है, वहाँ दूसरे अर्थ को ज्ञान करने हेतु व्यंजना शक्ति ही समर्थ होती है ।

it is impossible to coin a word for each particular within a genus; for example; if there be a thousand million particular horses; it will be impossible to coin a word capable of connoting each horse separately and individually. On the otherhand; if the word horse were to connote a paticular horse; it will fail to Connote another particular horse, because a word primarily has just one connotation. Therefore a word can connote just the genus and not all the particular individuals within that genus.

Meaning is also of many kinds. The first one being the primary significance which means the conventional meaning presented to the mind of a listener without the intervention of any aids other

यदाह तत्रभवान् भर्तृहरिः ।

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ।। इति ।।

तत्र संयोगेन यथा । शङ्खचक्रधरो हरिरित्युक्ते कृष्ण एवाभिधा नियम्यते । विप्रयोगेण यथा । विना रामं सीता दण्डकारण्यमविशदितिदाशरथौ । साहचर्येण यथा । रामलक्ष्मणाविति तत्रैव । विरोधेन यथा ।

---

संयोगादिप्रसंङ्गे भर्तृहरिणोक्तम्––संयोगो, विप्रयोगश्च, साहचर्यं विरोधोऽर्थः प्रकरणं लिङ्गं शब्दान्तरस्य सान्निध्यं सामर्थ्यमौचिनी, देशः कालो, व्यक्तिः स्वरादयः शब्दार्थस्यानवच्छेदे विशेषरूपो हेतुः । संयोगार्थे यथा हरिः शङ्खचक्रसहितः कृष्ण एव बोद्धव्यः । विप्रयोगे यथा––विना रामं सीता दण्डकारण्यं प्राविशदिति दाशरथौ । साहचर्येण यथा–तत्रैव रामलक्ष्मणाविति । विरोधे यथा–

---

संयोगादि के प्रसंग में भर्तृहरि ने लिखा है कि संयोग, विप्रयोग, साहचर्य, विरोध, प्रकरण, लिङ्ग शब्दान्तर, सान्निध्यः सामर्थ्य, औचित्य, देश, काल, व्यक्ति, स्वरादि शब्द के अर्थ में विशेष रूप से हेतु होते हैं । संयोग अर्थ में जैसे शङ्खचक्र-धारी हरि कहने पर कृष्ण के ही बोध का नियमन होता है, अर्थ का नहीं । इसी प्रकार विप्रयोग आदि भी हैं । विप्रयोग में विना राम सीता ने दण्डकारण्य में प्रवेश किया । यहाँ दशरथ के पुत्र राम दाशरथि का बोध होता है । साहचर्य के उदाहरण में राम के साथ वहीं लक्ष्मण का बोध होगा । विरोध जैसे—

---

than convention and the process by which such conventional meaning is presented, is cılled (Abhidhā) expression

Such meaning depends upon the necessity to shift emphasis from one part of the sentence to another's as in the Cases of main Verb of a sentence being changed to the position of an adjective and a verb used adjectivally being shifted to Perform the tim function of the main verb,

As for example, in the following lines Cumām sa paśyan rijunaiva Cakṣuṣa Pracakrame Vaktumanujhita kramaḥ) śiva looking at Umā Casually went on speaking on his subject without any interruption." Here syntactical stress is on the action of speech and his looking at Umā is an adjectival phrase appears to be of secondary importance. But what the poet wants to say lays stress on the fact that śiva is absorbed into looking at Umā and his continued speech becomes a means concealing his sentiment This

रामार्जुनगतिस्तयोरिति भार्गवकार्तवीर्ययोः । अर्थेन यथा । स्थाणुं भज भवभञ्जनायेति हरे । प्रकरणेन यथा । सर्वं जानाति देव इति युष्मदर्थे । लिङ्गेन यथा । कुपितो मकरध्वज इति कुसुमायुधे । शब्दान्तरसान्निध्येन यथा देवस्य शृंङ्गारिण इति तत्रैव। सामर्थ्येन यथा । मधुना मत्तः कोकिल इति वसन्ते । औचित्येन यथा । पातु वो दयितामुखमिति साम्मुख्ये । देशेन राजधानीप्रमुखेन यथा । भात्यत्र परमेश्वर इति राजनि । कालेन यथा । चित्रभानुर्विभातीति दिवा दिवाकरे नक्तं तु वह्नौ । व्यक्तिः स्त्रीपुंनपुंसकरूपा । तया यथा । मित्रं दृश्यतामिति वयस्ये मित्रो दृश्यतामिति मयूखमालिनि । स्वरस्तु वेद एव न काव्येऽर्थविशेषावगमाय । आदिशब्दादभिनयादिपरिग्रहः । तत्राभिनयेन यथा ।

---

विरोधे रामार्जुनगतिः (परशुरामसहस्रार्जुनयोर्बोधो भवति) । अर्थे स्थाणुं भज-संसारदुःखविनाशाय, अर्थात् शिवं भज । स्थाणुना शिवस्यावबोधः । प्रकरणेन यथा-देवो जानाति सर्वम् । देवस्य प्रयोगो युष्मदर्थे भवति । लिङ्गे मकरध्वजः कुपितः । कामदेवस्यार्थे प्रयुक्तः ।) शब्दान्तरसान्निध्येन यथा देवस्य शृङ्गारिणः । सामर्थ्यार्थे मधुना मत्तः । अर्थाद् वसन्ते कोकिलो मत्तः । औचित्यबलेन । युष्मान् पातु । प्रियामुखमस्मिन् साम्मुख्यार्थे मान्यता । देशेन राजधानीप्रमुखेन । अत्र परमेश्वरो भाति । अर्थात् राजा शोभते । काले यथा चित्रभानुः सूर्यः दिवा दिने प्रकाशितः । रात्रौ अग्नेः अर्थो भविष्यति । समयानुसारेण ज्ञायते । व्यक्तौ त्रीणि-रूपाणि । नपुंसकस्त्रीपुरुषादिषु त्रिषु लिङ्गेषु व्यक्तिः । मित्रं पश्य । अर्थात् सखायं विलोकय नपुंसकलिङ्गे । मित्रः सूर्यः पुल्लिङ्गो भवति । उदात्तानुदात्तादि तु स्वरः वेदेषु प्रयुक्तः । काव्येऽर्थविशेषबोधनाय न । आदिशब्दाभिनयादौ ग्रहणम् । अभिनये यथा ।

---

रामार्जुन कहने पर परशुराम एवं सहस्रार्जुन का बोध होगा । अर्थ में-संसार के दुःख नाश करने के लिए स्थाणु को भजो । हर (शंकर) का बोध स्थाणु से होगा । प्रकरणार्थ में जैसे हे देव ! आप सभी को जानते हैं । देव (युष्मदर्थ) में प्रयुक्त माना जाता है । लिङ्ग जैसे मकरध्वज क्रोधित है, कामदेव अर्थ में प्रयुक्त है । शब्दान्तर की निकटता में जैसे देव का शृंगारी होना ठीक है । सामर्थ्य भाव के उदाहरण में मधु से मत्त अर्थात् वसन्त में कोयल मतवाली हैं । औचित्य में 'दयिताप्रिया के मुख' सामुख्य अर्थ की मान्यता होगी । राजधानी प्रमुख देश से जैसे परमेश्वर की शोभा है । राजा अर्थ में प्रयोग मान्य है । 'चित्रभानु' प्रकाशित है । इसमें दिन में सूर्य, रात्रि में अग्नि का अर्थ होगा । यह समयानुसार जाना जायगा । व्यक्ति स्त्री पुरुष नपुंसक तीनों लिङ्गों में होता है । (मित्रं) नपुंसक, में मित्रः पुंल्लिग में क्रमशः सखा और सूर्य अर्थ में प्रयुक्त है । स्वर तो वेद में प्रयुक्त होता है । काव्य में अर्थ विशेषबोधन के लिए नहीं । 'आदि' शब्द से अभिनय का ग्रहण अपेक्षित है । अभिनय में जैसे—

shift in the syntactical pattern gives a different meaning from what it connotes through (Abhidhā) Expression. śiva's unbroken speech acts as a mark to conceal the real feeling. As a matter of fact he was mainly intersted in umā and not the speech. Even though continuing his speeeh, śiva was attracted by umā's beauty and had to look at her. Here what was adjectival gets transferred into the position of the main verb. This is the process of ( Tāt-paryārtha ) purport or real meaning. This purport is confined to the shifting of importance from one part of the sentence to the other. In view of the limited connoted meaning of the line, it is obvious that purport ( Tātparya śakti ) can not cover the entire expanse of the suggested meaning. In this context a reference to Bhartṛihari the greatest authority on semantics will be relevant. Whereever we can have more than one connoted meaning there is occasion for doubt as to what a word can connote or denote. The following laws should be taken to recourse for the removal of all doubts—1. Juxtaposition 2. Incompatability 3. con committance 4. contradiction. 5. purpose 6. context 7. gender 8. congruity of certain sets of words, 9. capacity 10. Relevance 11. Place 12. Time 13. Individuality 4. Accent etc. For example. (Hari with the conch and wheel will mean only kṛiṣṇa) though the word has quite a number of connoted meaning. Here (Hari) juxtaposed with conch and wheel can have only one meaning. (Sitā without Rāma entered the Dandakāraṇya forest). The word Rāma here can have only one meaning, that is, because of this element of separation, Rāma the son of Daśratha even though the word Rāma has more than one connoted meanings.

The entire discussion is based on Mammaṭa, who in 'Kāvya Prakāśa' had already propounded the theory that the scope of expression (Abhidhā) is limited by factors enumerated by Bhartṛi-Hari, so that even the shifting of emphasis can not go beyond the connoted meaning of words and yet there are cases, in which words began to yield meanings which can by no means be their connoted meanings or even indicated meanings,

The fact, therefore, can not be denied that such meanings can be connoted neither by connotation nor by indication.

ईदृक् चित्ता सदा वेश्या प्रतार्यैवं कृताविटैः।
सिद्धे कार्ये पुनस्तस्यै दत्तमेतन्न काञ्चनम् ॥३॥

अपदेशेन यथा—

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।

निर्देशेन यथा—

भर्तृदारिके दिष्ट्या वर्धसे यदत्रैव कोऽपि कस्या
अपि वर्तत इति मामङ्गुलिविलासेन ख्यांतवत्यः ॥४॥

इत्थं संयोगादिभिरभिधायां नियमितायां यदनेकार्थस्य शब्दस्यार्थान्तरमपि यत्र क्वचन प्रतीतिगोचरी भवति तत्र व्यञ्जनाव्यापार एव प्रगल्भते । यथा—

आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्नि स्फुरत्तुहिनदीधितिकोटिमेनमुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥५॥

---

धूर्तैश्चिन्तास्वरूपिणी वेश्या सर्वदा प्रताडिता । सिद्धे कार्यें सति पुनः तस्यै न काञ्चनं प्रदत्तम् । अपदेशोदाहरणे—येभ्यो धनं दत्तम्, तेभ्यः पुनः धनं नादत्तम् । निर्देशनेन यथा – राजकन्ये ! त्वं स्वसौभाग्येन वर्धसे । अत्रैव कोऽपि वर्तते केनैव प्रयोजनेन, तर्हि मामङ्गुलिसंकेतेन वदतु । एवं भर्तृहरिणा प्रस्तुतसंयोगविप्रयोग-साहचर्यविरोधार्थप्रकरणादिना शब्दार्थज्ञानोदाहरणे नियमे यथानेकार्थः शब्दस्यार्था-न्तरोऽपि कुत्र न दृष्टिगोचरः प्रतीयते, तत्र व्यञ्जनाव्यापारो भवत्येव । उदाहरणम्– इमं नगेशं दृष्ट्वा कोऽस्मिन् भुवि नाश्चर्यचकितः । यो विस्तृतदिग्वस्त्रेणाच्छादितः । पृथ्वीं चाक्रम्योच्चायतशिखरैः सहावस्थितः । शिरसि हिमराशिः । अर्थात् नरसिंह-नरेशस्य राज्यं विशालमायतञ्च । तस्य शरीरं विशालम् । यशः सर्वत्र व्याप्तमस्ति ।

---

धूर्तों द्वारा ऐसी चित्त रूपी वेश्या सर्वदा ठगी गई है । सिद्ध कार्य होने पर पुनः उसके लिए सोना नहीं दिया गया । अपदेश के उदाहरण में—जिसको सम्पत्ति दे दी गई, फिर उसकी सम्पत्ति लेकर उसका नाश करना ठीक नहीं हैं । निर्देश के उदाहरण में—‘राजकन्ये ! तुम अपनी भाग्य से बढ़ती हो, जो यहाँ ही कोई भी हो किसी प्रयोजनवश वर्तमान हो तो ऐसा मुझे अंगुलि के संकेत से बता दे । इस प्रकार भर्तृहरि द्वारा प्रस्तुत संयोग, विप्रयोग, साहचर्य, विरोध, अर्थ प्रकरणादि से शब्द अर्थ ज्ञान के उदाहरण नियम कहने पर जहाँ अनेक अर्थवाले शब्द का अर्थान्तर भी कहीं दृष्टिगोचर एवं प्रतीत होता है । वहाँ व्यञ्जना व्यापार ही होता है । उदा-हरण—इस पर्वतराज को देखकर कौन इस पृथ्वी पर आश्चर्य नहीं करता है । जो विस्तृत दिशारूपी वस्त्र से आच्छादित और पृथ्वीको आक्रमित कर ऊँचे चौड़े शिखरों सहित अवस्थित है । सिर पर बर्फ जमी है । चक्रवर्ती नरेश नरसिंह के ऊपर यह उक्ति है । अर्थात् नरसिंह नरेश का राज्य लम्बा चौड़ा है । और उनका शरीर विशाल है । उनका यश सर्वत्र व्याप्त है । इससे कौन आश्चर्यित नहीं होता है ।

अत्र तावन्न श्लेषः । केवलप्राकराणिकगतत्वेन केवलाप्राकरणिकगतत्त्वेन च तस्य भावात् । नाभिधा । प्राकरणिकनियमितायास्तस्या अप्राकराणिकाभिधाने सामर्थ्याभावात् । न तात्पर्यम् । सिद्धानां साध्यार्थपरत्वं तात्पर्यमुच्यते तदुपात्त एव संभवति यथा 'उमां स पश्यन्नृजुनैव चक्षुषा' इत्यत्र चक्षुषः प्रमाणान्तरत एव सिद्धे दर्शनकरणत्वे विशेषणार्थमुपादानम् ।

अत्र तु न श्लेषः । केवलप्राकरणिकगतत्वेन केवलाप्राकरणिकगतत्वेन तस्य च भावात् । अभिधा न । प्राकरणिकनियमितायास्तस्या अप्राकरणिकाभिधाने समर्थताभावात् । तात्पर्य न । सिद्धशब्दानां साध्यार्थपररूपत्त्वं तात्पर्यम् । तस्याः सिद्धेः संभावना । तात्पर्यार्थो व्यङ्ग्यार्थः । उदाहरणम् – 'उमां स पश्यन्नृजुनैव चक्षुषा' अस्मिन् चक्षुषः परप्रमाणेन सिद्धिदर्शनस्य विशेषार्थस्य ग्रहणम् ।

यहाँ तो श्लेष नहीं है । यह केवल उसके प्राकरणिक एवं अप्राकरणिकगत होने के कारण है । अभिधा नहीं है । यह उसके प्राकरणिक नियमित के अप्राकरणिक अभिधान में सामर्थ्य का अभाव होना कारण है । तात्पर्य नहीं है । सिद्ध शब्द के साध्य अर्थ को दूसरे रूप में तात्पर्य कहा जाता है । उसकी सिद्धि की ही संभावना है । तात्पर्यार्थ भी व्यङ्ग्यार्थ होता है । उदाहरणार्थ–उमां स पश्यन्नृजुनैव चक्षुषा' इसमें चक्षु के दूसरे प्रमाण से ही सिद्ध दर्शन करने के विशेष अर्थ का ग्रहण किया जाता है ।

The meaning must result from some other power of words.This other power is what we call suggestion or (Vyanjanā). Vidyādhara argues the whole point exactly like Mammaṭa, There is no difference in the line of argument followed by these two scholars. However the example given by Vidyādhara is different from one given by Mammaṭa. In Mammaṭa's example words like (Silimukh); (Dān), ( Kar ), ( Vanśa ) etc. having been limited by the Context, lead only to one meaning while the other meaning achrues from the power of suggestion. In Vidyādhara's example the words (Digambara) (śringa`, (Tuhindidhitikoti) etc. have different Connoted meanings and being limited by the Context to a particular meaning, they yield quite different meaning, Which is impossible except through their power of suggestion.

This suggested meaning should not be confused with the (Tātparya) purport, which is either the shifting of importance from one part of the sentence to another or by the process through whieh what is propounded remains, what is unprpounded. Even accepting both the theories relating to purport What is

नापि लक्षणा । गवादिपदानां मुख्यार्थबाधादिविरहात् । इत्यभिधातात्पर्यलक्षणा-रूपव्यापारत्रितयातिवर्ती ध्वननद्योतनव्यञ्जनप्रत्यायनावगमनादिव्यपदेशनिरूपितश्चतुर्थो व्यापारो दुरपह्नव एव । ततश्च शब्दशक्तिमूलानुरणनरूपव्यङ्ग्याभिधानस्य ध्वनेर्महिम्ना नगेशं नगेशमिवेत्यत्रोपमालङ्कारः प्रतीयते ॥

शब्दोऽयं लाक्षणिको व्यापारो लक्षणा भवेद्यस्य ।
एतल्लक्षणमस्याः सामान्यं कथ्यते पूर्वम् ॥६॥

अस्मिन् तु लक्षणापि न । गवादिपदानां मुख्यार्थबाधराहित्यात् । एवं त्वभिधा-तात्पर्यलक्षणारूपव्यापारः । त्रीणि ध्वननद्योतनव्यञ्जनानि प्रत्यायनस्य ज्ञाने निरूपितानि । तात्पर्यार्थस्तु चतुर्थो व्यापारः । दुरपह्नव एव तदनन्तरं शब्दशक्तिमूलानुरणनरूपव्यङ्ग्याभिधानस्य ध्वनेर्महिम्ना नगेशं नगेशमिवात्रोपमालंकारः प्रतीयते ।

शब्दोऽयं यस्य व्यापारो लाक्षणिकः शक्तिश्च लक्षणा । लक्षणमेतत् सामान्यं पूर्वमेव कथ्यते स्म ।

इसमें लक्षणा भी नहीं होती । गो आदि पदों का मुख्यार्थ बाधरहित होना कारण है । इस प्रकार अभिधा तात्पर्य, लक्षणा रूप व्यापार तीनों ध्वनन, द्योतन, व्यञ्जन प्रत्यायन के जानने में निरूपित हुए । तात्पर्यार्थ चौथा व्यापार है । कठिनता से छिपाया जा सकता है । तदनन्तर शब्दशक्ति मूल अनुरणन रूपव्यङ्ग्य अभिधान के ध्वनि की महिमा से नगेशं नगेशमिव' यहाँ उपमालंकार की प्रतीति होती है ।

यह शब्द लाक्षणिक व्यापारवान् और शक्ति लक्षणा है । यह सामान्य लक्षण पूर्व में ही कहा गया है ।

noteworthy, is that no type of purport can go beyond the Connotational meaning of the words implied in framing a sentence. In the example (Umām sa paśyan etc.) the words (Cakṣuṣā), (Paśyan) etc. inspite of the shifting emphasis brought about by purport do not go beyond the connotational meaning of the words implied in the sentence.

It is obviously not indication. The suggested meaning can not be subsumed by the indicated meaning of the word; because the power of indication functions only in cases where in the primary meaning suffers from some kind of incompatibility. For example in the sentence, this resident of the Punjāb is an ox. Here the word ox in its primary meaning of an animal is incompatible with the man's coming from the Punjāb, because a man is not an ox nor an ox a man. Therefore, the secondary meaning that this man is as good as an ox makes its appearance so that the

**मुख्यार्थानुपपत्तौ तद्योगे रूढ़ितोऽथवापि फलात् ।**
**अन्योऽर्थो यदि लक्ष्यो भवति तदा लक्षणाभिमता ॥७॥**

मुख्यस्यार्थस्य बाधस्तेन सम्बन्धः प्रसिद्धिः प्रयोजनं वा लक्षणायामुपयुज्यते । ततश्च मुख्यार्थस्य बाधे तेनैव सम्बन्धे मुख्येनार्थेनामुख्यार्थो यल्लक्ष्यते स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा । तत्र कुशल इत्यादौ रूढ़ितो लक्षणा । गङ्गायां घोष इत्यादौ तु प्रयोजनात् ॥

---

यत्र मुख्यार्थस्य बाधः, तत्र लक्षणयारूढ़प्रयोजनभेदात् स्पष्टार्थो भवति । लक्षणायां रूढप्रयोजनयोः तत्र सिद्धिः । तदनन्तरं मुख्यार्थबाधे तेनैव सह सम्बन्धे मुख्यार्थात् गौणार्थो लक्ष्यते । स आरोपित शब्दव्यापारः परार्थनिष्ठो लक्षणेयं च शक्तिः । 'कुशल' शब्दे रूढ़िः 'गङ्गायां घोषः' प्रयोजनवती लक्षणा । कुशस्याग्रभागः तीक्ष्णो भवति । अतः कुशलस्यार्थः तीक्ष्णे रूढ़ार्थः 'गङ्गायां घोषः' इत्यस्मिनाभीरपल्ली न, गङ्गातटे घोषः, तस्य शैत्यपावनत्वविशिष्टप्रयोजने तटस्यार्थो भवति । अत्राभिधेयार्थो नहि प्रतिपादितः । प्रत्युल्लक्षणयार्थः स्पष्टो भवति ।

---

जहाँ मुख्य अर्थ का बाध हो, वहाँ लक्षणा से रूढ़ एवं प्रयोजन भेद से अर्थ स्पष्ट होता है । मुख्यार्थ बाध से लक्षणा में रूढ़ एवं प्रयोजन की सिद्धि होती है । इसके अनन्तर मुख्यार्थ बाध होने पर उससे सम्बन्धित मुख्य अर्थ से गौण अर्थ जो लक्षित होता है, वह आरोपित शब्द व्यापार दूसरे में निष्ठ होता है और यह लक्षणा शक्ति होती है । 'कुशल' शब्द में रूढि एवं 'गङ्गायां घोषः' में प्रयोजनवती लक्षणा है । कुश का अग्रभाग तीक्ष्ण होने पर 'कुशल' का अर्थ तीक्ष्ण रूढार्थ है । गङ्गा में आभीरपल्ली न होकर गङ्गा तट पर उसके शैत्य पावनत्य विशिष्ट प्रयोजन में तट होने का अर्थ है । यहाँ अभिधा से अर्थ ध्वनित प्रतिपादित नहीं होता है । प्रत्युत लक्षणा से अर्थ स्पष्ट होता है ।

---

word ox instead of giving its own meaning namely the animal ox begins to the meaning, (certain qualities of an ox). That is to say, a noun begins to take the shape of an adjective. The ease of suggested meaning is quite different, because it is not caused by any incompatibility of the words used, which on the other hand is basic to the power of indicotion. The fact, therefore, Can not be denied that this power of suggestion has a distinctive entity; apart from the power of connotation, purport and indication; no matter what name is assigned; for it is called in sanskrit (Vyanjanā) (*D*yotana) (Pratyāyana) (Avagamana) and so on.

"शब्दोऽर्पयति परार्थं यद्यात्मानं तदा जहत्स्वार्था" ॥ ८अ ॥

त्वत्खड्गधारा पयसि प्रवीराः पतन्ति ये संयति संमुखीनाः ।
वसन्ति ते वीर नृसिंहदेव दुरासदायां सुरदीर्घिकायाम् ॥८॥

अत्र सुरदीर्घिकाशब्दस्य मुख्येऽर्थे स्रोतसि रिपुनगराधिकरणता न संभवतीति सुरदीर्घिकाशब्दो मुख्यार्थे स्रोतोरूपे बाधितस्तमर्थं हित्वा तदधिकरणतासिद्धयर्थमात्मानमतिशयितशैत्यपावनत्वादिद्योतनाय परिसराय समर्पयति तेनेयं जहत्स्वार्था समाख्याता ।

---

शब्दो यदा स्वार्थं परार्थेऽर्पयति तदा जहत्स्वार्थलक्षणावृत्तिः ।

हे वीर नरसिंह देव ! त्वत्खड्गधारायां समरस्थले सम्मुखीनाः वीराः पतन्ति-भुवि । ते दुष्प्राप्यदेवभवनानि यान्ति निवसन्ति चेत्यर्थः । दिवंगताः इत्यर्थः ।

मुख्यार्थे स्रोतस्वरूपखड्गे शात्रवनगराधिकरणत्वं न संभवति । एवं च सुरदीर्घिकाशब्दो मुख्यार्थे स्रोतरूपे बाधितः । तमर्थं विहाय तदधिकरणतासिद्धये स्वातिशयशैत्यपावनत्वं द्योतयति । अतो जहत्स्वार्थायाः व्याख्येयम् ॥

---

शब्द जब अपने अर्थ को दूसरे अर्थ में अर्पण करता है, तो जहत् स्वार्था लक्षणा वृत्ति होती है । हे वीर नरसिंह देव । तुम से तलवार की धारायें रणक्षेत्र में सम्मुख जो वीर गिरते हैं, वे कठिनता से प्राप्त होने वाले देवों के भव्य भवनों में निवास करते हैं । अर्थात् स्वर्ग चले जाते हैं । यहाँ उदाहरण 'सुरदीर्घिका' शब्द मुख्य अर्थ में स्रोत रूप से बाधित हो जाता है । और उस अर्थ को छोड़कर उसकी अधिकरणता सिद्धि के लिए अपने अतिशय शीत पावनत्व आदि का द्योतन करता है । इसमें यह जहत्स्वार्था की व्याख्या हुई ।

---

To Conclude words have at least four types of meaning, Con notational meaning, by the power of Convention, indicated meaning by the power of indicatlon, purport by the power of (tātpara) and suggested meaning, by the power of suggestion.

Vidyādhara accepts Mammaṭa's line of argument about indication in its entirety and adds something of his own to this line. For example; the power of indication is a case of superimposition and is Confined to what is indicated without intervention. As in the case of (Gangāyāṁ Ghoṣaḥ), ( Ābhir ) Village is said to be situated in the Ganges. Here the word (Gangā) with its connoted meaning the stream of the (Gangā) is unthinkable to hold a Village inside itself, so in (Gangā) means the bank of the (Gangā). Between the stream and the bank there is an immediate connection, so is the case in example like (Karmaṇi

इयमेवाप्रस्तुतप्रशंसादेरलङ्कारस्य बीजम् । इयं तु लक्षणलक्षणेति परैरभिधीयते ।

सा विपरीता यस्यां लक्षयति पदं स्ववाच्यविपरीतम् ।।९।।

किमिव नापकृतमनेन । अत्रोपकारिणं प्रत्यपकृतमिति वचनं बाधितं सदुपकृतमिति लक्षयति । इयमेव व्याजस्तुतेर्बीजम् ।।

सिद्धिं निजक्रियायाः कर्तुं यस्यां परस्य शब्देन ।
आक्षेपः क्रियतेऽसावजहत्स्वार्था समाख्याता ।।१०।।

काव्यालङ्कारमीमांसातर्कव्याकरणागमाः ।
प्रविशन्ति तवास्थानीं नरसिंह नरेश्वर ।।११।।

अत्र स्वार्थमजहत एव काव्यादयः स्वप्रवेशरूपक्रियासिद्धये तत्सम्बन्धिनो विदुषो लक्षयन्ति माहात्म्यद्योतनं तु प्रयोजनम् । इयमेव समासोक्त्यादेर्बीजम् । इयं पुनरुपादानलक्षणेति मतान्तरे मीयते ।

---

इयं तु लक्षणलक्षणेति परैः कथ्यते । इयमेवाप्रस्तुतप्रशंसादीनामलङ्काराणां बीजम् । यस्यां पदं स्ववाच्यविपरीतं, विपरीता सा लक्षणा । किमनेनाप्रकृतेन । अत्रोपकारिणं प्रत्यपकृतमिति वचनेन बाधितं सदुपकृतमिति संसूच्यते । इयमेव व्याजस्तुतेर्बीजम् । अजहत् स्वार्थाभिधीयते; यस्यां स्वक्रियायाः सिद्धिं कर्तुमन्यशब्देनाक्षिप्यते । हे नरसिंहराजन् ! भवान् काव्यालङ्कारमीमांसातर्कव्याकरणज्ञोऽस्ति । इह निजार्थं न हित्वैव काव्यादिस्वप्रवेशरूपक्रियासिद्धये तत्सम्बन्धिनो विद्वांसः लक्षयन्ति महत्ताद्योतनं तु लक्ष्यम् । इयमेव समासोक्त्यादेर्बीजम् । इतरमतेषु पुनरियमुपादानलक्षणेति कथ्यते ।

---

यही अप्रस्तुत प्रशंसा आदि अलङ्कार का बीज है । यह तो लक्षणलक्षणा दूसरों द्वारा कहा जाता है । जिसमें पद अपने वाच्य के विपरीत है, वह लक्षणलक्षणा विपरीत हुई । इससे अपकृत किस प्रकार नहीं है । यहाँ उपकारी के प्रति अपकृत इस वचन से बाधित हो तो सत्य अर्थ में उपकारी लक्षित होता है । यही व्याजस्तुति का बीज है ।

अजहत् स्वार्था वह कही जाती है। जिसमें अपनी क्रिया की सिद्धि के लिए दूसरे शब्द से आक्षेप किया जाता है ।

हे नरसिंह राजन् ! काव्य-अलङ्कार, मीमांसा, तर्क, व्याकरणशास्त्र तुझमें प्रविष्ट होते हैं । अर्थात् इन सभी विषयों के ज्ञाता नरसिंह नरेश है । यहाँ अपने अर्थ को न छोड़ते हुए ही काव्यादि स्वप्रवेशरूप क्रियासिद्धि के लिए उससे सम्बन्धित विद्वान् गण लक्ष्य करते हैं । महत्ताद्योतन करना तो प्रयोजन है । दूसरा अर्थ स्वार्थ परित्याग विना ही सिद्ध होता है । यही समासोक्ति आदि का बीज है । यह पुनः उपादान लक्षणा है। ऐसा दूसरे मतवाले कहते हैं ।

अंशेनैकेन पुनर्जहाति न जहाति चान्येन।
शब्दः स्वार्थं यदि जहदजहत्स्वार्था समाख्याता ॥१२॥

यत्कर्णतालप्रभवैः समीरैः प्रतापदीपाः शमिता रिपूणाम् ।
सोऽयं तव न्यक्कृतदिक्करीन्द्र लीलायितो वीरकरेणुराजः ॥१३॥

अत्र यद्देशकालविशिष्टत्वं वारणेन्द्रस्य पूर्वमासीत्तद्देशकालविशिष्टत्वमधुना नास्तीति सोऽयमित्यत्र ।

तत्तांशे जहाति स्वार्थमिदन्तांशे तु न जहातीति जहदजहत्स्वार्थेयम् ।
विषयी विषयश्च यदा सारोपा स्यात्तदा द्विविधा ॥१४॥

आरोप्यमाणारोपविषयौ । यदानपह्नुतस्वरूपौ समानाधिकरण्येन निर्दिश्येते तदा सारोपा । इयं च द्विविधा गौणी शुद्धा चेति । तत्र गौणी गुणाध्यारोपरूपात् सादृश्यात् प्रवर्त्तते । यथा--

---

यदा शब्दः स्वार्थमन्यांशेन जहाति, परांशेन स्वार्थं न त्यजति तदा जहदजहत्स्वार्थालक्षणा भवति । यत्र गजकर्णेन जनतिवायुना शत्रोः प्रतापदीपकः शान्तः । तत्रायं दिग्गजः क्रीडां कुर्वन्नयं वीरो गजराजः त्वया व्यर्थः कृतः ॥

अत्र देशकालविशिष्टत्वं वारणेन्द्रस्य पूर्वमेव विचारितम् । तस्य देशकालविशिष्टतां मन्यमानः सम्प्रति नास्ति, वारणेन्द्रपदस्य समीक्षया स्पष्टो भवति । यत् तदंशेऽयं जहाति स्वार्थमन्यांशे तु जहाति न । इयं जहदजहत्स्वार्थालक्षणा कथ्यते । यत्रोपमानोपमेययोः शब्दतः कथनं तत्र सारोपालक्षणा भवति । इयं द्विधा भवति । गौणी शुद्धा च । तत्र गौणी गुणाध्यारोपरूपात् सादृश्यात् भवति । उदाहरणार्थम्—

---

जब शब्द अपने अर्थ को अन्य अंश से त्याग करता है एवं दूसरे अंश से स्व अर्थ का त्याग नहीं करता है, वहाँ जहदजहत् स्वार्था लक्षणा कही जाती है । जहाँ हाथी के कान से उत्पन्न वायु द्वारा शत्रुओं के प्रताप रूपी दीपक बुझकर शान्त हो गए । वह यह दिग्गज क्रीडा करनेवाला वीर गजराज तुम्हारे द्वारा व्यर्थ किया गया है । यहाँ देशकाल विशिष्ट वारणेन्द्र का पहले जो विचार था; उसे देशकाल से विशिष्ट मानते हुए इस समय नहीं है । वारणेद्र शब्द की समीक्षा से स्पष्ट है कि यह उस में त्याग करता है, स्व अर्थ का दूसरे अंश में त्याग नहीं करता है । यह जहदजहत्स्वार्था लक्षणा है । जहाँ उपमान; उपमेय (विषयी विषय) दोनों शब्दतः कथित हैं, वहाँ सारोपालक्षणा होती है । यह दो प्रकार की होती है । जहाँ उपमान; उपमेय के विषय समानाधिकरण्य रूप से नहीं छिपाये जाते हैं, वहाँ सारोपा लक्षणा के गौणी, शुद्धा दो भेद हैं । वहाँ गुण के अध्यारोप रूप होने से सादृश्य कारण प्रवृत्त होता है । जैसे—

Kuśalaḥ), where the primary meaning of (Kuśala) i,e. the cutter of (Kuśa) grass is incompatible with the meaning of (Karmaṇi) action. The meaning of the sentence will be cutter of (Kuśa) grass and proficiency in action are two different propositions to impose the one on the other, will yield an absurd meaning. These secondary meanings have been superimposed in the primary meanings, so that they are the examples of the indicated meaning. The former case is of purposive indication and the latter is the case of conventional indication. The difference being that the former has the purposive view that being to point out the Village situated on the bank of the (Gangā) is cool and sacred where as the latter has no such purpose and being used in the secondary meaning that the secondary meaning has in course of time assumed the shape of its primary meaning. Proceeding further, Vidyādhara classifies indicated meaning along with the lines of (Vedāntins) i-e-indicated meaning canbe classed into threc types (jahatswārthā) Where the word is bereft entirely of its primary meaning; (Ajahatswārthā) when a word only partially renounces its primary meaning and (Jahatajahatswārthā) where a word abandons a part of its primary meaning; but holds on to the part of it. It should be noted that Mammaṭa seems to have rejected this third classification though he asserts so only by force of (argumentum et Silentio) argument from silence.

Some other scholars call (Jahatswārthā) as (Lakṣaṇalakṣaḍā) and this is at the root of figures like ( Aprastutpraśansā); as also of (Vyājstuti . (Ajahatswārthā) is named by other scholars as (Upādānlakṣaṇā) and this is at the root of figures like (samāsokti). Here the point worthy of note is that while Vidyādhara is a strong supporter of ( Ānandvardhana ), ( Abhinavagupta ) and (Mammaṭa), has gone against their views which maintain suggestion and not indication at the root of figures like (Aprastutpraśansā); (Vyājstuti); (samāsokti).

Where a word leaves out the meaning of one part and retains at the same time the meaning of the other part, is called ( Jahatajahatswārthā ) as accepted by the school of (Vedāntins). This type of indication like (Gauṇisāropā) and (śudhāsāropā); (Gauṇisādhyavsānā) and (śudhāsādhyavsānā) are just the same as defined and illustrated by Mammaṭa.

वीरश्रीस्वरसाभिसाररजनी निर्माणकर्मान्तिक,
च्छायाकन्दलितान्धकारकलिकातापिच्छिताशाञ्चलः ।
जीयादुत्कलभूमिपाल भवतः खड्गोरणप्राङ्गणे,
शत्रुक्षोणीभृताममर्त्यनगरी यात्रासु कार्तान्तिकः ॥१५॥

अत्र रिपुविषयसुरपुरप्रस्थानोपदेशकारित्वादयो मौहूर्तिकगुणा लक्ष्यमाणा अपि प्रवृत्तिनिमित्ततां भजन्ते। ताद्रूप्यप्रतीतिः प्रयोजनम्। शुद्धा पुनरुपचारवती। सादृश्येतरकार्यकारणत्वादिसम्बन्धान्तरकारिणी वा। यथा—

मदक्षीबक्षोणीपतिपरिषदायोधनमही,
जयाङ्कश्रीशङ्कावहगुणकिणश्रेणिललितः।
भुवो भारं वोढुं भुजगपतिभोगप्रतिभट-
स्त्रिलोकी कल्याणं जयति तव दोरुत्कलपते ॥१६॥

---

वीरश्रीस्वरसाभिसाररात्रिनिर्माणकर्मान्तिकच्छायाजनितसघनान्धकारस्य कलिकया दिगञ्चलः आच्छादितः। हे उत्कलनरेश ! भवतः खड्गः युद्धस्थले जीयात्। यः शत्रुनरेशस्यामरनगर्याः यात्रायां कार्तान्तिकः।

अत्र शत्रुविषयेऽमरपुरस्य प्रस्थानमुपदेशदानादौ क्षणमात्रमपि गुणं परिलक्षयति। तमपि प्रवृत्तिकारणमिति कथ्यते। तस्य स्वरूपस्य प्रतीतिः प्रयोजनम्। शुद्धालक्षणम पुनरुपचारवती। सादृश्यभिन्नकार्यकारणादेः परसम्वन्धो विकल्परूपो भवति। उदाहरणार्थम्—

हे उत्कलनरेश ! मदभरितराज्ञां परिषदि युद्धे पृथ्वीजयशोभया शङ्कितगुणौघेन ते सुन्दरप्रतीयमानाः भुजाः भूमेः भारोद्वहनाय शेषनागस्य फणस्य प्रतिद्वन्दितां भजन्ते त्रयाणां लोकानां नाथस्य कल्याणसम्वन्धिजयं प्राप्नुयुः॥

---

वीरश्री स्वर अभिसार सहित रात्रि निर्माण कर्म के अन्त करने वाली छाया से उत्पन्न घने अन्धकार की कलिका से दिशा का अञ्चल ढका है। हे उत्कलाधिपति ! आप की तलवार युद्धस्थल में जीवित रहे, जो शत्रु राजाओं के अमर नगरी की यात्रा में काटने वाली हैं। अर्थात् इन्द्रलोक पहुँचाती है।

यहाँ शत्रु विषय में इन्द्रलोक के प्रस्थान होने पर उपदेश देने आदि में क्षणमात्र में गुण लक्षित होता है। उसे भी प्रवृत्ति का कारण बनना पड़ता है। उसके स्वरूप की प्रतीति प्रयोजन है। शुद्धालक्षणा पुनः उपचारवती होती है। सादृश्यभिन्न कार्य कारणता आदि का दूसरा सम्बन्ध विकल्प रूप से होता है। जैसे–हे उत्कलनरेश ! मदयुक्त राजाओं की परिषद् युद्ध में पृथ्वी जय की शोभा से शङ्कित गुणों के समूह से सुन्दर लगती हुई भूमि के भार को ढोने के लिए शेषनाग के फण की प्रतिद्वन्दी तुम्हारी भुजाएँ तीनों लोक के स्वामी के कल्याण सम्बन्धी जय को प्राप्त करे। अर्थात् आप की भुजाएँ उत्कृष्ट होते हुए नमस्य हैं।

अत्र कल्याणहेतुत्वात् कल्याणम्। अत्रापि ताद्रूप्यप्रतीतिः प्रयोजनम्। इयमेव रूपकादेर्बीजम्। उपचारश्च कार्यकारणभावादेर्निमित्तस्य पाञ्चविध्यात् पञ्चधा भवति। कार्यकारणभावे प्रागेवोदाहृतम्। तादर्थ्ये यथा। इन्द्रार्था स्थूणा इन्द्रः। स्वस्वामिभावलक्षणसम्बन्धे यथा। राजकीयः पुरुषो राजा। अवयवावयविभावे यथा। अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः। तात्कर्म्ये यथा। अतक्षा तक्षा।

विषयिनिगीर्णे विषये साध्यवसाना द्विधा ख्याता ॥१७॥

द्विधा गौणी शुद्धा चेति। तत्राद्या यथा। अयं पारिजात इत्यत्र वितरणचणत्वादयः। पारिजातस्य गुणा वीरनरसिंहे लक्ष्यमाणा अपि प्रवृत्तिनिमित्ततां भजन्ते। प्रयोजनं च सर्वथैवाभिन्नत्वप्रतीतिः। अन्त्या यथा। अयमानन्द इत्यत्रानन्द हेतुत्वादानन्दः। इयमेवातिशयोक्तेर्बीजम्।

---

अत्र कल्याणं कल्याणनिमित्तात्। इहापि तद्रूपताप्रतीतिः प्रयोजनम्। इयमेव रूपकादेरलङ्कारस्य वीजम्। उपचारस्य कार्यकारणादेर्निमित्तस्य पञ्चविधा भवति। कार्यकारणभावे पूर्वमेवोदाहृतम्। तादर्थ्ये यथा-इन्द्रार्था स्थूणा इन्द्रः, स्वस्वामिभावलक्षणसम्बन्धे यथा-राजकीयः पुरुषो राजा, अवयवावयविभावसम्बन्धे यथा अग्रहस्तः। इहाग्रभावेऽवयवे हस्तः। तात्कर्म्ये यथा। अतक्षा तक्षा।

विषयिणा विषयं निजेऽन्तर्भावितेन साध्यवसानालक्षणा भवति। द्वौ भेदौ। गौणी शुद्धा च। अत्र गौणीलक्षणायाः उदाहरणेऽयं पारिजातः। इह वितरणमेवञ्च वितरणत्वं कल्पवृक्षस्य गुणो भवति। यो गुणो वीरनरसिंहनरेशे परिलक्षितो भवन् प्रवृत्तिनिमित्ततां भजते। प्रयोजनं सर्वथैव समानरूपेण प्रतीयते। अन्त्या यथा। (अयमानन्दः।)अत्रानन्दस्यनिमित्तान्, कृत्वा तस्मिन्नानन्दस्य व्यवहारोऽतिशयोक्त्यादेर्बीजमेवास्ति।

---

यहाँ कल्याण कल्याण हेतुता से है। यहाँ भी तद्रूपता को प्रतीति प्रयोजन है। यही रूपक आदि अलंकार का बीज है। और उपचार कार्यकारण भाव आदि निमित्त के पाँच विधियों के कारण पाँच प्रकार का होता है। कार्य कारण में पहले ही उदाहरण दिया गया है। तादर्थ्य में जैसे 'इन्द्रार्था स्थूणा इन्द्रः स्वस्वामिभाव लक्षण सम्बन्ध, में जैसे राजकीय पुरुषो राजा' अवयवावयविभाव सम्बन्ध में जैसे—'अग्रहस्त' इसमें अग्रभाव में अवयव में हस्त, तात्कर्म्य अर्थ में जैसे अतक्षा तक्षा आदि हैं। विषयी द्वारा विषय को अपने अपने में अन्तर्भावित कर लेने से साध्यवसाना लक्षण होती है। दोनों के गौणी, शुद्धा दो भेद हुए। इसमें गौणी के उदाहरण में 'अयं पारिजातः'। इसमें वितरण एवं वितरणत्व आदि पारिजात (कल्पवृक्ष) के गुण हैं। जो नरसिंह में लक्षित होते हुए भी प्रवृत्ति निमित्त होते हैं। और प्रयोजन सर्वथा ही समान रूप से प्रतीत होता है। अन्त्या में जैसे ( अयमानन्दः )। इसमें आनन्द का निमित्त होने से उसमें आनन्द पद का व्यवहार होता है। यही अतिशयोक्ति अलंकार का बीज है। विद्याधर के मत में लक्षणा के सात भेद ये हैं—१. जहत् २. अजहत् ३. जहदजहत् ४. शुद्धा सारोपा ५. शुद्धा साध्यवसाना ६. गौणीसारोपा ७. गौणीसाध्यवसाना।

इत्यस्माभिर्भिदाः सप्त लक्षणायाः प्रदर्शिताः ।
संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ॥१८॥
अस्याः संकलनेऽन्योन्यमष्टाविंशतिरीरिताः ।
पञ्चत्रिंशत् समाख्याताः शुद्धभेदैः समं पुनः ॥१९॥
स्वैः प्रभेदैरलङ्कारैर्ध्वनिभेदैश्च संगता ।
वितन्वती चमत्कारं संख्यामत्सरिणी मता ॥२०॥

अङ्गाङ्गिभावेन संशयेनैकैकलक्षकानुप्रवेशेन च भवन् संकरो न त्रिरूपतामतिवर्तते।

क्रमेण यथा— आक्रम्य स्मरवैरिशेखरसरित् पूरैकसिंहासनं,
राजानं नरसिंह पार्थिव तथाहंकारभारोद्धुरः ।
त्वत्कीर्तिप्रसरो हसत्ययमसौ शक्रस्य दन्तावलं,
व्यालेन्द्रं मुसलायुधं किमपरं देव्याश्च पञ्चाननम् ॥२१॥

अत्राहंकारभारोद्धुरस्त्वत्कीर्तिप्रसरो यतस्तत एव हसतीत्यनयोः सजातीययोरङ्गाङ्गिभावेन संकरः ।

---

एवंविधाः सप्तभेदाः लक्षणायाः प्रदर्शिताः । एक लक्षकानुप्रवेशाङ्गाङ्गिभावसन्देहसंकरेण संसृष्टया योगेनाष्टाविंशतिः सप्तशुद्धभेदैः सह पञ्चत्रिंशत् भेदा लक्षणाया भविष्यन्ति । भेदप्रभेदेनालङ्कारध्वनिभेदाभ्यां लक्षणायाः संख्यागणनीया । अङ्गाङ्गिभावसन्देहैकलक्षकानुप्रवेशैः सह संकरालङ्काराः त्रयः । नातिरिच्यते । क्रमेणोदाहरणमत्र ।

कामदेवस्य शत्रोः शिवस्य मस्तके गङ्गायाः प्रवाहरूपसिंहासनं; नरेशानतिक्रम्य नरसिंहनरेशः तथाविधाहंकारभारोद्वहन्, तस्य यशश्च गजेन्द्रमपि हसति । शेषनागो बलरामो देव्याः सिंहश्च सर्वेऽपि ते कीर्तिः ।

अत्राहंकारस्य भारेण पूर्णयशसः प्रसारो यत्र तत्रास्ति, अत्रानयोः सजातीयत्वेनाङ्गाङ्गिभावसंकरो भवति ।

---

इस प्रकार हमने लक्षणा के सात भेद प्रदर्शित किए । तीन प्रकार के संकर अलंकार अर्थात् एकलक्षकानुप्रवेश, अङ्गाङ्गिभाव, तथा सन्देह और एक प्रकार की संसृष्टि चार भेदों के गुणन से (२८) और सात शुद्ध मिलाकर (३५) प्रकार लक्षणा के भेद हुए । भेद प्रभेद से अलङ्कार एवं ध्वनि भेदों से लक्षणा की संख्या असंख्य हो जाती है ।

अङ्गाङ्गि भाव, सन्देह और एकलक्षकानुप्रवेश होते हुए संकर अलङ्कार तीन से अधिक नहीं हैं । क्रम से उदाहरण—

कामदेव के शत्रु शिवजी के मस्तक पर गङ्गा जी की लहर रूपी सिंहासन, राजाओं को आक्रमित कर नरसिंह नरेश उस प्रकार के अहंकार के भार को ढोते हुए तुम्हारे यश का प्रसार इन्द्र के ऐरावत को हंस रहा है । शेष नाग बलराम, देवी का सिंह सभी तुम्हारी कीर्ति ही हैं, अन्य कुछ नहीं ।

यहाँ अहंकार के भार से पूर्ण कीर्ति का प्रसार जहाँ तहाँ ही है, इन दोनों में सजातीय होने में अङ्गाङ्गि भाव संकर है ।

एष चिन्तामणिः किं नु किं न्वयं कल्पपादपः ।
किं वासौ कामधेनुर्वा न चेत्त्यागः किमीदृशः ॥२२॥

अत्र यद्येष इति विशेष्यं तदा स्वारोपेयम् । आहोस्विद्विशेषणं तदा साध्यवसाने-ऽन्यतरानवधारणात् सन्देहेनायं संकरः ॥

राका तारकराजमण्डलमहः पाण्डित्यवैतण्डिकी,
कीर्तिस्ते विदधाति यद्यपि जगच्छ्वेतं समन्तादपि ।
चित्रं वीरनृसिंह देव तदपि प्रत्यर्थिनामानना,
न्यालिङ्गन्ति रुचं शिखाबलशिखारिञ्छोलितापिच्छयोः ॥२३॥

अत्र वैतण्डिकत्वेन कीर्तेरारोपात् सारोपा तावत् पाण्डित्यस्य शुभ्रत्वक्रोडीकारेण प्रवृत्तत्वात् साध्यवसाना च । समासे सत्येकपदवद्भावादिति सहासनोपवेशिन्यो रनयोरे-कलक्षकानुप्रवेशेन संकरः ॥

---

एष चिन्तामणिः किन्नु कल्पवृक्षोऽस्ति । अथवा कामधेनुः । यदि त्यागो न भवेत् तर्हि नेदृशो निर्णयो भवेत् । इह यद्येषोऽस्मिन् विशेष्यो मन्यते, तदा सारोपा लक्षणा भविष्यति । अथवा विशेषणे सति साध्यवसानालक्षणा भविष्यति । अन्यतरयोः नावधारणे सन्देहसंकरालंकारः । यद्यपि तव कीर्तिः निखिलं भुवनं श्वेतं करोति ! तत्रापि रात्रिस्तारागणानां स्वामिनश्चन्द्रस्य मण्डलस्य कान्तिं पाण्डित्यश्च वितण्डा-वादस्य रूपं विदधाति । विचित्रोऽयं प्रसङ्गः । हे नरसिंहदेव ! शत्रुस्त्रीणा मुखस्या लिङ्गनं करोति । मयूरपिच्छायाः तमालपत्राणामालिङ्गनं करोति । इह वैतण्डिकत्वात् कीर्तेः आरोपेण सारोपा लक्षणा, पाण्डित्यस्य शुभ्रत्वाङ्गीकरणस्य प्रवृत्तिस्तु साध्य-वसानालक्षणा । समासे कृते सत्येकपदसमानभावेन सहासनोपवेशिन्योरनयोरेक-लक्षकानुप्रवेशेन संकरालङ्कारः ॥

---

यह चिन्तामणि है ? अथवा निश्चय ही कल्पवृक्ष है । अथवा यह कामधेनु है । यदि त्याग (दान) नहीं होता तो ऐसा निर्णय नहीं होता ।

यहाँ यदि 'एष' इसमें विशेष्य माना जाय तो सारोपा लक्षणा होगी । अथवा विशेषण होने पर साध्यवसाना लक्षणा होगी । इन दोनों में से निश्चय न करने की दशा में सन्देहसंकर नामक यह अलङ्कार हैं ।

यद्यपि तुम्हारी कीर्ति सारे संसार को श्वेत बना रही है । तथापि रात्रि एवं तारागण के स्वामी चन्द्रमण्डल की कान्ति को तथा पाण्डित्य को वितण्डावाद के रूप में प्रकट कर रही है । यह विचित्र बात है । हे नरसिंह देव ! शत्रुओं के मुख का आलिंगन कर रही है और मयूर (मोर) की चोटी तथा तमाल के पत्ते का आलिंगन कर रही है ।

यहाँ वैतण्डिकत्व के कारण यश के आरोप से सारोपा लक्षणा है । तो पाण्डित्य के शुभ्रत्व को अङ्गीकार करने की प्रवृत्ति होने से साध्यवसाना लक्षणा है ।

समास होने पर एक पद के समान भाव के कारण साथ में आसन उपवेशन इन दोनों के एकलक्षकानुप्रवेश होने पर संकर अलङ्कार है ।

संसृष्टिर्यथा ।

द्विर्भावः पुष्पकेतोर्विबुधविटपिनः पौनरुक्त्यं विकल्प,
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः ।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य,
कुर्वन्नानन्दं कोविदानां जगति विजयते भूपतिः श्रीनृसिंहः ॥२४॥

इयं सजातीयगौणसारोपाणां संसृष्टिः । सजातीयशुद्धसारोपाणां यथा—

आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्तिमान्,
विश्वासो नयनोत्सवो मृगदृशां कीर्तेः प्रकाशः परः ।
आनन्दः कलिकाकृतिः सुमनसां वीरश्रियो जीवितं,
धर्मस्यैव महोदयो विजयते वीरः कलिङ्गेश्वरः ॥२५॥

एवमन्यासामपि लक्षणानां संकरसंसृष्टी द्रष्टव्ये । सर्वत्र चात्रप्रयोजनं व्यङ्ग्यमेव । ननु सप्रयोजनमेव लक्ष्यमस्त्विति चेन्न ।

---

संसृष्टेरुदाहरणम्—नरसिंहनरेशः विदुषामानन्दरूपः कामदेवस्य द्विर्भावः, कल्पवृक्षस्य पुनरुक्तिः, चिन्तामणेः विकल्परूपः, सूर्यपुत्रस्य द्विरुक्तिः, इन्द्रस्य पुनरुक्तिः दैत्यराजस्य मथनकलाक्रीडां कुर्वन् स राजा देवस्य द्वैतस्वरूपो विजयतेतराम् ।

इयं सजातीयगौणसारोपासंसृष्टिः । सजातीयशुद्धसारोपासंसृष्टिर्यथा—

वीरः कलिङ्गनरेशः धर्मस्य स्वरूपोऽस्ति । अस्मिन्नायुर्दानमहोत्सवस्य विनम्रतास्ति । राज्ञां मूर्तिमान् रूपः । मृगाणां नयनां नेत्रोत्सवे विश्वासरूपो भवति । यशसः परप्रकाशरूपो वर्तते । देवानामानन्दरूपोऽस्ति । सुन्दराकृतिः वीरश्रियो प्राणधनम् । धर्मस्यैव रूपो नरसिंहनरेशः ।

इत्यन्यासां लक्षणानां संकरसंसृष्टी दर्शनीये । सर्वत्र चेह व्यङ्ग्यमेव प्रयोजनमस्ति । सप्रयोजनमेव लक्ष्यमस्त्विति खलु न कथनीयम् ॥

---

संसृष्टि का उदाहरण—

कामदेव की दो प्रकार की सत्ता के रूप में तथा कल्पवृक्ष की पुनरुक्ति, चिन्तामणि के विकल्परूप, सूर्यपुत्र कर्ण की पुनरुक्ति, इन्द्र की द्विरुक्ति, दैत्याधिप के मथन कलाक्रीड़ा को करने वाले देवता के द्वैत स्वरूप, विद्वानों को आनन्दित करते हुए नरसिंह नरेश जगत में बिजयी होवें ।

यह सजातीय गौण सारोपा संसृष्टि हैं । सजातीय शुद्ध सारोपा संसृष्टि का उदाहरण—वीर कलिङ्ग नरेश महोदय धर्म के ही स्वरूप हैं । इनमें आयुदान महोत्सव की विनम्रता है । राजाओं के मूर्तिमान् स्वरूप हैं । मृगों के नेत्रों के नेत्रोत्सव विश्बास रूप हैं । यश के दूसरे प्रकाशरूप हैं । देवों के आनन्द स्वरूप हैं । सुन्दर आकृति, वीर श्री के जीवन हैं । राजा नरसिंह विजयी हैं । जो धर्म के ही रूप हैं ।

इस प्रकार अन्य लक्षणा में भी संकर, संसृष्टि अलंकार दर्शनीय हैं । सर्वत्र यहाँ प्रयोजन व्यङ्ग्य ही हैं । यदि कोई यह शङ्का करे कि प्रयोजन सहित पदार्थ को ही लक्ष्यार्थ मानना चाहिए, तो यह बात ठीक नहीं हैं ।

ज्ञानविषयाद्भिन्नत्वेन फलस्याभ्युपगमात् । विषयो हि नीलादिः । फलं तु प्राकट्यमिष्यते । अतो न विशिष्टे लक्षणा । किं तु लक्षिते तटादौ शैत्यपावनत्वादयो विशेषाः स्फुरन्ति ।

**शब्दं व्यञ्जकमाहुर्व्यापारो व्यञ्जनं भवेद्यस्य ।।२६।।**

व्यञ्जनव्यापारवान् शब्दो व्यञ्जकः । अत्र चार्थस्यापि सहकारित्वम् ।।

**वाच्यो लक्ष्यो व्यङ्ग्यस्तेषामर्थो यथाक्रमं वेद्यः ।।२७।।**

तेषां वाचकलक्षकव्यञ्जकानाम् । काव्यप्रकाशकारेण पुनरेषामर्थानामपि व्यञ्जकत्वमुक्तम् । यथा—"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः । प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।"

**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।।२८।।**

---

ज्ञानस्य विषयो ज्ञानस्य फलञ्च परस्परं भिन्नम् । यथा ज्ञानस्य विषयो नीलादिः । फलं तु प्राकट्यमिच्छति । अतः शैत्यपावनत्वादिविशिष्टे लक्षणा न भवति । किन्तु लक्षिते तटादौ शैत्यपावनत्वादिविशेषधर्मफलरूपेण परिस्फुरति ।

स शब्दो व्यञ्जको यस्य व्यापारो व्यञ्जनम् । व्यञ्जनव्यापारवान् शब्दो व्यञ्जको भवति । शब्दस्य व्यञ्जकतायामर्थोऽपि सहकारी भवति ।

व्यापारवतः शब्दस्यार्थोऽर्थात् वाचकलक्षकव्यञ्जकशब्दानामर्थः क्रमशः वाच्यो लक्ष्यो व्यङ्ग्यश्च ।

काव्यप्रकाशकारेण मम्मटेन पुनः वाच्यलक्ष्यव्यङ्ग्यार्थो व्यञ्जको मन्यते । यो वक्तृवैशिष्ट्यपूर्णकथने निर्भरः । एवमर्थस्य व्यञ्जकतायां शब्दोऽपि सहकारी भवति ।

वक्तृज्ञातृकाकुवाक्यवाच्यान्यसान्निध्यप्रस्तावदेशकालादीनां विशेषतया प्रतिभाजुषां यदा केनचिदर्थेनापरोऽर्थो बोध्यते तर्हि ईदृशो बोधकव्यापारो व्यङ्ग्यम् ।।

---

ज्ञान का विषय और ज्ञान का फल दोनों परस्पर भिन्न माने गए हैं । जैसे ज्ञान विषय नील आदि हैं । फल तो प्रकट रूपता है । अतः शैत्यपावनत्वादि विशिष्ट में लक्षणा नहीं होती । परन्तु लक्षित तट आदि में शैत्यपावनत्वादि विशेष धर्म फल रूप से परिस्फुरित होते हैं ।

व्यञ्जना—

उस शब्द को व्यञ्जक कहा गया है, जिसका व्यापार व्यञ्जना है । व्यञ्जनव्यापारवान् शब्द व्यञ्जक है । शब्द की व्यञ्जकता में अर्थ भी सहकारी होता है । व्यावारवान् शब्द के अर्थ को अर्थात् वाचक, लक्षक, व्यञ्जक शब्दों के अर्थ क्रमशः वाच्य लक्ष्य तथा व्यङ्ग्य कहे जाते हैं । काव्य प्रकाशकार मम्मट के द्वारा पुनः इन वाच्य. लक्ष्य, व्यङ्ग्य अर्थों को भी व्यञ्जक माना गया है । जो वक्ता आदि के वैशिष्ट्य पूर्ण कथन पर निर्भर करता है । एवं अर्थ की व्यञ्जकता में शब्द भी सहकारी होता है । वक्ता, ज्ञाता, काकु, वाक्य, वाच्य अन्य सान्निध्य प्रस्ताव देश काल आदि की विशेषता से प्रतिभाशीलों को जब किसी अर्थ से दूसरे अर्थ का बोध होता है, तो ऐसे बोध कराने वाले व्यापार का नाम व्यञ्जना है ।

व्यङ्ग्यं तु द्वेधा । गूढमगूढं च । तत्राद्यं यथा ।

क्रीडासौधं कलानां शरणगतरिपुक्ष्मापविश्रम्भपात्रं,
जायेत त्वां नृसिंहक्षितिपकवयितुं को न कण्डूलजिह्वः ।
स्वान्तः संतोषगौरीपतिविद्युतशिरश्चन्द्रिका चुम्बितोर्मि,
स्फारस्वःसिन्धुबन्धुः सुरयुवतिगणैर्गीयते यस्य कीर्तिः ।।२९।।

अत्र कण्डूलत्वं स्वार्थतिरस्कारेण स्तवनाभिलाषं लक्षयत् तत्पारवश्ये विश्राम्यति द्वितीयं यथा ।

भग्नद्वारालुलितपरिघाश्चूर्णिताट्टाः प्रनष्टस्तम्भा
दूरीकृतवलभयः प्रेषितालेख्यलीलाः ।
तास्ताः क्रीडाशिखरिपतनान्मोटिताक्रीडभागास्त्वद्विक्रान्ति
रिपुवसतयः श्रीनृसिंह ब्रुवन्ति ।।३०।।

अत्र ब्रुवन्तीति यद्यपि व्यङ्ग्यमस्ति तथापि कविपरम्पराप्रयुज्यमानतयातिप्रसिद्धत्वाद्वाच्यायमानमित्यगूढ़म् ।।

इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रे शब्दार्थनिरूपणं नाम द्वितीय उन्मेषः ।

---

व्यङ्ग्यं तु द्विविधम् । गूढ़मगूढ़ं च । आद्यं यथा तत्र । शत्रुराजाकलाक्रीडाभवनं शरणागतं विश्वासपात्रं भवतु । हे नरसिंह नरेश ! त्वां प्रति कवित्वहेतवे कस्य जिह्वा नोत्सुका भवेत् । अन्तरात्मनि सन्तोषः । शिवस्य विद्युत्शिरसि चन्द्रिकायुक्तः सागरबन्धुः यस्य प्रवाहस्य चुम्बनं करोति । देवयुवतिगणैर्यस्य यशो गीयते ।

अत्र कण्डूलत्वं स्वार्थं तिरस्कारेण स्तवनस्येच्छा लक्ष्यम् । तस्य पराधीनतायां विश्राम्यति । अगूढ़व्यङ्ग्यस्योदाहरणमिह । हे श्रीनरसिंह ! ते पराक्रमः संसूच्यते । यतः शत्रोः द्वारा भग्नाः खण्डिताः परिघाः चूर्णिताः सौधाः नष्टाः स्तम्भाः खण्डिताः वलभयोऽस्तव्यस्ताः चित्रलीलाः सन्ति । ताः शिखरिपतनान्नष्टक्रीडाभागाः ।। इह तु ब्रुवन्तीति यद्यपि व्यङ्ग्यम् । तथापि कविपरम्परायाः प्रयुक्तेनातिप्रसिद्धेन वाच्यसमानेनागूढ़म् । इति महामाहेश्वरकविविद्याधरकृतैकावलीनाम्न्यलंकारशास्त्रे शब्दार्थ निरूपणं नाम द्वितीयोऽध्यायः ।।

द्वितीयोऽध्यायः एकावली सरलाख्याटीकायाः

---

व्यङ्ग्य दो प्रकार का होता है । गूढ़ और अगूढ़ दोनों व्यङ्ग्य हैं । गूढ़ का उदाहरण—क्रीड़ा भवन को प्राप्त शरणागत शत्रु राजा विश्वासपात्र हों । हे नरसिंह नरेश ! तुम्हारे प्रति कवित्व हेतु किसकी जीभ न उत्सुक हो । अन्तरात्मा में संतोष शिवजी की बिजली जो शिर पर चन्द्रिका युक्त है और सागर बन्धु चन्द्र जिसकी लहरों का चुम्बन करने वाला है । देव युवतियों द्वारा जिसका यश गाया जाता है ।

यहाँ कण्डूलत्व अपने अर्थ को तिरस्कृत करने से स्तवन की इच्छा लक्ष्य है। इसकी पराधीनता में ही विभाग है। अगूढ़ व्यंग्य का उदाहरण—

हे श्रीनरसिंह ! टूटे द्वार, खण्डित खाइँ टूटे महल एवं नष्ट हुए खम्भे अलग होने वाली छज्जा बिखरी चित्र लीलाएँ ऐसे वे शत्रु के निवास क्रीडा शिखर के गिरने से नष्ट क्रीड़ा के अंश तुम्हारे पराक्रम की सूचना दे रहे हैं।

यहाँ (ब्रुवन्तीति) यद्यपि व्यङ्ग्य है। तथापि कवि परम्परा से प्रयुक्त होने से अति प्रसिद्ध होने के कारण वाच्य के समान अगूढ़ है।

श्रीमान् महामाहेश्वर कवि विद्याधर के द्वारा रचित 'एकावली' नामक अलंकार शास्त्र में शब्दार्थ निरूपण नामक द्वितीय अध्याय समाप्त हुआ।

---

These instances of indication might as well appear in the form of next indications where one type combines the other. The combination resting either on the principle of interdependence which is called fusion (sankar) or on the principle of noninterdependence which is called (sansṛisṭi) Commixture. The total number, therefore, will add upto the following types,—seven kinds of indication $\times$ 3 Kinds of fusion $= 7 \times 3 = 21$ formed by fusion and seven kinds of indication $\times$ one kind of (sansṛisṭi) commixture $7 \times 1 = 7$ formed by commixture and seven pure and thus the total comes to 35. The combinations branching forth into further combinations and permutations leave to an innumerable Variety of types.

The purpose for which indication is used, is mostly to lead to some suggested meaning.

The suggested meaning may be either too obvious or a Concealed one. On this account the power of indication may be further classified into two types; indication leads to too obvious suggested meaning or leads to a concealed suggested meaning which is called predominant suggestion (Dhvani).



## अथ तृतीय उन्मेषः ।

# अथ ध्वनिभेदा उच्यन्ते

ध्वनिरविवक्षितवाच्यो भवति द्वेधात्रलक्षणामूलः ॥१॥

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्यविवक्षितमप्रधानीकृतं वाच्यं यत्र स तथा। येन चाविवक्षितेन सता वाच्येनाविवक्षितवाच्य इति ध्वनिमाचक्षते । तदर्थान्तरसंक्रमितात्यन्ततिरस्कृतत्वाभ्यां द्विधा भवद्वाच्यमविवक्षितवाच्याभिधान ध्वनिमपि द्वैविध्ये स्थापयत्यर्थान्तिरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति ।

---

अथ सरलाटीकायां तृतीयोऽध्यायः

**अथ ध्वनिप्रकारः उच्यते ।**

अविवक्षितवाच्यो ध्वनिरिति । लक्षणामूलगूढव्यङ्ग्यस्य प्रधानत्वे सत्यविवक्षितवाच्यो भवति । लक्षणामूलध्वनिर्द्वेधा । ध्वनिः कथ्यते यस्या विवक्षितस्य वाच्यस्याविवक्षितवाच्यो भवति । अविवक्षितवाच्यस्याथन्तिरसंक्रमितवाच्योऽत्यन्तरिस्कृतवाच्यो द्वौ भेदौ च ।

---

अब तृतीय अध्याय प्रारम्भ होता है ।

अब ध्वनि के भेद बताए जाते हैं ।

अविवक्षित वाच्य ध्वनि कही जाती है । लक्षणामूल गूढ़व्यङ्ग्य की प्रधानता होने पर अविवक्षित वाच्य होगा । लक्षणामूलध्वनि दो हैं । ध्वनि उसे कहते हैं, जिसके अविक्षित होने पर वाच्य के न होने से अविवक्षित वाच्य होता है । अविवक्षित वाच्य के अर्थान्तर संक्रमित वाच्य एवं अत्यन्ततिरस्कृत वाच्य दो भेद होते हैं ।

---

Chapter III

Vidyādhara proposes to classify (Dhvaui) Predominant suggestion in this chapter.

The first type is ( Avivakṣitvācya ) where a connotational meaning is incompatible leading to an indicated meaning which again leads to a concealed type of suggested meaning. This can further be classified into two subtypes: the one where connotcd meaning subsumes by transition a different meaning and the other is one where the connoted meaning is sought to be negated leading to just the opposite of what the connoted meaning can be. The names given for these two types are 1. (Arthāntarsankramita Vācya) and 2. (Atyantatirṣkṛit Vācya) (Dhvani).

तत्र योऽर्थ उपपद्यमानोऽप्यनुपयोगाद्बाधितोऽर्थान्तरे परिणमति सोऽर्थान्तरसंक्रमितस्तादृशो वाच्यो यत्र सोऽर्थान्तिरसंक्रमितवाच्य उच्यते । व्यञ्जनव्यापारसहकारिप्रभावो णिचा द्योत्यते । अयं च पदवाक्यप्रकाश्यत्वेन भवन् न द्वैविध्यं परिहरति । क्रमेण यथा—

---

तत्र द्वयोः ध्वन्योरविवक्षितवाच्यो नामको ध्वनिः । अर्थान्तरसंक्रमितात्यन्त तिरस्कृतवाच्यौ च तस्य । योऽर्थ उपपद्यमानेऽप्यनुपयोगेन बाधितः सन् परार्थे परिणमति । तत्रार्थन्तरसंक्रमितवाच्यो भवति । व्यञ्जनव्यापारेण सह सहकारीप्रभावो णिचा द्योत्यते । अयं पदवाक्यप्रकाश्यगतौ द्वौ । नातिरिच्यते । क्रमशः उदाहरणम्—

---

ये दोनों अविवक्षित वाच्य नामक ध्वनि से जाने जाते हुए भी अर्थान्तर संक्रमित वाच्य और अत्यन्त तिरस्कृत वाच्य होते हैं। जो अर्थ उपपद्यमान होने पर भी अनुपयोग से बाधित होकर दूसरे अर्थ में परिणत होता है, वह अर्थान्तर संक्रकित वाच्य है। व्यञ्जन व्यापार से सहकारी प्रभाव णिच् से द्योतित होता है। यह पद वाक्य प्रकाश्यगत दो प्रकार का होता है। क्रमशः जैसे पदगत उदाहरण—

---

The suggested meaning here may result from one word or a group of words, being called ( Pada Prakāśya ) in the case of the former and (Vākya Prakāśya) in the case of the latter. The examples in case of ( Pada Prakāśya ) and in the case of ( Vākya Prakāśya ) may be seen for clarification, whereever necessary.

श्रीरमणः श्रीरमणः सुधांशुमौलिः सुधांशुमौलिरसौ ।
नरसिंहो नरसिंहः प्रभवति जगतामपि त्रितये ॥१॥

अत्र द्वितीयं श्रीरमणादिपदं तद्गुणमात्रशालित्वेन परिणमत् तद्गुणसाकल्यं व्यनक्ति ।

एषा ते कथयामि साम्प्रतमहं तिष्ठन्त्वमी मन्त्रिणः
सर्वे यत् प्रतिभाति तत् कुरु रुचिं बुद्धया विमृश्य स्वयम् ।
इत्युक्तः प्रियया रिपुक्षितिपतिस्त्वज्जैत्रयात्रोत्सवे
स्तैमित्यं कलयन् नृसिंहनृपते तूष्णीमभूदानतः ॥२॥

अत्र, कथनादिकमुपदेशरूपतया परिणमदवश्यकर्तव्यतां व्यनक्ति । यः पुनरनुपपद्यमानतयैव बाधितोऽर्थान्तरप्रतिपत्तिं कृत्वा पलायित इव सोऽत्यन्ततिरस्कृतस्तादृशो-वाच्यो यत्र सोऽत्यन्ततिरस्कृत वाच्यः ॥

---

नरसिंहो लक्ष्म्या सह रमते । अर्थात् ऐश्वर्येण रमते । चन्द्रो मस्तके यस्यैतादृशः शङ्करः । शिवेन सदृशो नरेषु सिंहो नरसिंहनरेशः त्रितयेऽपि जगतां सक्षमः ।

इह तु द्वितीयरमणादिपदेन स्पष्टं भवति । अर्थान्तरसंक्रमितवाच्योऽयम् । वाक्यगतोदाहरणम् । अहं त्वां प्रति सम्प्रति कथयामि । इमे मन्त्रिणः तिष्ठन्तु । सर्वेषु यत् सुन्दरं तस्मिन् रुचिं कुरु विचारस्य पश्चात् । हे नरसिंहनरेश ! इत्युक्तः शत्रुराजा तूष्णीमभूत् प्रियया सह त्वज्जययात्रोत्सवे स्तुवनधोमुखो भवन् ।

इह कथनाद्युपदेशरूपेण संक्रम्यावश्यकर्तव्यतां द्योतयति, पुनश्चानुपपद्यमानतयैव बाधितः सन् परार्थस्य सिद्धिं कृत्वा पलायितसदृशः सोऽत्यन्ततिरस्कृतस्तादृशो वाच्यो यत्रास्ति तत्रात्यन्ततिरस्कृतो वाच्यो भवति ।

---

नरसिंह श्री लक्ष्मी के साथ रमण करने वाले, श्री ऐश्वर्य में रमण करते हैं । चन्द्रमा मस्तक पर धारण करने वाले अर्थात् चन्द्र मुकुट धारण करने वाले यह शिव जी सदृश नरों में सिंह समान नरसिंह जगत के भी, तीनों लोकों में समर्थ हैं ।

यहाँ द्वितीय 'रमण' आदि पद से स्पष्ट है कि यह अर्थान्तरसंक्रमितवाच्य है । वाक्यगत उदाहरण--

मैं इस समय यह तुमसे कहता हूँ । ये मन्त्रीगण ठहरें । सबमें जो सुन्दर प्रतीत हो, उसे बुद्धि से विचार कर रुचि करें । ऐसा कहे गये प्रिया के साथ शत्रु राजा तुम्हारे जय यात्रा उत्सव में स्तुति करते हुए हे नरसिंह नरेश ! नीचे मुख किए हुए चुप हो गए । इसमें कथन आदि उपदेश रूपता से संक्रमण कर अवश्य कर्तव्यता का द्योतन होता है; जो पुनः अनुपपद्यमानता से ही बाधित होते हुए दूसरे अर्थ की सिद्धि कर पलायन करने के समान हो, वह अत्यन्त तिरस्कृत है और जैसा जहाँ वाच्य हो, वह अत्यन्त तिरस्कृत वाच्य होता हैं ।

---

This discussion again is based exactly along the lines of Mammaṭa's Kāvya–Prakāś.

असावपि पूर्ववद्द्विविधः । क्रमेण यथा ।

**जायेत त्वां नृसिंहक्षितिप कवयितुं को न कण्डूलजिह्वः ॥३॥**

अत्र कण्डूलत्वं स्वार्थतिरस्कारेण स्तवनाभिलाषं लक्षयन् तत्पारवश्ये विश्राम्यति ।

**वाणैः पञ्जरिता गजाः कति कति क्षुण्णारथा मुद्गरैः जीवग्राहमरातयः कतिहयैः सार्धं गृहीतास्त्वया । मुक्ताः प्राञ्जलयः कतिनिभृतामर्षस्मिताः स्वप्रियान्; संग्रामापसृतान् नृसिंहनृपते पृच्छन्ति वैरिस्त्रियः ॥४॥**

अतः नरसिंहनरेश्वरात् समरभुवि परिभवं प्राप्य निवृत्तवतः परिपन्थिनः पार्थिवान् प्रति प्रथमप्रार्थिताभिक्रमनिवर्तनस्यावरोधजनस्येयमुक्तिः ।

**अभिधामूलोऽपि तथा विवक्षितान्यपरवाच्य इत्युक्तः ॥५॥**

विवक्षितमन्यपरं व्यङ्ग्यनिष्ठंवाच्यं यत्र स विवक्षितान्यपरवाच्यो ध्वनिः ॥

---

अयमपि द्विविधः पूर्ववत् । क्रमशः उदाह्रियते ।

जायेत त्वां नृसिंहक्षितिप ! कवयितुं को न कण्डूलजिह्वः ।'

इह कण्डूलत्वपदं स्वार्थे तिरस्कारेण स्तवनाभिलाषलक्ष्यं कुर्वन्नपि तस्य पारवश्ये विश्राम्यति ॥ वाक्यगतोदाहरणम् ।

हस्तनो वाणैः पञ्जरिता मुद्गरैः कति रथाश्चूर्णिताः शत्रवः करबद्धाः कति विमुक्ताः । त्वयाश्वैः सह कति शत्रवो विजिता गृहीताश्च । शत्रोः वध्वः क्रोधाकुला आत्मनि परञ्चवाह्यस्मेरमुख्यः युद्धात् पलायितान् स्वनाथान् पृच्छन्ति । यत् कुत्र गतास्ते पतयः ।

अत्र नरसिंहराज्ञा समरस्थले पराजितान् प्रत्यागतान् शत्रुनरेशान् प्रति निवर्तनस्यावरोधः विषयिणीयमुक्तिः ।

अभिधामूलध्वनिः विवक्षितान्यपरवाच्यो ध्वनिः कथ्यते । विवक्षितान्यपरवाच्यपरकं व्यङ्ग्यनिष्ठं विवक्षितान्यपरवाच्यध्वनिः ॥

---

यह भी पहले के समान दो प्रकार अर्थात् पद एवं वाक्यगत होता है । क्रम से पदगत उदाहरण—नरसिंह नरेश ! तुम्हारे प्रति किसकी जिह्वा कविता करने के लिए उत्पन्न न हो । इसमें कण्डूलत्व पद के अपने अर्थ का तिरस्कार होने से स्तवन अभिलाष का लक्ष्य होते हुए भी इसकी परवशता में विश्राम होता है । दूसरा वाक्यगत उदाहरण वाणों रूपी पिंजरे में हाथी घिर गये । कुछ रथ मुद्गरों द्वारा तोड़ दिये गये । हाथ जोड़नेवाले कुछ शत्रु मुक्त किए गए । तुम्हारे द्वारा घोड़ों के साथ कितने ही शत्रु जीते ही पकड़ लिये गये । शत्रु की कुछ स्त्रियाँ जो क्रोध छिपाए हैं, ऊपर से मुस्कराती हुई युद्ध से भागे अपने पति के विषय में नरसिंह नरेश से पूछ रही हैं कि हमारे पति कहाँ गए ? इसमें नरसिंह राजा से समरभूमि में पराभूत होकर लौटते हुए राजाओं के प्रति निवर्तन के अवरोध विषयक यह उक्ति है ।

अभिधामूलध्वनि विवक्षितान्यपरवाच्य कही जाती है । विवक्षितान्यपरव्यङ्ग्यनिष्ठ वाच्य को विवक्षितान्यपरवाच्य ध्वनि कहते हैं ।

तथेतिग्रहणादयमपि द्विधा। असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति। क्रमस्यासंलक्ष्यत्वे तु न विप्रतिपत्तिः। न खलु विभावानुभावव्यभिचारिण एव रसः। अपितु तेभ्य एव रस इति सतोऽपि क्रमस्योत्पलदलशतव्यतिभेदवद्विभावादिप्रतीतावाशु भावित्वेनासंलक्ष्यमाणत्वादसंलक्ष्यक्रमव्यङ्ग्य इत्यन्वर्थतामप्यसावाश्रयति। अस्य रसभावरसाभासभावाभासभावशान्तिभावोदयभावसंधिभावशबलत्वरूपतयाष्टप्रकाराः॥ तेष्वेकोऽपि यत्र प्राधान्यमवलम्बते तत्रालंकार्य एव। यत्र पुनरप्राधान्यं तत्र रसवदादिरलङ्कारः। तत्र रसस्वरूपमेव प्रथमं निरूप्यते।

---

अयमपि द्विधा भवति। असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति। असंलक्ष्यक्रमव्यङ्ग्ये तु न विप्रतिपत्तिः। विभावानुभावव्यभिचारिणस्तु नैव रसः। अपितु तेनैव रसे सति क्रमेण कमलशतपत्राणां भेदेन समानेन भावादेः प्रतीते झटिति भावित्वेनासंलक्ष्येनासंलक्ष्यक्रमव्यङ्ग्यस्य साध्वर्थे विश्राम्यति। असंलक्ष्यक्रमव्यङ्ग्यस्य रसभावरसाभासभावाभासभावशान्तिभावोदयभावसन्धिभावशबलत्वरूपतयाष्टभेदाः। एष्वेकमपि प्रधानं यत्र भवति, तत्र सोऽलंकार्योऽस्ति। अन्यथा स रसवत् प्रेयोर्जस्विसमाहिताः अलङ्काराः। प्रथमतः रसस्वरूपस्य निरूपणम्।

---

इसका भी असंलक्ष्यक्रमव्यङ्ग्य एवं संलक्ष्यक्रमव्यङ्ग्य दो भेद होते हैं। असंलक्ष्यक्रमव्यङ्ग्य के रहने पर तो कोई विप्रतिपत्ति नहीं है। निश्चय ही विभाव, अनुभाव व्यभिचारी भाव ही रस नहीं होते हैं, और भी उनसे ही रस जो रहते हुए भी क्रम से शतदलकमल पत्र के भेदन के समान भाव आदि के प्रतीत होने, शीघ्र भावी असंलक्ष्य होने के कारण असंलक्ष्यक्रमव्यङ्ग्य के ठीक-ठीक अर्थ में उसका विश्राम होता है। इसके (अर्थात् संलक्ष्यक्रमव्यङ्ग्य के) रसभाव रसाभास, भावाभास भावशान्ति भावोदय भावसन्धि, भावशबलता आठ प्रकार हैं। इनमें से एक भी जहाँ प्रधान हो, वहाँ वह अलंकार्य है। और जहाँ प्रधान नहीं है, वहाँ वह रसवत्, प्रेय, ऊर्जस्वि, समाहित आदि अलंकार हैं। पहले रसस्वरूप का निरूपण किया जाता है।

---

Another type of predominant suggestion is based on the Connoted meaning; due to its being not incompatible; it becomes a means of the suggested meaning. Because of its being predominant in its effect the name giyen to it is (Vivakṣitānyaparvācya Dhvani),

This is snbdivided into two types. 1—Asanlakṣakram Vyangya) in which the transition from the connoted meaning to the suggested meaning, is invisible or indiscernible; because one is transported to the greatest height of emotion immediately after comprehending the connoted meaning. Since it ends in transporting the reader to a great height of emotion, it is also called (RasaDhvani) and can be classified into innumerable

विभावैर्ललनादिभिरालम्बनकारणैरङ्कुरितः सितकरकोकिलालापमलयानिलकेलिकाननादिभिरुद्दीपनकारणैः कन्दलितोऽनुभावैर्नयनान्तावलोकितस्मितभुजवल्लीवेल्लनादिभिः प्रतीतिपद्धतिमध्यारोपितो व्यभिचारिभिश्चिन्तादिभिः पल्लवितः कदाचिदपि नानुभूतोऽभिधया न कर्णातिथीकृतस्तात्पर्येण न लक्ष्यीकृतो लक्षणया न स्वविषयं प्रापितः प्रत्यक्षेण नात्मनः ।

---

रसो विभावैरित्यादिभिरालम्बनकारणेनाङ्कुरितो भवति । चन्द्रकोकिल प्रेमालापमलयपवनक्रीडावनादिभिरुद्दीपनकारणैः प्रवर्धितोऽनुभावैर्नेत्रकोणेनावलोकितस्मितभुजक्षेपादिभिः प्रतीतेरध्यारोपितो व्यभिचारिभिश्चिन्तादिभिः प्रादुर्भूतः । एष कदाचिदपि नानुभूतोऽभिधया, न तात्पर्येण ज्ञायते । न लक्षणया लक्षितो न प्रत्यक्षेण स्वविषयं प्राप्नोति ।

---

रस

रस विभावादिकों ललनादि आलम्बन कारणों मे प्रादुर्भूत चन्द्रमा कोयल आलाप मलयवायु, क्रीडा वन आदि उद्दीपन कारणों से प्रवर्धित अनुभाव से नेत्र के कोण से देखने, मुस्कराने, भुजाओं के संचालन से प्रतीति का अध्यारोप होने, व्यभिचारी भावों चिन्ता आदि से पल्लवित होता यह कभी भी अभिधा से अनुभूत नहीं होता है । तात्पर्य से सुना नहीं जाता है । न लक्षणां से लक्षित होता है । न प्रत्यक्ष द्वारा अपने विषयको प्राप्त कराता है ।

---

types. The details of this type of (Dhvani) predominant suggestion are precisely the same as those given by Mammaṭa in his Kāvya-Prakāśa,

That emotions can not be connoted or indicated, but result from the suggestivity of words, is supported' by the same line of argument as given by Mammaṭa already.

These emotions are something extraordinary and because they can not be sumsumed by any type of knowledge like perception, perceptional judgement, conception, and the like .

Here two arguments of Vidyādhara are just like the same as those of Mammaṭa.

सीमानमानीतोऽनुमानेनापरिशीलितसरणिः स्मरणेन नाक्रान्तः कार्यतया न ज्ञातो ज्ञाप्यतया विगलितवेद्यान्तरत्वेन परिमितावनधीती ध्वननाभिधानाभिनवव्यापारपरिरम्भनिर्भरतयानुकार्यानुकर्तृगतत्वपरिहारेण सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको भाव एवं विभावादि जीवितावधिः पानकरसन्यायेन चर्व्यमाणश्चर्व्यमाणतैकप्राणः समुल्लसन् ब्रह्मास्वादसब्रह्मचारी लोकोत्तर चमत्कारी शृङ्गारादिको रसोऽभिधीयते ॥

---

न निजसीमानमनुमानेनानीतः । स्मरणेन न परिशीलितः । कार्येण सह न युक्तः । ज्ञाप्यत्वेन न ज्ञायतेऽतिप्रभूतानन्देनापरिमितः । ध्वननस्याभिधानेनाभिनव व्यापारस्य परिरम्भणेन पूर्णतयानुकार्यस्यानुकर्तृगतपरिहारेण सामाजिकानां वासनात्मनि स्थितस्थायी रत्यादिभाव एवं विभावादिस्थितिपर्यन्तं पानकरससमानमास्वाद्यमानमास्वाद्यस्यानुभवमात्रेण जीवितप्रतीयमानब्रह्मानन्दस्वादसहित ब्रह्मसाक्षात्कारस्वादमनुभावयन् सन् अलौकिकानन्ददायकः शृङ्गारादिरसोऽभिधीयते ॥

---

न अपनी सीमा पर अनुमान में पहुँचाता है । स्मरण से इसका परिशीलन नहीं किया जा सकता है । कार्य से युक्त नहीं होता है । ज्ञाप्यत्व से नहीं जाना जाता है । निरतिशय आनन्द से अपरिमित होता है । ध्वनन अभिधान से अभिनव व्यापार के परिरंभण से पूर्णतया अनुकार्य के अनुकर्ता गत परिहार से सामाजिकों की वासना आत्मा में स्थित स्थायी रति आदि भाव ही विभाव आदि की स्थिति पर्यन्त ही रहने वाला इलायची, कालीमिर्च, शक्कर, इमली, आम आदि के तैयार किए गए रस के समान आस्वाद्यमान आस्वाद्य के अनुभव मात्र से जीवित प्रतीयमान ब्रह्मानन्द स्वाद सहित ब्रह्म के साक्षात्कार के स्वाद का अनुभव कराता हुआ सा अलौकिक आनन्द प्रदान करने वाला शृंङ्गारादि रस होता हैं ।

---

In this paragraph Vidyādhara has alluded about (Rasa) sentiment or emotion, What is (Rasa) ? This is some what like the extraordimary pleasure to be experienced, Vidyādhara is just like, Abhinavagupta is this respect.

अयं च स्वप्नेऽपि परिहरति वाच्यताम् । तथा हि । वाच्यो भवन्नयं स्वशब्देनोच्यतां शृङ्गारादिशब्देन वा । इदमुभयमपि न संभवास्पदम् । रसादिशब्दाप्रयोगेऽपि विभावादिप्रतिपादनद्वारैव तस्य प्रतीतिपथपथिकत्वात् । रसादिशब्दप्रयोगेऽपि विभावाद्यप्रयोगे तस्य प्रतीति पथानधिरोहाच्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारैव प्रतीतिपद्धतिमध्यास्त इति प्रतीयमानतामेवार्हति ।

उत यदि तात्पर्यगोचरतामवतरति रस इति भवन् मनसि निविशते तदपि न विचारचारु । रसस्याभिधेयत्वानधिकरणत्वादभिहिते च तात्पर्यस्य प्रगल्भनात् । विधेयानुवाद्यसमभिव्याहारेण विधेयार्थमनुवाद्यमुपादीयते । अप्राप्तं तु विधेयम् ॥

---

अयं च स्वप्नेऽपि वाच्यतां परिहरति । तथा हि । अयं शृङ्गारादिशब्देन वा स्वशब्देन यदि कथ्यते । तर्हि नोचितम् । रसादिशब्दप्रयोगे नापि । विभावादेः प्रतिपादनद्वारेण तस्य प्रतीतिर्भवति । रसादिशब्दप्रयोगेऽपि विभावादावप्रयोगे तस्य प्रतीतिमार्गमनुसृत्यान्वयव्यतिरेकाभ्यां विभावादेरभिधानेनैव प्रतीतिपद्धतिमध्यास्त प्रतीयमानत्वस्य योग्यतास्ति ॥

यदि कथ्यते यत् तात्पर्येण दृष्टिगतो रसो भवति, एतादृशः मनसि चिन्तयन् न विचारणीयः रसस्याभिधेयत्वेऽनधिकरणत्वात्, एतस्याभिहितत्वे तात्पर्यस्य कथने कारणम् । विधेयस्यानुवाद्यकथनेन विधेयार्थस्यानुवाद्यस्योपादानम् ॥ विधेयं भवत्यप्राप्तम् ।

---

स्वप्न में भी यह वाच्यता का परित्याग करता है । वाच्य होता हुआ भी यह निज शब्द से कहा जाय अथवा शृङ्गार आदि शब्द से कहा जाय ये दोनों भी संभव नहीं है । रस आदि शब्द के प्रयोग न होने पर भी विभावादि के प्रतिपादन द्वारा ही उसकी प्रतीति होती है । रसादिशब्द के प्रयोग होने पर भी विभावादि के प्रयोग न होने से उसकी प्रतीति के मार्ग पर न चलने से अन्वय व्यतिरेक द्वारा विभावादि के अभिधान से ही प्रतीति पद्धति का अभ्यास होता हुआ प्रतीयमानत्व की योग्यता होती है ।

यदि कहा जाय कि तात्पर्य से दृष्टिगत रस होता है, तो ऐसा होता हुआ मन में प्रवेश करने पर यह विचार संगत नहीं है । रस के अभिधेयत्व में अनधिकरण एवं इसके अभिहित होने पर तात्पर्य का कथन इसका कारण है । विधेय के अनुवाद्य को कहने से विधेय अर्थ के अनुवाद्य का उपादान होता है । अप्राप्त तो विधेय होता है ।

यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र ऋत्विक्प्रचरणे प्रमाणान्तरतः प्राप्ते लोहितोष्णीषत्वमप्राप्तं विधेयम् । एवमन्यत्रापि यावदप्राप्तमभिहितं च तावति-शब्दस्यार्थे तात्पर्यं नाम व्यापारः प्रगल्भते । न पुनः प्रतीतिमात्रे । यदि प्रतीतिमात्रेऽपितात्पर्यं प्रभविष्णुतामासादयति तदा पूर्वो धावतीत्यादावपराद्यर्थेऽपि तात्पर्यं पर्यवस्येत् । अपरोऽपि धावतु व न वा न तत्र तात्पर्यम् ॥

अथ यदि लक्षणीयो रसस्तदपि न क्षोदक्षमम् । मुख्यार्थबाधादिरहितैरेव विभावादिभिरस्याभिव्यज्यमानत्वात् ॥ प्रत्यक्षप्रमाणग्राह्यो रस इति चेत्तर्हि प्रत्यक्षेण गृह्यमाणो रसः किं निर्विकल्पेन गृह्यते सविकल्पेन वा । न तावन्निर्विकल्पकज्ञानगोचरः विभावाद्यनुसंधानेनैवास्य सत्तासाधनसमर्थत्वात् ॥

---

यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीह ऋत्विक्कार्येऽन्यप्रमाणेन प्राप्तौ 'लोहितोष्णीषत्वमप्राप्तं विधेयम् । एवमन्यत्रापि यावदप्राप्तं कथितं च तावति शब्दस्यार्थे तात्पर्यं नाम व्यापारो भवति । प्रतीतिमात्रे न पुनः भवति । यदि प्रतीतिमात्रेऽपि तात्पर्मं प्रभवति; तर्हि पूर्वोधावति' इत्यादौ 'अपरो धावति' इत्यर्थेऽपि-तात्पर्ये पर्यंवसानम् । 'अपरोऽपि धावति' इत्यत्रास्त्येव न वा । तत्र तात्पर्यं न भवति । यदि लक्षणीयो रसस्तदपि न युक्तम् । मुख्यार्थबाधादिराहित्येन नैव विभावादिकानामभिव्यञ्जनमपि तत्र कारणम् । प्रत्यक्षप्रमाणेन ग्रहणीयो रसो यदि कथ्यते तर्हि प्रत्यक्षद्वारेण गृह्यमाणो रसः कथं निर्विकल्पकज्ञानेन ग्रहणमथवा सविकल्पकज्ञानेन ग्रहणम् । निर्विकल्पकज्ञानेन न दृष्टः । यतो विभावादीमनुसंधानबलेनैव तस्य सत्ता साधने समर्थत्वं कारणम् ।

---

लोहितोष्णीषा ऋत्विजः प्रचरन्ति जैसे 'लोहितोष्णीषत्व' यह अप्राप्त विधेय हो जाता है । इस प्रकार अन्यत्र भी जब तक अप्राप्त कहा जाय और उतने में शब्द के अर्थ में तात्पर्य नामक व्यापार हो जाता है । पुनः प्रतीति के भाव में यह नहीं होता है । यदि प्रतीति मात्र होने पर भी यह तात्पर्य प्रभावशाली होता है । तब 'पूर्वो धावति' इत्यादि में 'अपरादि' अर्थ करने पर भी तात्पर्य का पर्यवसान होगा । 'अपरो धावति' यह हो अथवा नहीं । वहाँ तात्पर्य नहीं है ।

इसके अनन्तर यदि लक्षणीय रस है, तो भी नहीं कहने में समर्थता है । मुख्यार्थ बाधादि के रहित होने से ही विभावादिकों से इसकी अभिव्यंजना होना कारण है । प्रत्यक्ष प्रमाण से ग्रहण करने योग्य रस ऐसा यदि कहा जाय तो प्रत्यक्ष द्वारा गृह्यमाण रस क्या निर्विकल्पक ज्ञान से ग्रहण अथवा सविकल्पक ज्ञान द्वारा ग्रहण किया जाता है । तब निर्विकल्पक ज्ञान द्वारा यह दृष्टिगत नहीं है, क्योंकि विभावादि के अनुसन्धान से हो इसकी सत्ता साधन में समर्थता कारण है ।

अशेषविशेषणरहितवस्तुमात्रपरिच्छेदरूपं हि निर्विकल्पकम् । तर्हि सविकल्पकज्ञानविषय इति चेन्न । निर्विकल्पकस्यानन्तरमुपजायमानत्वात् सविकल्पकस्य । यदि कारणाभावेऽपि कार्यस्य जन्म तदा कारणानुसंधानप्रयासः क्वचिदपि नानुभूयते ॥

ननु सीतादिसंयोगवियोगजनितसुखदुःखवशंवदरामादिभावनटनपटुनटप्रकटिततद्भावविलोकनाविर्भूतानुभूततत्तत्स्वगतभावानुचिन्तनानुमितया तया रामादिस्थयावस्थयात्मानं सामाजिकः सुखाकरोति दुःखाकरोति वेत्यनुमेयोऽस्तु रस इति चेत् तदपि न । लोकप्रसिद्धव्याप्तताप्रयोजकीभूतकारणत्वादिपरिहारेण स्थायिनं प्रति विभावादीनां प्रत्यायकत्वमात्रेण लिङ्गत्वासिद्धेः रसं प्रति विभावादेः कारणत्वाविनिवर्तमानं स्वव्याप्तां लिङ्गतामादायैव निवर्तते ।

---

निर्विकल्पकज्ञानं सम्पूर्णविशेषणराहित्येन वस्तुमात्रं परिच्छेदरूपम् । सविकल्पकज्ञानं तु नैवेत्थं भवति । निर्विकल्पकज्ञानस्यानन्तरं सविकल्पकज्ञानं भवति । यदि कारणाभावेऽपि कार्योत्पत्तिः, तर्हि कारणान्वेषणाय कुत्रापि नानुभूयते ।

ननु सीतादिसंयोगवियोगजनितसुखदुःखवशात् रामादिभावाभिनये दक्षनटेन प्रकटतद्भावदर्शनेन जनितानुभूततद्भाव चिन्तनेन तदनुमानेन रामादौ स्थितावस्थायामात्मानं सामाजिकाः दुःखिनो भवन्ति सुखिनो भवन्ति च । यदीदृशोऽनुमेयेन कथ्यते, तदपि विचारविधुरम् । लोके प्रसिद्धव्याप्तताप्राप्तप्रयोजकीभूतकारणतापरिहारेण स्थायिभावं प्रति विभावादीनां बोधकत्वमात्रे लिङ्गत्वस्य सिद्धिर्न भवति रसं प्रति विभावादीनां कारणतानिवर्तमाने स्वव्याप्तलिङ्गत्वं गृहीत्वैव निवर्तते ।

---

सम्पूर्ण विशेषण से रहित वस्तुमात्र परिच्छेदरूप निर्विकल्पक ज्ञान है, तो सविकल्पक ज्ञान ऐसा नहीं है । निर्विकल्पक ज्ञान के बाद सविकल्पक ज्ञान उत्पन्न होना कारण है । और यदि कारण के अभाव में भी कार्य उत्पन्न होता है; तब कारण ढूढ़ने का प्रयत्न कहीं भी न अनुभूत हो ।

निश्चय ही सीता आदि के संयोग और वियोग से उत्पन्न सुख दुःख वशात् राम आदि भाव अभिनय में दक्ष नट से प्रकट उस भाव को देखने से उत्पन्न एवं अनुभूत उस स्वगत भाव के चिन्तन से उस अनुमिति द्वारा राम आदि में स्थित अवस्था से अपने को सामाजिक सुखी करता है अथवा दुःखी करता हैं, ऐसा यदि अनुमेय रस होवे, तो वह भी नहीं होता है । लोक प्रसिद्ध व्याप्तता प्राप्त प्रयोजकीभूतकारणता के परिहार से स्थायीभाव के प्रति विभावादि के बोधकत्व मात्र से लिङ्गत्व कीं सिद्धि न होने से रस के प्रति विभावादि के कारणता आदि निवर्तमान अपने में व्याप्त लिङ्गत्व को लेकर ही निवर्तन होता है ।

लोके तु कारणकार्यसहकारीण्येवाभिधीयन्ते न विभावानुभावव्यभिचारिणः ॥ स्मरणगोचरत्वमपि रसस्य कथमस्तु । वस्तुविषयस्तावदात्मन्यनुभवपूर्वमिन्द्रियसन्निकर्षादिना जन्यते । जनितेन संस्कार आधीयते । आहितेन च तेन कालान्तरे स्मृतिरुत्पद्यते । संस्काराधानद्वारा स्मृतिं प्रत्यनुभवस्य कारणत्वम् । अनुभवस्तु वस्तुतो रसे नास्ति विभावादिगतस्य रसगतत्वेनोपचर्यमाणत्वात् । किं च रसस्यानुभूयमानत्वाभ्युपगमे व्यङ्ग्यत्वविरोधः । तस्मादनुभवाभावे स्मृतेरप्यभाव इति स्मृतिविषयो न रसः किं तु व्यङ्ग्य एव ॥

यत् पुनरिहाकार्यत्वमुक्तं रसस्य तन्नटगतविभावाद्यनुत्पाद्यत्वमभिसंधाय । यदपि रसस्याज्ञाप्यत्वाभिधानं तदपि रामस्य रतेरतीतत्वात् संनिहितदेशवर्तमान कालेन्द्रियसन्निकर्षाद्यज्ञाप्यत्वाभिप्रायेण ॥

---

लोके कार्यकारणसहकारीण्येवापेक्ष्यन्ते । न तु विभावानुभावव्यभिचारिणः । रसस्य स्मरणगोचरत्वं कथं भवेत् । वस्तुविषयस्तु निजानुभवपूर्वमिन्द्रियसन्निकर्षेणोत्पद्यते । वस्तुविषयजनितेन संस्कारस्य स्थापनं भवति । तदनन्तरमेव स्मृतिर्जायते । संस्कारस्थापनेन स्मृतौ कारणतानुभवस्य वस्तुतस्त्वनुभवः रसे नास्ति, विभावादीनां रसगतत्वेनारोपस्य कारणता । कथं रसस्यानुभूयमानतायाः प्राप्तौ व्यङ्ग्यत्वस्य विरोधः । अनेनानुभवस्याभावे स्मृतेरप्यभावोऽस्ति । एवं स्मृतिविषयो रसो नास्ति, प्रत्युत व्यङ्ग्य एवास्ति । यदि पुनरिह रसस्याकार्यत्वं कथितं, तर्हि नटे व्याप्तविभावादीनामजनितस्याभिसंधानहेतुः । यदा रसस्य ज्ञाप्यत्वाभिधानं तदपि रामस्य रतेः कालातीतेन सन्निहितदेशवर्तमानकालेन्द्रियसन्निकर्षादस्यो ज्ञाप्यत्वस्याभिप्रायेण भवन्ति ।

---

लोक में कारणकार्य सहकारी कहे जाते हैं, न कि विभाव अनुभाव व्यभिचारी भाव । रस का स्मरण गोचरत्व भी कैसे होवे ? वस्तु विषय तब तक अपने में अनुभव के पूर्व इन्द्रियों के सन्निकर्ष से उत्पन्न होता है । वस्तु विषय उत्पन्न होने से संस्कार का स्थापन होता है । उसके होने के कुछ पश्चात् स्मृति उत्पन्न होती है । संस्कार के स्थापन द्वारा स्मृति में अनुभव की कारणता है । अनुभव तो वस्तुतः रस में नहीं होता है, विभावादि के रसगतत्व से आरोप कारण होता है । क्या इसके अनुभूयमानता की प्राप्ति होने पर व्यङ्ग्यत्व का विरोध है । इससे अनुभव के अभाव में स्मृति का भी अभाव है । इस प्रकारस्मृति विषय रस नहीं है, पर व्यङ्ग्य ही है ।

यहाँ यदि पुनः रस का अकार्यत्व कहा जाय तो नट में व्याप्त विभाव आदि के न उत्पन्न होने का अभिसंधान हेतु है । जब रस का ज्ञाप्यत्वाभिधान होता है, तब भी राम के रति के अतीत होने के कारण से सन्निहित देश वर्तमान काल, इन्द्रिय सन्निकर्ष आदि यह ज्ञाप्यत्व के अभिप्राय से होता है ।

---

(Rasa) Sentiment has been classified into nine types, Mammaṭa accepts this classification. Each type of the sentiment has its own abiding element called as (Sthāyī Bhāva). The abiding element seeks fulfilment through the three types of helping emotions known as (Vibhāva, Anubhāva. Vyabhicāribhāva).

अतः कारकत्वज्ञापकत्वव्यावृत्तो विभावादिश्चर्वणोपयोगित्वमात्रेण हेतुरलौकिको भवन्नलौकिकत्वमेव रसस्याभिव्यनक्ति—यदुक्तम् ।

**यो लोकिकोऽप्यतिजनः कारकसिद्धोऽप्यकार्यभूतश्च ।**
**सविकल्पोऽप्यविकल्पः स रसः केनोपमीयेत ॥६॥**
**तत् ननु प्रेक्ष्यं पश्यतां श्राव्यं सम्यग् भावयतां हृदि ।**
**अलौकिकसुखास्वादो रस इत्यभिधीयते ॥७॥**

ततश्च करुणादीनां दुःखरूपत्वात् कथंकारमुपपद्यते रसत्वमिति चेन्न । विगलितवेद्यान्तरत्वमानन्दस्य रूपम् । तद्यदि विभावानुभावव्यभिचारियथोचितोपनिबन्धमहिम्ना काव्यश्रवणसमसमयमेव समुल्लसति तर्हि करुणादावपि कुतस्त्यं दुःखसंवेदनम् ॥

---

अत एव कारकत्वज्ञापकत्वव्यावृत्तः विभावादिः, आस्वाद्योपयोगिमात्रेण हेतुरलौकिको भूत्वा लौकिकत्वस्यैव रसमभिव्यनक्ति । उक्तञ्च रसो यो लौकिको भवन्नप्यत्यन्तोत्कृष्टालौकिकोऽस्ति । कारकसिद्धः सन्नप्यकार्यं भवति । सविकल्पकः सन् विकल्परहितः । स ईदृशो रसः कथमुपमीयते । खलु–तत्प्रेक्ष्यं पश्यतां हृदि सम्यक् प्रकारेण श्राव्यं भावयतां रसो भवत्येतादृशोऽलौकिक सुखस्यास्वादकारकः ।

तदनन्तरं करुणादीनां दुःखरूपस्य कारणं कथं रसमुत्पत्स्यते ? इति तु न समीचीनम् । आनन्दस्वरूपो रसो विगलितवेद्यान्तरः । यदि विभावानुभावव्यभिचारिभावानां यथोचितोपनिबन्धनस्य महिम्ना काव्यश्रवणसममेव, तर्हि करुणादिषु दुःखसंवेदनं कथं भविष्यति ।

---

अतएव कारकत्व, ज्ञापकत्व व्यावृत्त विभाव आदि आस्वाद्य उपयोगी मात्र से हेतु अलौकिक होकर अलौकिक ही रसकी अभिव्यञ्जना होती है ।
कहा भी है—

रस—जो लौकिक होता हुआ भी अत्यन्त उत्कृष्ट एवं अलौकिक है । कारक सिद्ध होता हुआ भी अकार्य होता है । सविकल्पक होता भी विकल्य रहित है । ऐसा वह रस किससे उपमित हो ? निश्चय ही उस प्रेक्ष्य को देखें । हृदय में भली प्रकार उस श्रव्य की भावना करें । अलौकिक सुख का आस्वादन कराने वाला रस ऐसा कहा जाता है ।

तदनन्तर करुणा आदि के दुःखरूपत्व होने के कारण किस प्रकार रसत्व उत्पन्न होवे ? ऐसी वात ठीक नहीं है । नष्ट हुआ अन्य से जानने योग्य रस आनन्द का रूप है । तव यदि विभाव, अनुभाव व्यभिचारी भावों का यथोचित उपनिवन्धन की महत्ता से काव्य के सुनने, समान ही होता है तब करुणा आदि में दुःख का संवेदन कहाँ से होगा ?

स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः,
विकासविस्तरक्षोभविक्षेपैः स चतुर्विधः।
विकासः कुसुमस्येव पादपस्येव विस्तरः,
क्षोभोऽब्धेरिव विक्षेपो मारुतस्येव चेतसः ॥८॥

तत्र विकासोपाधिकः शृङ्गारः। विस्तरोपाधिको वीरः। क्षोभोपाधिको रौद्रः। विक्षेपोपाधिको वीभत्सः। उपाधिर्भूमिकाश्रय इति यावत्। हास्याद्भुतकरुणभयानकेष्वपि विकासादिरेवोपाधिरित्येभिः सह मित्रताशृङ्गारादीनां न तु कार्यकारणभावः। तेषां प्रत्येकं विभावादिकारणभेदस्य दृष्टत्वात्। ननु तदाष्टावेव रसा भवितुमर्हन्ति न तु नवमः। ततः कोऽयमभिनवो नाम शान्त इति चेन्न। मुनिनास्य विभावाद्यप्रतिपादनाल्लक्षणाकरणाच्च। अनादिकालप्रवाहायातस्य रागद्वेषादेरत्यन्तमुच्छेत्तुमशक्यत्वाच्च ॥

---

काव्यस्यार्थस्य संभेदेनात्मानन्देनोद्भूतरसस्यास्वादो भवति। स विकासविस्तारक्षोभविक्षेपसहितेन चतुर्विधः। पुष्पस्येव तस्य विकासो, वृक्षस्येव विस्तारः सिन्धोरिव तस्य क्षोभश्च वायुना तुल्यं चेतसि विक्षेपो भवति।

तत्र शृङ्गाररसो विकासोपाधियुक्तोऽस्ति। वीररसो विस्तारोपाधिसंयुक्तः। रौद्ररसस्तु क्षोभोपाधिपरिप्लुतोऽस्ति। उपाधिस्तु भूमिकाचारः। हास्याद्भुतकरुणभयानकरसेष्वपि विकासादीनामेवोपाधिः। एतैः विकासविस्तारक्षोभविक्षेपैः सह शृङ्गारादिरसानां मित्रत्वम्। अस्मिन् तु कार्यकारणभावोऽस्ति। तेषां प्रत्येकविभावादीनां कारणभेदात् दृष्टिगोचरोऽयं भविष्यति। रसाः नन्वष्टावेव भविष्यन्ति न तु नवमः। तदायं शान्तो नाम नवमो रसः कथं भविष्यति। इति तु कथनं न समीचीनम्। भरतमुनिनास्य रसस्य विभावादीनां प्रतिपादनेन लक्षणयायं रसो भवति। अनादिकालप्रवाहरूपेणागतरागद्वेषादीनामात्यन्तिकेन रूपेण च्छेत्तुमसमर्थत्वात्।

---

कार्य के अर्थ के संभेद से आत्मानन्द से उद्भूत रस का स्वादन होता है। वह विकास विस्तार क्षोभ तथा विक्षेप सहित चार प्रकार का होता है। पुष्प के समान इसका विकास, वृक्ष के समान विस्तार, सागर के सदृश उसका क्षोभ तथा वायु के तुल्य चित्त में विक्षेप होता है। रसों में शृंगार रस विकास उपाधि युक्त है। वीर रस विस्तार उपाधि से संयुक्त है। रौद्ररस क्षोभ की उपाधि से ओत प्रोत है। तथा बीभत्स रस विक्षेप की उपाधि से परिपूर्ण है। उपाधि भूमिका का आधार होता है। हास्य अद्भुत, करुणा तथा भयानक रसों में भी विकास आदि की ही उपाधियाँ होती है। इन विकास, विस्तार, क्षोभ तथा विक्षेप के साथ शृंगारादि रसों की भिन्नता है। इसमें कार्य कारण भाव है। उनके प्रत्येक के विभावादि कारण भेद के दृष्टिगोचर होने से यह होगा। निश्चय ही तब आठ ही रस होने योग्य है। नवाँ रस नहीं (तब वह शान्त नामक नवीन रस कौन है। ऐसा न कहें। भरत मुनि द्वारा इस रस को विभाव आदि के प्रतिपादन से लक्षण करने से यह रस होता है। अनादि काल से प्रवाह के समान आने से राग द्वेप आदि के अत्यन्त प्रगाढ़ रूप से काटने हेतु असमर्थता कारण है।

अपरे पुनरेवमिह विवदन्ते । यथा तथास्तु नाम शान्तो रसः । सर्वथा नाटकादावभिनयात्मनि स्थायित्वमस्य निषिध्यतेऽस्माभिस्तस्य सकलव्यापारोपरमरूपस्याभिनयायोगात् । एतच्च विचारविकलम् । अमङ्गलरूपस्यापि निर्वेदस्य शान्तरसस्थायित्वप्रकाशनायैव मुनिना व्यभिचारिषु प्रथमं निर्दिष्टत्वात् ।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥८अ॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
व्रीडाचपलताहर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथामरणमेव च ॥८॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥९॥

---

पुनरिह विवदन्तेऽपरे । यथा नाम तथास्तु शान्तो नाम रसो भवत्येव । सर्वथा नाटकादीनामभिनयात्मनि शान्तरसस्य स्थायित्वं निषिद्धम् । अस्माभिः कथ्यते यत् तत्शान्तरसस्य सम्पूर्णव्यापाररूपाभिनयेन युक्तमिति तु विचारणीयम् । शान्तरसस्य स्थायित्वप्रकाशनममङ्गलरूपव्यापारकारणात् । भरतमुनिना व्यभिचारिभावेष्वयं प्रथमे निर्दिष्टः । अष्टौ स्थायिभावास्तत्र प्रकीर्तिताः । रतिहसिश्च शोकश्च क्रोधोत्साहौ भयं जुगुप्सा विस्मयश्च । अमी व्यभिचारिणः त्रयस्त्रिंशद्भावाः । ते सन्तीमे निर्वेदग्लानिशङ्कासूयामदश्रमालस्यदैन्यचिन्तामोहस्मृतिधृतिव्रीडाचपलताहर्षावेगजडतागर्वविषादौत्सुक्यनिद्रापस्मारसुप्तप्रबोधामर्षवहित्थोग्रतामतिव्याध्युन्मादमरणत्रासवितर्काश्च ।

---

पुनः दूसरे लोग ही यहाँ वाद विवाद करते हैं। जो भी हो शान्त नामक रस होता है। सर्वथा नाटक आदि के अभिनय में आत्मा में शान्त रस का स्थायित्व निषिद्ध है। हम लोगों द्वारा यह कहा गया है कि उस शान्त रस के सम्पूर्ण व्यापार के रूप अभिनय में युक्ति युक्त नहीं होता है। यह भी विचारणीय है। शान्त रसका स्थायित्व प्रकाशन अमङ्गल रूप व्यापार के कारण भरत मुनि द्वारा व्यभिचारी भावों में इसे पहले पहल निर्देशित किया गया है।

रति, हास, शोक, क्रोध, उत्साह, भय, जुगुप्सा तथा विस्मय—ये आठ स्थायी भाव कहे जाते हैं। कुल तैंतीस व्यभिचारी भाव होते हैं। उनके नाम मे हैं—

(१) निर्वेद (२) ग्लानि (३) शङ्का (४) असूया (५) मद (६) श्रम (७) आलस्य (८) दैन्य (९) चिन्ता (१०) मोह (११) स्मृति (१२) धृति (१३) व्रीडा (१४) चपलता (१५) हर्ष (१६) आवेग (१७) जडता (१८) गर्व (१९) विषाद (२०) उत्सुकता (२१) निद्रा (२२) अपस्मार (२३) सुप्त (२४) प्रबोध (२५) अमर्ष (२६) अवहित्थ (२७) उग्रता (२८) मति (२९) व्याधि (३०) उन्माद (३१) मरण (३२) त्रास (३३) वितर्क ।

इति स्थायिव्यभिचारिमध्येऽस्य पठनादुभयरूपत्वमस्याभिमतमिति मुनेराशयस्य लक्ष्यमाणत्वाच्च । तस्मादस्ति शान्तो रसः । अतश्च नवैव रसा इति नः संमतम् । राजा तु श्रृङ्गारमेवमेव श्रृङ्गारप्रकाशे रसमुररीचकार । यथा--

वीराद्भुतादिषु च ये हरसप्रसिद्धिः, सिद्धा कुतोऽपि वटयक्षवदाविभाति ।
लोके गतानुगतिकत्ववशादुपेतामेतां निवर्तयतुमेष परिश्रमो नः ॥१०॥
श्रृङ्गारवीरकरुणाद्भुतहास्यरौद्रवीभत्सवत्सलभयानकशान्तनाम्नः ।
अम्नासिषुर्दश रसान् सुधियो वयं तु श्रृङ्गारमेव रसनाद्रसमामनामः ॥११

रसाना लक्षणानि क्रमेण यथा—

---

शान्तरसोऽस्ति । भरतमुनिना रसस्यास्य व्याख्या स्थायिव्यभिचारिभावयोर्मध्ये-कृता । अत एवोभयरूपत्वं सिद्धम् । अतो नवैव रसा भवन्ति । अस्माभिः स्वीक्रियते । श्रृङ्गारप्रकाशग्रन्थे भोजराजः एकमद्वितीयं श्रृङ्गारसमेवाङ्गीकृतवान् । वत्सलरससहितेन दशरसानामुल्लेखः । अत्रोदाहृयते क्रमेण वीराद्भुतादिरसेषु प्रसिद्धिः कथं सिद्धा । वटयक्षवदाभाति । लोके तु गतानुगतिकवशात् प्राप्तं निवर्तयितुमेव परिश्रमः । श्रृङ्गारवीरकरुणाद्भुतहास्यरौद्रवीभत्सवत्सलभयानकशान्तनाम्नः सुधियो दशरसान् वदन्ति । वयं तु श्रृङ्गाररसं प्रधानरसं मन्यामहे । क्रमेण रसानां लक्षणानि । यथा—

---

भरत मुनि के आशय के लक्षित होने से ऐसे स्थायी भाव व्यभिचारी भाव के मध्य इस शान्त के पठन होने से दोनों रूपौं की सिद्धि होती है । अतएव शान्त रस होता है । इस प्रकार नव ही रस हमें अभीष्ट है । भोजराज ने 'श्रृङ्गार प्रकाश में एक श्रृङ्गार ही को सर्वश्रेष्ठ रस स्वीकार किया है । वात्सल्य रस सहित दस रसों को स्पष्ट रूप से लिखा है । उदाहरणार्थ—

वीर, अद्भुत आदि रसो में जो यह प्रसिद्ध है । कहाँ से यह सिद्ध है । वट में यक्ष के समान विभूषित होता है । लोक में गतानुगतिकत्ववशात् प्राप्त इसको निवर्तन करने का हमारा यह श्रम है । १—श्रृङ्गार २--वीर ३—करुण ४—अद्भुत ५—हास्य ६—रौद्र ७—वीभत्स ८—वत्सल ९—भयानक—तथा १०—शान्त नाम के दस रसों में हम बुद्धिमान तो श्रृङ्गार से ही रसन होने के कारण उसे प्रधान रस स्वीकार करते हैं । अर्थात् श्रृङ्गार रस प्रधान है । रसों के लक्षण क्रमशः दिये जाते हैं ।

---

One thing that deserves special noticc in Vidyādhara is the fact that he accepts (śringāra Rasa) erotic scntiment while he has not asserted anywhere that the erotic emotion is the chief among all the emotions as Rājā Bhoja in his (śringāra Prakāś) he seems to have thrown his full weight in the favour of erotic emotion.

स्त्रीपुंसमाल्यादिविभावा स्तम्भस्वेदाद्यनुभावा जुगुप्सालस्यौग्यवर्ज्यव्यभिचारिक रतिः सम्भोगविप्रलम्भात्मा शृङ्गारः ।

विकृतवेषादिविभावो नयनविकासाश्रुपाताद्यनुभावो लज्जादिसहकारी हासो हास्यः । पितृविपत्तिप्रभृतिविभावो दैवोपालम्भाश्रुप्रभृत्यनुभावो दैन्यादिसहकारी शोकः करुणः ॥ असुहृद्दर्शनादिविभावः स्वेदनिर्भर्त्सनाद्यनुभावोऽमर्षादिव्यभिचारी क्रोधो रौद्रः ।

---

शृङ्गाररसस्य द्वौ भेदौ । सम्भोगशृङ्गारो विप्रलम्भशृङ्गारश्च । रतिषु स्त्रीपुरुषमाल्यादिविभावाः स्तम्भस्वेदाद्यनुभावा जुगुप्सालस्योग्रत्ववर्ज्यव्यभिचारिका रतिः । हास्यरसे विचित्रवेषादिविभावो नेत्रविकासाश्रुपाताद्यनुभावो लज्जादिसहकारिहासो भवति ।

करुणरसे पितृविपत्त्यादिविभावोऽस्ति । दैवोपालम्भाश्रुपाताद्यनुभावः । दैन्यादिसहकारिशोकः करुणः ।

रौद्ररसे तु शत्रुदर्शानाद्विभावो भवति । स्वेदनिर्भर्त्सनाद्यनुभावोऽस्ति । अमर्षादिव्यभिचारिभावः सहकारी क्रोधः स्थायी भावः ।

---

शृङ्गार रस में स्त्री पुरुष माला आदि विभाव हैं । स्तम्भ स्वेद आदि अनुभाव हैं । जुगुप्सा, आलस्य और उग्रता तीनों को छोड़कर व्यभिचारी रति स्थायी भाव है । शृङ्गार रस के सम्भोग एवं विप्रलम्भ दो भेद हैं, जो आत्मा रूप हैं ।

हास्य रस में विचित्र वेष आदि विभाव हैं । नेत्र का विकास आँसू का बहना आदि अनुभाव हैं और इसके साथ लज्जा आदि हास स्थायी भाव हास्य रस है ।

करुण रस में पिता की विपत्ति आदि विभाव हैं । दैव उपालम्भ आंसू आदि अनुभाव है । दैन्य आदि सहकारी होने से शोक स्थायीभाव करुण रस होता है ।

रौद्र रस में शत्रु का दर्शन आदि विभाव हैं । स्वेद, निर्भर्त्सन आदि अनुभाव होते हैं । अमर्ष आदि व्यभिचारी भावों सहित क्रोध स्थायी भाव रौद्र रस में होता है ।

---

The erotic emotion is an integral part of the creative consciousness. It pervades from the vegetative world to the world of mental consciousness equally well. The second position has been assigned to laughter, because this pervades the entirety of human consciousness. Just the opposite of it is the sentiment of pity; which is also equally pervasive. The fourth position is assigned to anger and the fifth to the sentiment of valour, the sixth the senti-

प्रतिमल्लविलोकनादिविभावो रोमाञ्चकृपाणकम्पनाद्यनुभावो हर्षादिभिर्व्यभिचारिभिरुपचित उत्साहो वीरः ।

प्रतिभटदर्शनादिविभावं कम्पकातराक्षिविलोकनाद्यनुभावं दैन्यादिव्यभिचारि-भयं भयानकः ।

पूतिपरासुदर्शनादिदिभावा नासापिधानवैवर्ण्याद्यनुभावं मोहादिव्यभिचारिणी जुगुप्सा वीभत्सः ।

विचित्रवस्तुदर्शनादिविभावः स्तम्भस्फारनेत्रविलोकनाद्यनुभावो वितर्कादिव्यभिचारी विस्मयोऽद्‌भुतः ।

---

वीररसे प्रतिमल्लालोकनादिविभावः । रोमाञ्चखड्गकम्पनाद्यनुभावो हर्षादिभिर्भावैः प्रवर्धितोत्साहो व्यभिचारिभावः ।

भयानकरसे शत्रुदर्शनादिविभावाः । कम्पदीननेत्रालोकनाद्यनुभावो दैन्यादिव्यभिचारिभावो भवति ।

वीभत्सरसे दुर्गन्धयुक्तमज्जादिदर्शनं विभावः । नासिकापिधानं विकृतरूपमनुभावो मोहादिव्यभिचारिभावः । स्थायी भावस्तु जुगुप्सा ।

अद्‌भुतरसे विचित्रवस्तुदर्शनं विभावः स्तम्भनेत्रस्फारावलोकनाद्यनुभावो व्यभिचारिभावो वितर्को विस्मयः स्थायी भावः ।

---

वीररस में युद्धवीर को देखना आदि विभाव के अन्तर्गत हैं । रोमाञ्च, कृपाण, कम्पन आदि अनुभाव हैं । हर्ष आदि व्यभिचारी भावों से बढ़ा हुआ उत्साह, स्थायी भाव वीर रस है ।

भयानकरस में शत्रु दर्शन आदि विभाव हैं । कम्पन कातर दृष्टि से देखना आदि अनुभाव हैं । दीनता आदि व्यभिचारी भावों से उत्पन्न भय स्थायीभाव भयानक रस में होता है ।

वीभत्स—दुर्गन्धमज्जा के दर्शन आदि वीभत्स रस में बिभाव हैं । नाक ढकना विकृत रूप आदि अनुभाव हैं । मोह आदि व्यभिचारी भाव हैं । वोभत्स रस में जुगुप्सा स्थायीभाव होता है ।

अद्‌भुतरस में विचित्र वस्तु दर्शन आदि विभाव हैं । स्तम्भ आँखे फाड़कर देखना आदि अनुभाव हैं । वितर्क आदि व्यभिचारी भाव हैं । विस्मय स्थायीभाव होता है ।

---

ment of fear, the seventh, the sentiment of hatred. Because the classification of sentiment is here; in descending order; the eighth, the sentiment of wonder; and the last, calmness; get their own respective positions.

भवमङ्गुरता विभावनादि विभावः पुलकनयननिस्तरङ्गताद्यनुभावो धृत्यादि-व्यभिचारी निर्वेदः शान्तः ।

अत्र कामस्य सकलजीवलोकानन्दकन्दलनक्षमतया सर्वान् प्रति हृद्यतेति तन्मूलः पूर्वं निर्दिष्टः श्रृंङ्गारः । तदनुगामितया हास्यः । ततो निरपेक्षभावत्वात् तद्विपरीतः करुणः । ततस्तन्निमित्तमर्थप्रधानो रौद्रः । अथ कामार्थयोर्धर्ममूलत्वाद्धर्मप्रधानो वीरः । तस्य भीताभयप्रदानसारत्वाद्वीरानन्तरं भयानकः । तद्विभावसाधारण्य-संम्भवाच्च तद्धेतुस्ततो बीभत्स इति । यद्वीरेणाक्षिप्तं वीरस्य पर्यन्तेऽद्भुतः फलमिति तदुपादानम् । ततस्त्रिवर्गात्मकप्रवृत्तिधर्मविपरीतनिवृत्तिधर्मात्मकोऽपवर्गफलः शान्तः ।

---

शान्तरसे संसारस्य नश्वरता विभावः पुलकितनेत्रनिस्तरङ्गताद्यनुभावे धैर्या-दिव्यभिचारिभावो निर्वेदः स्थायी भावः ।

इह तु कामः सम्पूर्णजीवलोकानन्ददायकः क्षमः सर्वान् प्रति सहृदयता मूले वर्तते । पूर्वमेव श्रृंङ्गारे निर्दिष्टः । अनुगामित्वेन हास्यरस उपजायते । तन्निरपेक्ष-भावकारणात् तद्विपरीतः करुणः । तदा तन्निमित्तार्थप्रधानयुक्तो रौद्ररसो भवति । अथ कामार्थधर्ममूलत्वात् धर्मप्रधानो वीरो रसः । भीतो भयदायकसारूपत्वात् वीरा-नन्तरं भयानकरसः । तस्य विभावस्य साधारणीकरणसंभावनया तन्निमित्तेन बीभत्सरसोऽस्ति । वीरैराक्षिप्तं वीरत्वपर्यन्ताद्भुतफलकोऽद्भुतरसः । धर्मार्थकाम-प्रवृत्तिधर्मविरुद्धनिवृत्तिधर्मात्मकोऽपवर्गफलकः शान्तः ।

---

शान्तरस में संसार की नश्वरता विभाव पुलकित नेत्र निस्तरङ्गता आदि अनुभाव, धैर्य आदि व्यभिचारीभाव निर्वेद स्थायी भाव होता है ।

'यहाँ काम सम्पूर्ण जीव लोक को आनन्द देने में सक्षम सभी के प्रति मूल है। जो पहले ही श्रृंङ्गार रस में निर्देशित कर दिया गया है । उसके अनुगामी होने से हास्यरस होता है । उससे निरपेक्ष भाव के कारण उसके विरुद्ध करुण रस होता है। तब उसके निमित्त अर्थप्रधान वाला रौद्ररस होता है । काम एवं अर्थ में धर्म मूल होने के कारण धर्म प्रधान वीररस होता है । उससे डरा हुआ भय देने में सार रूप होने से वीर के अनन्तर भयानक रस होता है । उसके विभाव के साधारणीकरण की संभावना से और उसके निमित्त से वीभत्सरस होता है । वीरों द्वारा आक्षेप किया गया वीरत्व पर्यन्त अद्भुत फल का ग्रहण ही अद्भुत रस है । धर्म अर्थ काम की प्रवृत्ति में धर्म विपरीत निवृत्ति धर्म युक्त अपवर्ग फल शान्त रस है ।'

चाटुषुप्रभुविषयस्य रत्याख्यस्य कविभावस्य प्राधान्यं भविष्यतीति रसादिध्वनेः प्राधान्यप्रकाशनाय परकीयाण्येवास्माभिः पद्यान्यत्र क्रमेणोदाह्रियन्ते । तत्र रसो यथा ।

ममासनार्धे भव मण्डनं ततः प्रिये मदुत्सङ्गविभूषणं भव ।
भ्रमाद्भ्रमादालपमङ्गमृष्यतां, विना ममोरः कतरस्तवासनम् ॥१२॥

वीर नरसिंह नृपते तव विरहे भाति पाण्डुता वपुषि भृशम् ।
तस्या हृदयगतस्य त्वन्मुखचन्द्रस्य चन्द्रिकाभरमधुरा ॥१३॥

अत्र सखी वक्री ।

उत्कासे कण्ठदाहः प्रचुरघृतपयः पानमामज्वरार्ते,
रक्ताकृष्टिः कृशानामुदरभयहरा कर्कटीसक्तुमिश्रा ।
पथ्यापथ्यातिसारे दृशि सरुजि पुनः क्षारचूर्णप्रयोग-
स्तत्तत्पथ्योपचारैस्तरुणयति यमाडम्बरं जन्तुकेतुः ॥१४॥

---

रतिविभावस्य प्रधानता भविष्यति नरसिंहप्रभुविषयकचाटुश्लोकेषु । एवं रसादिध्वनिप्रधानताप्रकाशनायान्येषां श्लोकाः क्रमेणास्माभिः कथ्यन्ते । रसस्योदाहरणमत्र द्रष्टव्यम् । शृंङ्गारे—

शिवः सम्बोधयति पार्वतीं प्रति । आसनस्यार्धे भागे शोभिता स्यात् । अथाङ्के विभूषिता भवेत् । भ्रमिता सती सालस्यहीना मां विना कस्य हृदये वासस्तस्या भविष्यति । विप्रलम्भे–हे वीरनरसिंहनरेश ! तव वियोगे शरीरेऽपि पाण्डुता शोभते । हृदयगतचन्द्रचन्द्रिका मधुरा । इह सखी दुःखेन विरहिता ।

हास्ये—उत्कृष्टकासरोगिणं प्रति भवतः कण्ठे दाहोऽस्ति । एतावता प्रचुरस्य घृतपयसश्च पानं विधेयमाज्वरार्ते कदा समुचिता । समीचीनज्वरजनितपीडायां कृशशरीररोगिणं प्रति भवता रक्तमोक्षणं करणीयम् । अथ चोदरविकारनिराकरणे सक्तुमिश्राकर्कटी भक्ष्यास्तीति कृत्वा तस्याः सेवनं विधेयमिति कथनं पुनश्चातिसाररोगिणं प्रति सा सक्तु मिश्राकर्कटी अपथ्यास्तीति कथनञ्च सहकारिरूपेण स्वीकृत्य यमदूतः यमराजस्य प्राणी मरणमहोत्सवं वर्द्धयति ।

---

चाटुश्लोकों में नरसिंह प्रभु विषयक रति नामक विभाव की प्रधानता होगी । इस प्रकार रसादि ध्वनि की प्रधानता प्रकाशन के लिए दूसरों के ही पद्यों को यहाँ क्रमशः हमारे द्वारा उद्धृत किये जाते हैं । वहाँ रस का उदाहरण द्रष्टव्य है ।

**शृङ्गार**—मेरे आसन के आधे भाग में शोभित हो, उसके बाद हे प्रिये ! मेरी गोद में विभूषित होओ । भ्रमित होकर आलस्य रहित होओ । बिना मेरे किस हृदय में तुम्हारे आसन हो ।

**विप्रलम्भ**—हे वीर नरेश नरसिंह ! तुम्हारे वियोग में शरीर में अत्यन्त पीलापन हो गया और इस प्रकार शोभा है । उसके हृदयगत तुम्हारे मुखचन्द्र की चन्द्रिका (किरण) मीठी एवं मधुर हैं । यहाँ सखी विरह से दुःखी है ।

**हास्य**—उत्कृष्ट कास रोग में कण्ठ दाह बताकर प्रचुर घृत, दुग्ध पीना औषधि है । पुनः समीचीन ज्वर के कष्ट में जो कृश हो रहे हैं । उनके रक्त का मोक्षण कराना और सतुआ मिश्रित ककड़ी का भोजन उदर विकार को दूर करनेवाली है । तथा पथ्य का कहना अतिसार में इसी को अपथ्य बताना । ये सभी विरुद्ध बातों से यमदूत मानो यमराज के (प्राणी मरण महोत्सव) आडम्बर को तरुण बना रहा है ।

हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं, त्वमनङ्गः कथमक्षतारतिः ॥१५॥
केयं माता पिशाची क इव स जनको भ्रातरः केऽत्र कीटा ।
वध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽपि ॥१६॥

हस्तौ निष्पीड्य—

आगर्भं यावदेषां कुलमिदमखिलं नैव निश्शेषयामि ।
स्फूर्जन्तः क्रोधवह्नेर्दधति न विरतिं तादङ्गस्फुलिङ्गाः ॥१७॥
क्षुद्राः संत्रासमेनं विजहितहरयः क्षुण्णशक्रेभकुम्भा,
युष्मद्गात्रेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः,
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥१८॥

---

करुणरसे—इति मत्प्रियं प्रति यदवोचस्तद् जानामिच्छलं, हृदये वससि । यदि नोपचारपदं स्यात् तर्हि त्वमनङ्गरहितरतिः कथमक्षता भवेत् ।

रौद्रे—केयं माता राक्षसी ? कः पिता तत्सदृशः ? भ्रातरश्च के ? के च कीटाः ? सजातीया बान्धवा अपि कुटिलधूर्तमित्रं सदृशं चेष्टावन्तः । बन्धुवर्गोऽयं हन्तव्यः ?

करौ निपीड्य—

इमान् शत्रूनागर्भं सम्पूर्णकुलं यावद् न निश्शेषयामि । क्रोधाग्नेः स्फुलिङ्गा न विरता भवेयु ?

वीररसे—हे वानराः ! ममामी वाणा ऐरावतगजस्य मस्तके निपतिताः पूर्वमेव त्वत्सदृशेषु शरीरेषु क्षुद्रेषु पतनं लज्जास्पदम् । यदि पलायनमिच्छसि, पलायितो भव ? त्वां कथं भीतेन ? हे लक्ष्मण ! सुमित्रानन्दन ! त्वं चेच्छसि युद्धं, ननु मेघनादोऽहम् । त्वां नहि किन्तु राममन्वेषयामि । क्रोधो मम त्वां प्रति न । कुत्र गतः स रामः ? कुत्र च पलायितः ? यस्य भ्रूभङ्गलीलयानायासेन सिन्धोर्बन्धनमभवत् ॥

---

करुण—हृदय में वास करते हो, ऐसा मेरे प्रिय के प्रति जो कहा, उस क्रीड़ा छल को जानती हूँ । यह उपचार का स्थान यदि न हो, तो तुम अङ्ग रहित कामदेव, कैसे बिनाक्षत रति हुई ?

रौद्र—कौन यह माता राक्षसी है ? किसके समान वह पिता है । वे भाई कौन है ? कौन यहाँ कीड़े हैं ? यह मारने योग्य बन्धु समूह है । टेढ़े धूर्तमित्र से चेष्टित जाति भी है ?

दोनों हाथों को दबाकर—

इन शत्रुओं के गर्भ तक सम्पूर्ण कुल को जब तक मैं समाप्त नहीं कर देता हूँ, तब तक क्रोध की अग्नि (चिनगारियाँ)विरति को न प्राप्त हो । अर्थात् शान्त न हों ।

वीररस—'अरे वानरों ! हमारे ये वाण ऐरावत के मस्तक पर गिर चुके हैं । तुम जैसे—तुच्छ प्राणियों की देह पर गिरना भी इनके लिए लज्जास्पद है, तुम्हें भागना हो तो भाग जाओ । तुम्हें डराने से इन्हें क्या मिलेगा ? अरे सुमित्रा पुत्र लक्ष्मण ! तुम मुझ से भिड़ने चले हो, अरे मैं मेघनाद हैं । मेरा क्रोध तुम जैसे—के लिए नहीं, मैं तो उस राम को ढूढ़ रहा हूँ । पता नहीं कहाँ भागा छिपा है जिसकी टेढ़ी भौंहों ने, सुना गया है कि समुद्र को भी विवश कर बांध डाला है ।

(हनुमन्नाटक)

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः,
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृत्त मुखभ्रंशिभिः कीर्णवर्त्मा,
पश्योदग्रप्लु तत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥१९॥
दसमाणुसमांसभालके कुंभसहस्सवशाहिं शंचिदे ।
अणिसं च पिवामि सोणिदं बलिशशदं समलेभवीयदु ॥२०॥
पश्य कञ्चनचकोरलोचने लोचनाविषयमैन्द्रजालिकम् ।
इक्षुरिष्वसनमङ्कुराः शरा लक्ष्यमेतदखिलं चराचरम् ॥२२१॥
कदा वाराणस्याममरतटिनीरोधसि वसन्,
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन,
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥२२॥

---

**भयानके**—पश्य ! हरिणोऽयं रथे नयनेन विलोकनेन वाणपतनभयात् स्वेदहस्य पूर्वभागं पश्चात् प्रवेशयन् श्रमेण श्वातिश्वासं गृह्णन् दर्भावलीढेनार्धेन मुखेन भ्रंशयन् मार्गेऽग्रप्लुतत्वात् पृथिव्यां स्तोकमेवाकाशे बहुतरं प्रयातीव ।

**बीभत्से**—राक्षसी कथयति कान्तं प्रति हे कान्त ! अजस्रं पिबामि रक्तं दश-मनुष्याणां मांसेन तथैव सहस्रघटानां शोणितेन रक्तेन सज्जाः घटाः ।

**अद्भुतरसे**—हे चकोरनयने ! कमप्यैन्द्रजालिकं पश्य यसद्यापि न दृष्टवती । नयनेन धनुषि संधानितवाणः इवारिवलं जगत् चराचरं लक्ष्यम् ।

**शान्तरसे**—वाराणस्यां कदा गङ्गायाः तटे वसन् शिरसि कौपीनवस्त्रंन्धारयन् बद्धाञ्जलिना भविष्यामि । अये गौरीनाथ ! त्रिपुरहर ! शिव ! त्रिलोचन । प्रसीदेति कथयन् जपन् दिवसं क्षणमिव नेष्यामि ।

---

**भयानक रस** – 'अरे देखो ! यह हरिण पीछा करते रथ पर गर्दन टेढ़ी कर आँखे गड़ाए, वाण अब गिरा तब गिरा । इस डर से अपनी देह के पिछले भाग को सिकोड़ कर मानो अगले भाग में घुसाए, हाँफते हुए खुले हुए मुख से आधी चबाती हुई घास के टुकड़े को रास्ते पर गिराते ऐसी चौकड़ी भर रहा है । मानो धरती पर तो कम किन्तु आकाश में ही अधिक भगदड़ लगा रहा हो ।

**बीभत्स** – राक्षसी कहती है कि ऐ प्रिय ! दस मनुष्यों के मास तथा सहस्रों घड़े रक्त से संचित है और निरन्तर रक्त पी रही हूँ ।

**अद्भुतरस** – ऐ चकोर के सदृश नयनवाली किसी ऐन्द्रजालिक जादू जिसको नेत्र से नहीं देखा है देखो ! धनुष पर लगे बाण क्षुरा के समान वाण के ये सारा चराचर जगत लक्ष्य है ।

**शान्तरस** – वाराणसी में कब गङ्गा जी तट पर रहते हुए और शिर पर कौपीन वस्त्र धारण करते हुए हाथ जोड़े हुए रहेंगे ? ऐ गौरीपति ! त्रिपुर हर ! शिव जी ! त्रिलोचन जी ! प्रसन्न हो ! ऐसा कहते हुए दिवस को क्षण के समान व्यतीत करूँगा ।

अत्र भावितीव्रनरकयातनानुचिन्तनादिभिर्विभावैर्जनितः कौपीनधारणशिरोऽञ्जलिपुट-घटनादिभिरनुभावैरभिव्यक्तः कदेतिपदसूचितेन चिन्ताख्येन व्यभिचारिभावेन पुष्टः स्वात्मावमानलक्षणो निर्वेदः स्थायीशान्तरसरूपतां विभ्रद्विश्रान्तिधाम। विभावास्त्वत्रा-क्षेपलभ्याः ॥ शृङ्गारादिरसभेदाः पुनः शास्त्रान्तरसुलभनिरूपणा इति नेह प्रपञ्चिताः भावो यथा। भावो हि नाम देवद्विजगुरुपुत्रमित्रादिविषयारतिर्विभावाद्यापूरितो व्यभिचारी च कान्ताविषया याः रतेः श्रृगारत्वेनाङ्गीकारात्। तत्र देवविषया यथा।

---

अत्र निर्वेदः स्थायी भावो भावितीक्ष्णनरककष्टचिन्तनादिभिर्बिभावैः समुद्भूत-कौपीनधारणशिरोऽञ्जलिबन्धनादिभिरनुभावैः स्पष्टः कदेति पदेन संसूच्यते चिन्ता-व्यभिचारिभावैः परिपोषितो निजावमानलक्षणयुक्तश्शान्तरसरूपत्वं धारयति। हेतुश्चायं निरूप्यते। विभावोऽत्राक्षेपाल्लभ्यते।

शृङ्गारादिरसभेदाः पुनरप्यन्यैश्शास्त्रैः सुलभाः। नेह प्रदर्शिताः। भावोदा-हरणम्। भावध्वनिनाम्ना खलु देवद्विजगुरुसुतमित्रादिविषयारतिः। विभावादिपरि-पूरितो व्यभिचारी च स्त्रीविषयारतिः। तस्याः शृङ्गाररसत्वेन स्वीकारात्। देव-विषयारतिस्तत्र यथा—

---

यहाँ होनेवाली तीक्ष्ण नरक के कष्ट की चिन्ता आदि विभावों से उत्पन्न कौपीन धारण करते हुए शिर पर हाथ जोड़े आदि घटना अनुभावों से स्पष्ट कब (कदा) इस पद से सूचित चिन्ता नामक व्यभिचारी भाव से पुष्ट होता हुआ अपने अवमान काल का क्षण निर्वेद स्थायीभाव है, जो शान्त रस के निरूपण का हेतु है। विभाव यहाँ आक्षेप से प्राप्य है।

शृङ्गार आदि रस भेद पुनः दूसरे शान्त से सुलभ निरूपण यहाँ नहीं दर्शाया गया है। भाव का उदाहरण देखें।

भावध्वनि के नाम लेने से निश्चय ही देबता, ब्राह्मण, गुरुपुत्र मित्रादि विषयक रति विभावादि से परिपूर्ण होता है और व्यभिचारीभाव कान्ता विषयक जो रति के शृङ्गार रस होने से स्वीकार किया जाता हे, वहाँ देवविषयक रति है। उदाहरणार्थ—

छिन्ते ब्रह्मशिरो यदि प्रथयति प्रेतेषु सख्यं यदि,
क्षीवःक्रीडति मातृभिर्यदि रतिं धत्ते स्मशाने यदि।
सृष्ट्वा संहरति प्रजा यदि तथाप्याधाय भक्त्या,
मनस्तं सेवे करवाणि किं त्रिजगती शून्या स एवेश्वरः॥२३॥

अत्र भगवद्विषया रतिः प्रतीयते। एवं द्विजाति विषयाप्युदाहार्या। पुत्रविषया तु रतिर्वत्सलो रस इति कैश्चिदुच्यते।

यद्यपि सकलमेव काव्यं रसेनैव जीवति रसश्चैकथनचमत्कारात्मा तथापि क्वापि व्यभिचारिणः सकाशादधिकश्चमत्कारी भवतीति सोऽपि विभावानुभावप्रकाशितो भाव उच्यते। यथा—

किमसुभिर्गलितैर्जड मन्यसे, मयि निमज्जतु भीमसुतामनः।
मम किल श्रुतिमाह तदर्थिकां, नलमुखेन्दुपरां विबुधः स्मरः॥२४॥

---

ब्रह्मशिरो यदि भिद्यते; प्रेतेषु मित्रत्वं, मातृभिः सह यदि क्रीडति। श्मशाने यदि रतिं धारयति। सृष्ट्वा विनाशयति यदि। किं कर्तव्यमत्र सेवे कथं भक्त्या मनो रमते। त्रैलोक्यं शून्यं स एवेश्वरः॥

अत्र भगवद्विषयकरतिः प्रतीयते। एवं द्विजाति विषयाप्युदाहार्या। पुत्रविषया-रतिस्तु वात्सल्यभावरूपा कैश्चिदुच्यते। यद्यपि सम्पूर्णमेव काव्यं रसेनैव जीवति। रसश्चैकधनम्। चमत्कारात्मा। तदपि कुत्रापि व्यभिचारिभावेन सह चमत्कारको भवति। सोऽपि विभावानुभावप्रकाशितो भावः कथ्यते। उदाहरणार्थं—हे जड! नष्टप्राणेन किं मन्यसे? मयि भीमसुताया दमयन्त्या हृदयं प्रविशेत्। मम कर्णे खलु नलस्य मुखचन्द्रे लीना तद्याचना भवेत् कामदेवोऽवोचत्।

---

ब्रह्मा के शिर को यदि छिन्न करता है। यदि प्रेतों से मित्रता है। मति भ्रष्ट यदि माताओं से क्रीडा करता है। यदि श्मशान में रति करता है। सृष्टि कर यदि नष्ट करता है। वैसे भक्ति से मन हटा कर उनकी सेवा करे तो मैं क्या करूँ? तीनों लोक शून्य है। वह ही ईश्वर है।

यहाँ भगवद् विषयक रति प्रतीति होती है। इस प्रकार द्विज आदि विषयक रति में भी उदाहरण दिए जाने योग्य हैं। पुत्र विषयक रति तो वात्सल्य रस किन्हीं द्वारा कहा जाता है। यद्यपि सम्पूर्ण काव्य ही रस से ही जीवित होता है और रस एक धन है तथा चमत्कार आत्मा है; तिस पर भी कहीं भी व्यभिचारी भाव सम्पर्क होने के कारण चमत्कारक होता है। वह भी प्रकाशित भाव कहा जाता है।

उदाहरणार्थं—हे जड! नष्ट प्राणों से क्या मानते हो? मुझमें दमयन्ती का मन लगे। मेरे कान में निश्चय ही नल के मुखचन्द्र में लीन उसकी याचना हो; कामदेव ने कहा।

अत्र शशिनं प्रत्यसूया दमयन्त्याः प्रतीयतेऽतिरेकेणेति विप्रलम्भेऽप्यसूयाख्य-व्यभिचारिचमत्क्रियाप्रयुक्त आस्वादातिशयः। रसाभासो यथा—

ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णींबहिः स्थीयतां,
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः।
वीणां संहर नारद स्तुतिकथालापैरलं तुम्बरो,
सीतायल्लकमल्लभग्नहृदयः स्वस्थो न लङ्केश्वरः॥२५॥

अथ न कथमपि मिथिलाधिराजतनयायाः प्रेमभाजनं भवति रामभद्रेतरस्ततः सर्वथा तस्यामनौचित्येन रतिः प्रावर्तत रावणस्य रसाभासः समजनि विप्रलम्भश्रृङ्गारः। इदमत्र तात्पर्यम्। यत्र परम्परानुकूल्यकल्लोलितः प्रवर्तते स्थायी तत्र रसः।

---

इह तु चन्द्रं प्रत्यसूया। इयं दमयन्त्याः सम्बन्धिनी। आधिक्येन विप्रलम्भोऽप्यसूया। व्यभिचारी भावोऽतिशयश्चमत्कारप्रयुक्तास्वादस्य। रसाभासस्योदाहरणम्—हे ब्रह्मन्! वेदपाठस्य कालोऽयं नास्ति। अत एव तूष्णीं भव (हे बृहस्पते! स्वल्पं कथय। जडमते सभेयं नास्तीन्द्रस्य। हे नारद! वीणां संहर। हे तुम्बरो! स्तुति-कथा वृथा। रावणः स्वस्थो न। सीतायाः विरहे हृदयं विदारितम्।

इह न कथमपि सीतायाः प्रेमास्पदं भवति। रामेतरस्याथ सर्वथैव तस्याम-नौचित्येन रतिः प्रावर्तत। लङ्केश्वरस्य रसाभासः प्रादुर्भूतो विप्रलम्भश्रृङ्गारः। अत्रेदं तात्पर्यम्। यत्र परम्परानुकूल्येनोद्वेलितः तत्र स्थायी रसः प्रवर्तते।

---

यहाँ चन्द्रमा के प्रति असूया है। दमयन्ती सम्बन्धी यह प्रतीति होती है। इसके आधिक्य से विप्रलम्भ भी असूया है और व्यभिचारीभाव चमत्कार प्रयुक्त आस्वादन का अतिशय है। रसाभास का उदाहरण—हे ब्रह्मा यह वेदपाठ का समय नहीं है। चुपचाप बाहर रहें। हे बृहस्पति थोड़ा कहो। हे जडमति! इन्द्र की यह सभा नहीं है। हे नारद! वीणा को समेट लो। हे तुम्बरू! स्तुति कथा वार्ता सब व्यर्थ है। रावण स्वस्थ चित्त नहीं है। सीता बिरह में हृदय टूटा है। यहाँ किसी भी प्रकार से वैदेही का प्रेमपात्र नहीं; रामभद्र के अतिरिक्त अन्य सर्वथा उसमें अनुचित रीति से रति प्रवर्तित हो, रावण का रसाभास उत्पन्न हुआ विप्रलम्भ श्रृङ्गार है। यह यहाँ तात्पर्य है। जहाँ परस्पर अनुकूलता से उद्वेलित प्रवर्तित होता हुआ स्थायी, वहाँ रस होता है।

यत्र पुनरेकतरानुरागस्तत्र स्थायिनोऽनौचित्येन प्रवृतत्त्वात् तदाभास एव। अपरे तु रसाभासं तिर्यक्षु प्रचक्षते तन्न परीक्षाक्षमम्। तेष्वपि विभावादिसंभवात्। विभावादिज्ञानशून्यास्तिर्यञ्चो न भाजनं भवितुमर्हन्ति रसस्येति चेन्न। मनुष्येष्वपि केषुचित्तथाभूतेषु रसविषयभावाभावप्रसङ्गात्। विभावादिसंभवो हि रसं प्रति प्रयोजको न विभावादिज्ञानम्। ततश्च तिरश्चामप्यस्त्येव रसः। यथा—

**ददौ सरः पङ्कजरेणुगन्धि, गजाय गण्डूषजलं करेणुः।**
**अर्धोपभुक्तेन विसेनजायां संभावयामास रथाङ्गनामा ॥२६॥**

अत्र गजेनालम्बनविभावेन जनितावसन्तादिभिरुद्दीपनविभावैरुद्दीपिता सुरभिगण्डूषजलदानानुभावप्रकाशिता हर्षादिभिर्व्यभिचारिभिरुपचिता करेणोः संभोगशृङ्गारितां प्रतिपन्नैव रतिः एवं रथाङ्गविषयापि।

---

यत्र पुनरेकतानुरागस्तत्रानौचित्येन प्रवृत्तकारणादस्थायिनः तदाभास एव। अन्ये तु रसाभासं तिर्यक्षु प्रचक्षते। तत्रापि परीक्षायोग्यो न। तेष्वपि विभावादिसंभवात्। विभावादिज्ञानेन शून्ये पक्षिणि तत् रसस्यार्हत्वं न। इति तु न कथनीयम्। तथाविधेषु कतिपयेषु नरेष्वऽपि रसविषयाभावाभावात् प्रसङ्गकारणात्। यतो विभावादिसंभवो हि रसं प्रति प्रयोजकोन विभावादिज्ञानम्। अपरेषु मतेष्वपि रस इत्यस्त्येव। उदाहरणार्थम्—

करिणी सरोवरस्य कमलरेणुसुगन्धितं शूण्डादण्डेन जलं गजाय ददौ। चक्रवाकस्तु निजपत्नीं संभावयाभास। कमलदण्डार्धमुपभुक्तम्।

अत्र गजालम्बनविभावेन जनितवसन्तादिऋतुनोद्दीपनेनोद्दीपितसुगन्धितवायुना गण्डूषजलदानेनानुभावेन प्रकाशितः। हर्षादिव्याभिचारिभावेन संयुक्तो गजस्य संभोगश्रृङ्गारः परिपोषितः। रतिश्च स्थायी भावो भवति। एवं चक्रवाकविषयिकापि द्रष्टव्या।

---

जहाँ पुनः एक से भिन्न अनुराग है, वहाँ स्थायीभाव के अनौचित्य से प्रवृत्त होने के कारण उसका आभास ही है। दूसरे तो रसाभास को पक्षियों में दूसरे रूप में कहते हैं। वहाँ भी परीक्षा की आवश्यकता नहीं है। उनमें भी विभाव आदि की संभावना होना कारण है। विभाव आदि ज्ञान से शून्य पक्षी भी उस रस के पात्र होने योग्य नहीं होते हैं। ऐसा नहीं कहना चाहिए। उस प्रकार किन्हीं मनुष्यों में भी रस विषय के भाव के अभाव होने का प्रसङ्ग कारण है। क्योंकि विभाव आदि की संभावना रस के प्रति प्रयोजक होता है। न कि विभावादि ज्ञान। अतः दूसरों के भी अनुसार रस होता हैं। उदाहरणार्थ—

हथिनी ने तालाब के कमल के केसर से सुगन्धित जलको शुण्डादण्ड से हाथी के लिए दिया। चक्रवाक ने अपनी स्त्री की संभावना किया कि कमल दण्ड आधा खाया है।

यहाँ गज आलम्बन विभाव से उत्पन्न वसन्त आदि उद्दीयन विभावों द्वारा उद्दीपन सुगन्धित वायु गण्डूष के जलदान से अनुभाव प्रकाशित होता है। हर्ष आदि व्यभिचारी भाव से संयुक्त गज के संभोग श्रृङ्गार की पुष्टि होती है। और रति स्थायी भाव होता हैं। इस प्रकार चक्रवाक का विषय भी द्रष्टव्य है।

भावाभासो यथा—

**अस्मद्विक्रमचेष्टितानि निखिलत्रैलोक्यहेलाजय,**
**प्रह्वीभूतसुरासुराणि भवतो भूमेः सुता शृण्वती ।**
**पत्यौ द्वेषकषायितेन मनसा स्निग्धा मयि स्थास्यति,**
**स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम् ।। २७।।**

अत्र रावणस्यौत्सुक्यमनौचित्येन प्रवृत्तम् ।

रसस्य मुख्यत्वे सत्यपि राजानुगतविवाहप्रवृत्तभृत्यवत् कदाचिदङ्गित्वमनुभवन्ति भावशान्त्यादयः ।। तत्र भावशान्तिर्यथा ।

**पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं,**
**किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।**
**इत्यन्योन्यविलोलदृष्टिचतुरे तस्मिन्नवस्थान्तरे,**
**सव्याजं हसितं मया धृतिहरो वाष्पस्तु मुक्तस्तया ।।२८।।**

---

भावाभासस्योदाहरणम् —

अस्मत् पराक्रमचेष्टितानि सम्पूर्णत्रैलोक्यहेलाजयनम्रीभूतदेवासुराणि भवतः सीता शृण्वती पत्यौ विद्वेषेन मनसा स्निग्धा मयि स्थास्यति ? स्त्रीणां प्रेमोत्तरोत्तर-गुणसमूहस्य स्पृहया चञ्चलम् ।

अत्र रावणस्योत्सुकता नानुकूल्येन प्रवर्तिता । रसस्य प्राधान्ये सत्यपि राजानुगत-विवाहप्रवृत्तदासवत् । ज्ञातुचिदङ्गित्वमनुभवन्ति भावशान्त्यादयः । तत्र भावशान्ति-रुदाह्रियते —

पश्यामः किमियं निष्पद्यते । इत्यवधार्य स्थिरत्वं धृतम् । खलु मां नालपति । तयापि क्रोध आश्रितः । इत्यन्योन्यचञ्चलनयनेन ज्ञाते दाक्षिण्ये तदवस्थायां व्याजेन सह मया हसितम् । धैर्यं हारितम् । तया तु विमोचितान्यश्रूणि ।

---

भावाभासको उदाहरण—हमारे पराक्रम की चेष्टित सम्पूर्ण तीनों लोकों से सम्बद्ध खेलवाड़ में जय की गई नम्र देव एवं राक्षस आप की पृथ्वी पुत्री अर्थात् सीता जी सुनती हुई पति में द्वेष से रंगे मन से स्निग्ध होती मुझमें स्थित होंगी ? स्त्रियों का प्रेम है; जो उत्तरोत्तर गुण समूह की स्पृहा से चञ्चल होता है ।

यहाँ रावण की उत्सुकता अनुचितता से प्रवृत्त है । रस मुख्य हौने पर भी राजा विवाह में प्रवृत्त भृत्य के सदृश अर्थात् पीछे हो कभी अङ्गित्व का अनुभव करते हुए भाव शान्ति आदि भी होते हैं । भाव शान्ति का उदाहरण—

हम देखते हैं क्या यह निष्पादित है ? ऐसा धैर्य मेरे द्वारा रखा गया । निश्चय ही यह दुष्ट मुझ से बात नहीं करता है । उस स्त्री द्वारा भी क्रोध का आश्रयण किया गया । इस प्रकार एक दूसरे के चञ्चल नेत्र होने की चतुरता में उस अवस्था के मध्य बहाने के साथ मेरे द्वारा हंसा गया । धैर्य खो गया । उसके द्वारा तो आंसू बहाया गया ।

अत्रेर्ष्याकृतस्य नायिकायाः कोपस्य शान्तिः । विशिष्टस्यापि कोपस्य कोपत्वानवगमात् । भावोदयो यथा ।

**तदद्य विश्रम्य दयालुरेधिमे, दिनं निनीषामि भवद्विलोकिनी ।**
**अदर्शि पादेन विलिख्य पत्रिणा, तवैव रूपेण समः स मत्प्रियः ॥२९॥**

अत्र नलं प्रति दमयन्त्या औत्सुक्यरूपस्य भावस्योदयः । विरुद्धयोर्भावयोः परस्परस्पर्धिभावेनोपनिबद्धो भावसन्धिः । यथा ।

**अर्धे चेतसि जानकी न विरमत्यर्धे च लङ्केश्वरः,**
**किं चार्धं विरहानलः कवलयत्यर्धं च रोषानलः ।**
**इत्थं दुर्विधवैशसव्यतिकराद्दाहे समेऽप्यर्धयो,**
**रेकं वेद्मि तुषाग्नि दग्धमपरं दग्धं करीषाग्निना ॥३०॥**

---

इहेर्ष्यया नायिकायाः क्रोधस्य शान्तिः । विशिष्टस्यापि क्रोधस्य क्रोधत्वं न ज्ञातम् । भावोदयस्योदाहरणम् —

भव मे दयालुः विश्रामं कृत्वाद्य भवदवलोकिनी सती दिवसं नेतुमिच्छामि । पादेन लिखित्वा भवत्रूपेण सदृशः स मत्प्रियः ।

इह नलं प्रति दमयन्त्याः औत्सुक्यरूपस्य भावस्योदयः । द्वयोर्भावयोर्विरुद्धयोः स्पर्धाभावेनोपनिबद्धो भावसन्धिः । यथा—

अर्द्धे चेतसि सीता न विरमत्यर्धे च रावणः । किं चार्द्धं विरहाग्निः । क्रोधाग्निः कवलयति । अहो दुर्भाग्योऽयम् । विघ्नसहितेनाग्निना सदृशमेकं द्वयोः जानामि । एकं तुषाग्निना दग्धं करीषाग्निना चापरं दग्धम् ।

---

यहाँ ईर्ष्या द्वारा नायिका के क्रोध की शान्ति है । विशिष्ट क्रोध के भी क्रोधत्व होने से न जानना कारण है । भावोदय का उदाहरण—

तब आज विश्राम करके मुझ में दयालु हो । आपको देखने वाली होकर दिन व्यतीत करने की इच्छा है । पैर से पृथ्वी पर लिख कर चित्र बनाकर आप के रूप से मिलता वह मेरा प्रिय है, ऐसा देखा ।

यहाँ नल के प्रति दमयन्ती की उत्सुकता रूप भाव का उदय है । दो विरुद्ध-भावों के परंस्पर स्पर्धाभाव से उपनिबद्ध भाव सन्धि है । उदाहरणार्थं—

आधे चित्र में सीता जी नहीं विराम करती हैं । आधे में रावण । और क्या आधा विरहाग्नि है । आधा क्रोध की अग्नि भक्षण करती हैं । इस प्रकार दुर्भाग्य है । विघ्न सहित अग्नि के समान भी दोनों में से एक को जानता हूँ । भूसी की अग्नि से जली है । दूसरी कण्डे की अग्नि से जली है ।

अत्र रतिक्रोधयोः सन्धिश्चर्वणास्पदम् ॥

बहूनां भावानां पूर्वपूर्वोपमर्देनोपनिबद्धो भावशाबल्यम्। यथा।

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा,
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा-
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥३१॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता विश्रान्तिधाम ॥

संलक्ष्यक्रमव्यङ्ग्यस्तु त्रिधा। शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणन रूपव्यङ्ग्य उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति। तत्राद्यस्तावदलङ्कारस्य वस्तुनो वा व्यज्यमानत्वेन भवन् प्रथमं द्विधा भवति। द्विविधोऽपि पदवाक्यप्रकाश्यः स्यादिति चतुर्विधः क्रमेण यथा—

---

इह तु रतिक्रोधयोः सन्धिः। बहूनां भावानां पूर्वपूर्वोपमर्देनोपनिबद्धा भावशबलता। उदाहरणार्थम्—अहो! अनुचितोऽयं व्यवहारः यन्मया मुनिकन्या प्रति प्रेम कृतम्। अहो! चन्द्रवंशस्य लज्जा रक्षणीया एकवारं यदि सा पुनरपि दृश्येत। नहि नहि प्रमादीऽयं कथं एहि। मम शास्त्रज्ञानम्। दूरीकरु भावानिमान्। अहो कथं सुन्दरं मुखं कोपे त्वतिसुन्दरम्। कथं नोचितम्। किं कथयिष्यन्ति मां सुजनाः। अहो स्वप्नेऽपि तस्याः सङ्गमो न भविष्यति। मे मनः। ईदृशी दशा। ते किम्, धैर्यं धारय। कः युवा धन्योऽस्ति यः खलु तस्याः अधरपानं करिष्यति।

इह वितर्कौत्सुकतामतिस्मरणशङ्कादीनताधैर्यचिन्तानां भावशाबल्यम्। संलक्ष्यक्रमव्यङ्ग्यस्त्रिधा। शब्दशक्तिमूलानुरणनरूपोऽर्थशक्तिमूलानुरणनरूप उभयशक्तिमूलानुरणनरूपो व्यङ्ग्यश्च। शब्दशक्तिमूलानुरणनरूपो व्यङ्ग्योऽलङ्कारस्य वस्तुनो वा द्विविधः। अनयोर्द्वयोः पदवाक्यप्रकाश्यगतत्वेन स्याच्चतुर्विधः। क्रमेणोदाहरणानि—

---

यहाँ रति और क्रोध की सन्धि है। बहुत से भावों के पूर्व पूर्व के उपमर्दन से उपनिबद्ध भावशबलता है। जैसे—

"अरे! मुनि कन्या से प्रेम करने का मेरा यह अनुचित व्यवहार! ओह चन्द्र वंश की लाज बचानी है। एक बार यदि कहीं वह प्यारी (उर्वशी) दीख जाती। नहीं नहीं यह प्रमाद कैसा? आओ। मेरे शास्त्रज्ञान! दूर करो इन भावों को। ओह उसका मुख कितना सुन्दर था। कोप में तो और भी सुन्दर। यह क्या? यह ठीक नहीं। भले लोग मुझे क्या कहेंगे। अरे! अब तो सपने में भी उसका सङ्गम नहीं हो पायेगा। मेरे मन। ऐसी तेरी दशा क्यों? संभाल अपने को। ओह अब पता नहीं, उसके अधरपान का सौभाग्य किसे लिखा है।

इसमें वितर्क, औत्सुक्य, मति, स्मरण, शङ्का, दीनता, धैर्य और चिन्ता की भावशबलता है। संलक्ष्यक्रमव्यङ्ग्य तो तीन प्रकार का है? १-शब्द शक्तिमूलानुरणनरूप व्यङ्ग्य, २-अर्थशक्तिमूलानुरणनरूपव्यङ्ग्य तथा ३ उभय अर्थात् शब्दार्थशक्तिमूलानुरणनरूपव्यङ्ग्य। शब्दशक्तिमूलानुरणनरूप व्यङ्ग्य वस्तु एवं अलंकार के कारण दो प्रकार का होता है और इन दोनों के भेद पद एवं वाक्य प्रकाश्यगत चार प्रकार के होते हैं। क्रम से उदाहरण—

**नरसिंह धरापालके वयं तव वर्णने ।**
**अपि राजानमाक्रम्य यशो यस्य विज्जृम्भते ॥३२॥**

अत्र राजपदेनेन्दोर्षियस्य प्रस्तुतत्वे विषयिणो नृपस्याक्रमणादिप्रक्रतोपयोगिनः प्राधान्येन प्रतीतेः परिणामो व्यज्यते ।

**आक्रम्यस्मरवैरिशेखरसरित्पूरैर्कसिंहासनं राजानं नरसिंहपार्थिव तथाहंकारभारोद्धुरः ।**
**त्वत्कीर्तिप्रसरो हसत्ययमसौ शक्रस्य दन्तावलं, व्यालेन्द्रं मुसलायुधं किमपरं देव्याश्च पञ्चाननम् ॥३३॥**

इह करकलितमुसलतया भगवतः सीरपाणेः समरधुरन्धरत्वरूपं वस्तु मुसलायुध-पदेन व्यज्यते ।

**हिरण्यकशिपुक्षेत्रदानदर्शितविस्मयः । न कस्य श्लाघनीयोऽसिनरसिंह-जगत्पते ॥३४॥**

---

हे नरसिंह नरेश ! पृथ्वीपाल ! त्वां वर्णयितुं वयं न समर्थाः । भवतो यशश्शत्रुनतिक्रम्य सर्वत्र प्रसरति ।

इह राजपदेन चन्द्रविषयस्य प्रस्तुते विषयिणो नृपस्याक्रमणादिप्रक्रतोपयोगिनः प्रधानतया प्रतीतेः परिणामोऽभिव्यक्तः ।

कामदेवरिपोः शिवस्य मस्तके गङ्गाप्रवाहेण सिंहासनमतिक्रम्य नरसिंहनृपालः शोभते तथाविधमहंकारभारमुद्वहन् । यशोराशिः हसति अर्थात् सर्वोत्कृष्टं ते यशः । इन्द्रस्यगजः शेषः बलरामः पार्वत्याः सिंहः नरसिंहयशोऽस्ति सर्वम् ।

अत्र करे शोभितमुसलत्वेन भगवताबलरामेण सदृशः राजा रणक्षेत्रे वीरत्वे वस्तुनि मुसलायुधपदेनाभिव्यक्तः ।

हे नरसिंह नरेश ! कस्य न प्रशंसाविषयो भवान् । नरसिंहो दानविषये नृसिंह इव दर्शितविस्मयः ।

---

हे नरसिंह नरेश ! तुम्हारे वर्णन में हम समर्थ नहीं हैं । शत्रु राजाओं को आक्रमित करके भी जिसका यश फैल रहा है ।

यहाँ राजा पद से चन्द्र विषय के प्रस्तुत होने पर विषयी राजा के आक्रमण आदि प्रकृत में उपयोगी की प्रधानता से प्रतीति का परिणाम अभिव्यक्त है ।

कामदेव के शत्रु अर्थात् शिवजी के मस्तक पर गङ्गा की लहर से सिंहासन आक्रमित कर राजा नरसिंह नरेश उस प्रकार के अहंकार के भार को ढोते हुए तुम्हसे यश का यह प्रसार हँसता है । अर्थात् नरसिंह का यश अत्यत्त उत्कृष्ट है । इन्द्र की हाथी ऐरावत, शेषनाग, बलराम और देवी का सिंह क्या दूसरे हैं ? अर्थात् सभी नरसिंह का यश ही है ।

यहाँ कर के सुशोभित मुसलत्व से भगवान बलराम के समान रणक्षेत्र में धुरन्धरत्व (वीरत्व) रूप को वस्तु में मुसल आयुध पद से अभिव्यक्त है ।

हे नरसिंह राजन् ! किसके प्रशंसा के पात्र तुम नहीं हो । नरसिंह, राजा के क्षेत्र में दान के विषय में आश्चर्य प्रदर्शित है ।

अत्र राजनि प्राकरणिकत्वेनाभिधाया नियन्त्रित्वादप्राकरणिकनृसिंहलक्षणद्वितीयार्थाभिधाने कुतः शक्तिः सकृदुच्चारितस्य शब्दस्यैकार्थाभिधान एव सामर्थ्यं न द्वितीयार्थाभिधाने । अथानेकार्थोऽयं शब्दस्तावन्न विरमति यावन्न द्वितीयमर्थमभिधत्त इति चेन्न । अनेकार्थस्य शब्दस्यैवाभावात् । यत् पुनरेकस्यैव शब्दस्यानेकार्थत्वमिव क्वचन प्रतीतिसरणिमनुसरति स महिमासादृश्यनिबन्धनस्य भ्रमस्य । ततोऽस्य वाक्यस्यासंम्बन्धार्थाभिधायकत्वमेव प्रसक्तम् । अतो निष्फल एवायं शिष्टशब्दान्वेषणप्रयासः कवेरिति यदभिधीयते तदमीमांसितरमणीयम् । नरसिंह इव नरसिंह इत्युपमाया वाक्येन प्रतीयमानत्वात् । यथा वा —

---

अत्र नरसिंहे प्राकरणिकत्वेनाभिधायाः नियन्त्रित्वादप्राकरणिकनरसिंहस्य द्वितीयार्थस्याभिधानं कुतः ? एकवारमुच्चरितस्य शब्दस्यैकस्यार्थस्याभिधानम् । द्वितीयार्थस्याभिधाने समर्थता न भवति । अनेकार्थोऽयं शब्दः । तावन्न विश्रान्तिः यावदन्यस्यार्थस्याभिधानं न भवति । कथनमत्र नोचितम् । अनेकार्थस्य शब्दस्यैवाभावात् । यदा पुनरेकस्यैव शब्दस्यानेकार्थत्वमिव कुत्रापि प्रतीतिसरणिमनुसरति, तदा स महिमासादृश्यनिबन्धनस्य भ्रमस्य । तदनन्तरमस्य वाक्यस्यासम्बद्धार्थस्याभिधाने समर्थता । अत एव कवेरयं शब्दान्वेषणप्रयास एव निष्फलः । यदि कथयेत्, तदप्यरमणीयम् । नरसिंह इव नरसिंहः । इत्युपमावाक्येन प्रतीयते । तत्कारणात् । यथा वा—

---

यहाँ राजा नरसिंह में प्राकरणिकत्व से अभिधा के नियन्त्रित होने के कारण अप्राकारणिक नरसिंह के लक्षण में द्वितीय अर्थ के अभिधान होने में कहाँ से समर्थता है ? एक बार उच्चारण होने वाले शब्द के एक अर्थ का ही अभिधान है । दूसरे अर्थ का अभिधान नहीं होता है । ऐसा कहना उचित नहीं । अनेकार्थ शब्द का ही अभाव कारण है । अब पुनः एक ही शब्द के अनेक अर्थत्व के समान कहीं प्रतीति की सरणि का अनुसरण होता है, तब वह महत्ता के सादृश्य निबन्धित भ्रम का कारण होता है । इसके बाद इस वाक्य का असम्बन्ध अर्थ के अभिधान में ही सामर्थ्य है । अतएव कवि का यह शब्दान्वेषण प्रयास ही फल रहित है । ऐसा यदि कहा जाय तो यह सुन्दर नहीं है । नरसिंह के समान नरसिंह हैं । इस उपमा वाक्य से प्रतीति होने से स्पष्ट होता हैं । उदाहरणार्थ —

---

The first type of predominant suggestion is ( śabdaśaktimūl Dhvani ) and the second type of it is that suggestion, where the succession of the suggested meaning after the connoted is clearly discernible. This is called ( Arthśaktimūldhvani ), The third type of predominant suggestion is ( śabdārthaśaktimūldhvani ).

गौड़गुर्जरकर्णाटलाटमालवसेवणः । नरसिंहनृपे दृष्ठे भवन्ति करहाटकाः ॥३५

अपि प्रभृतेर्विरोधाभिधायिनः शब्दस्यात्राभावाच्छब्दशक्त्यैव विरोधो वाक्येन व्यज्यते। यद्यप्ययं क्वचन वाक्यार्थे पुरालङ्कारभावमुपमादिरूपतयानुभवन्नासीत् सम्प्रति पुनरलङ्कार्यतामवलम्बते तथापि प्रत्यभिज्ञानबलादलङ्कारदशापरित्यागेऽप्य-लङ्कारध्वनिरित्यभिधीयते ब्राह्मणश्रमणन्यायेन। तद्रूपाभावेन तूपलक्षितं वस्तुमात्र-मुच्यते। मात्रग्रहणमिह रूपान्तरनिराकरणाय। तत्तु यथा—

सत्व सागरनृसिंह भूपते, तावकैरलममीभिराशुगैः।
वैरिणामसव एव यद्भवन्त्याशुगाः कलितकार्मुके त्वयि ॥३६॥

---

नरसिंहनरेशे दृष्टे गौड़गुर्जरकर्णाटलाटमालवप्रदेशानां राजानः वशीभूत्वा स्वर्णो-पहारं कररूपेण ददति।

यदि विरोधः कथ्यते तर्हि वयमत्रापि विरोधवाचकशब्दस्याभावेन शब्दशक्तिद्वारे-णैव विरोधरूपमर्थं वाक्येनानुभवामः। यद्यप्ययं क्वचन वाक्यार्थे पूर्वमलङ्कारभावोप-मादिरूपेण ज्ञातः किन्तु पुनरिदानीमलङ्कारो न प्रत्युतालङ्काररूपत्वमालम्बते। तदपि प्रत्यभिज्ञानबलेनालङ्कारदशां त्यजन्नपि कथ्यतेऽलङ्कारध्वनिः। ब्राह्मणश्रमणन्यायेन। यद्यलङ्कारध्वनिर्नास्ति तदोपलक्षितवस्तुमात्रध्वनिः। मात्र ग्रहणेनात्रान्यरूपस्य निरा-करणायाभिधीयते। तद्यथा—

पराक्रमे सिन्धुरिव महान् नरसिंह नरेश तवामी तीव्रवाणाः शत्रूनरेशाणां प्राणान् ग्रह्णन् कार्मुकञ्चापुः।

---

नरसिंह राजा के देख लेने पर गौड़, गुर्जर, कर्णाट, लाट; मालव आदि देशों के राजा हाथ में स्वर्ण का उपहार देते हैं।

यदि विरोध को कहें तो हमें यहाँ 'अपि' आदि विरोध वाचक शब्द के यहाँ अभाव होने से शब्द शक्ति द्वारा ही विरोध रूप अर्थ वाक्य से स्पष्ट प्रतीत होता है। यद्यपि यह कहीं कहीं वाक्यार्थ में पहले अलङ्कारभाव उपमा आदि रूप से ज्ञात होता था, परन्तु पुनः अब अलङ्कार नहीं प्रत्युत अलङ्कार रूपता का ही आलंबन करता है। तो भी प्रत्यभिज्ञान बल से अलङ्कार दशा के त्याग करने पर भी अल-ङ्कार ध्वनि यह कही जाती है। यह ब्राह्मण श्रमण न्याय से कहाता है। यदि अल-ङ्कार ध्वनि भी न हो तो उपलक्षित वस्तु मात्र ध्वनि कही जायगी। 'मात्र' ग्रहण यहाँ दूसरे रूप के निराकरण के लिए कहा गया है। जैसे वह पराक्रम में सागर सदृश महान् नरसिंह राजन्! तुम्हारे ये तेज बाण पर्याप्त हैं। शत्रुओं के प्राण ही तेज वाण से जहाँ तेज चलने वाले हैं। अर्थात् प्राण चले जाते हैं और तुम्हारे सुन्दर कार्मुक में प्रविष्ट हो जाते हैं।

अत्र तव धनुर्धरमात्रेणैव समरप्राङ्गणेषु सत्वरमेव भवन्ति गत्वराः परिपन्थिनां प्राणा इति वस्तु शब्दशक्तिमहिम्नैव वाक्येन व्यज्यते ।

अर्थशक्तिमूलानुरणनरूव्यङ्ग्ये त्वर्थस्य स्वतः सम्भवी कविप्रौढोक्तिमात्रनिष्पन्नशरीरः कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरश्चेति त्रयो भेदाः । तेषु त्रिष्वपि भेदेषु वस्तुना वस्त्वलङ्कारो वालङ्कारेणापि वस्त्वङ्कारो वा व्यज्यत इति चतुष्प्रकारतयास्यार्थशक्तिमूलस्य ध्वनेर्द्वादश प्रकाराः संभवन्ति । एते च पदवाक्यप्रवन्धप्रकाश्यतया प्रत्येकं त्रिधा भवन्तः षट्त्रिंशद् भवन्ति ।

---

अत्र तव धनुर्धरमात्रेणैव शत्रूणां प्राणा गत्वरा युद्धस्थले इति वस्तु शब्दशक्तिमहिम्नेव वाक्येनाभिव्यज्यते ।

अर्थशक्तिमूलानुरणनरूपस्याऽर्थस्य स्वतः संभवी कविप्रौढोक्तिमात्रनिष्पन्नशरीरः कविनिवद्धवक्तृप्रौढौक्तिमात्रनिष्पन्नशरीरश्च त्रयो भेदाः । तेषु भेदेषु वस्तुना वस्त्वलङ्कारो वालङ्कारेणापि वस्त्वलङ्कारो वाभिव्यज्यते । चतुर्भिः प्रकारैः अस्यार्थशक्तिमूलस्य ध्वनेर्द्वादशभेदाः भवन्ति । पदवाक्यप्रवन्धगतभेदेन तेषां गुणनेन षट्त्रिंशद् भवन्ति ।

---

यहाँ तुम्हारे धनुर्धर मात्र होने से ही रणाङ्गण में शत्रुओं के प्राण शीघ्र ही निकल जाते हैं । यह वस्तु शब्द शक्ति की महिमा से ही वाक्य द्वारा व्यञ्जित होता है । अर्थशक्तिमूलानुरणनरूप व्यङ्ग्य में तो अर्थ के स्वतः संभवी; कवि प्रौढोक्तिमात्रनिष्पन्नशरीर, कवि निबद्धवक्तृप्रौढोक्तिमात्र निष्पन्न शरीर तीन प्रकार के होते हैं । उन तीनों के भेदों में भी वस्तु से वस्तु, वस्तु से अलंकार, अलंकार से वस्तु, अलंकार से अलंकार चार के गुणन से बारह प्रकार की अर्थ शक्तिमूलध्वनियाँ होगी और ये पद वाक्य तथा प्रबन्ध गत तीनों के गुणन से ३६ (छत्तीस) हैं ।

---

(Arthśaktimūl Dhvani) can be subdivided into three classes, namely (Self motivative), ( Kavipraudhoktisidhi ) and (Kavinibadhvaktripraudhoktisidhi ), of which the sense is 1–The connoted meaning by its nature leads to suggested meaning 2–Where a connoted meaning leads to a suggested meaning on account of the poet's dexterity in the selection of the words and their setting

एकावयवगतेन भूषणेन कामिनीव पदप्रकाश्येनापि व्यङ्ग्येन भारती भवति चमत्काराय सहृदयानाम् । तत्र प्रकाश्यत्वेनोदाह्रियन्ते ।

---

एकावयवेऽलङ्कारेण युवतीव पदप्रकाश्येनापि व्यङ्ग्ये वाणी भवति चमत्काराय सहृदयानाम् । पदप्रकाश्यस्योदाहरणमत्र –

---

एक अङ्ग में आभूषण होने से कामिनी के समान पद प्रकाश्य से भी व्यङ्ग्य वाणी सहृदय जन को चमत्कारी होती है। पद प्रकाश्य के उदाहरण दिये जाते हैं।

---

in a syntactical pattern and 3–Where the poet creates a character whose clever speech consisting of dexterity in the selection of words and their setting in a peculiar syntactical pattern leads to a suggcsted meaning, Each of these classes can be further sub-divided into four sub-classes, thus making the mumber of these, twelve. These are the cases of a statement leading to a suggested meaning or to a suggested figure speech and a figure speech leading either to another suggested figure speech or to suggested. These twelve kinds of suggestion give rise to thirty six sub-classes occurring either of a word, in a sentence, or a group of words in the sentence, or because of the nature of the entire composition. Even a single suggestive word lends a peculiar charm to the entire composition, as does a single ornament to a woman wearing it at the proper place. One can imagine how greatly charming a compostion can be, if a group of words were snggestive.

This discussion too does not mark any departure from the detailed discussion of this topic in the (Kāvyaprakāś). Of course the credit of making this discussion more comprehensible and attractive goes to Vidyādhara who has added a peculiar charm to a tedious analysis by presenting his own examples, in which his poetic power and profusion of imagintive faculty are noteworthy,

नृसिंह वसुधाधिप त्वयि रणोन्मुखे धावतः,
प्रतीपपृथ्वीपतेः पथि पथि प्रदीप्तक्षुधः।
चिरादगुरवन्ध्यतां दुरवगाहविन्ध्याटवी,
पलाशिविटपाञ्चलाहृतफलार्पणेन द्विपाः ॥३७॥

अत्रावन्ध्यतामगुरित्यादिना वस्तुना गजगतयुद्धवन्ध्यत्वरूपं वस्तु चिरादिति पदेन व्यज्यते।

नृसिंह क्ष्मापाल त्रिदशतटिनीवीचितुलिते,
यशः पूरे दूरात्तव जगदिदं पूरितवति।
समुन्मीलत्कालागरुबहुलधूमप्रणयिनी,
स्तमस्तोमस्ताम्यन् विशति कवरीः पक्ष्मलदृशाम् ॥३८॥

अत्र प्रवेशनादिरूपेण वस्तुना त्वद्यशोधवलिते जगति पक्ष्मलदृशां कवरीष्वेव श्यामिकेति परिसंख्यालङ्कारः कवरीपदेन व्यज्यते।

---

हे नरसिंह नरेश ! त्वयि रणक्षेत्रे गते सति प्रतिकूलो यतो राजा स यत्र तत्र धावनशीलः संजातः। अतः मार्गे प्रदीप्ता बुभुक्षा तस्य राज्ञः, तदनु तस्य हस्तिनः विन्ध्याटवीस्थितवृक्षाणां फलपातनेन चिरादबन्ध्यतां प्रापुः।

इहावन्ध्यतामगुरित्यादिपदेन वस्तुगतगजततयुद्धवन्ध्यत्वंरूपं वस्तु चिरादिति पदेन द्योत्यते। हे नरसिंह राजन् ! तव यशो दूरादेव गङ्गातरङ्गसदृशं जगति परिपूर्णम्। अन्धकारसमूहः चलन् कालागरुभूयस्त्वजनित धूम इव सुन्दरीणांकेशेषु प्रविशति।

अत्र प्रवेशादिरूपेण वस्तुना त्वत्कीर्तिस्वच्छे जगति विलोलनयनयुक्तांनां सुन्दरीणां केशेषु श्यामिकेति परिसंख्यालङ्कारः कवरीपदेन द्योत्यते।

---

हे नरसिंह नरेश ! आप के रणोन्मुख दौड़ते हुए शत्रु राजाओं को रास्ते में भूख लगी। प्रवेश करने में कठिन दूर तक गहन विन्ध्याचल पर्वत के वृक्षों की डालीरूपी अञ्चल से तोड़े फल के अर्पण करने के द्वारा हाथी बहुत सफलता को प्राप्त हुए।

यहाँ 'अबन्ध्यतामगुः' आदि से वस्तुगतगजगतयुद्धवन्ध्यत्बरूपवस्तुचिराद् इस पद से व्यञ्जित होता है।

हे नरसिंह नरेश ! तुम्हारे दूर से ही गंगा जी के तरंग के सदृश यश समूह जगत में पूर्ण होने से मृगनयनी के केश में अन्धकार का समूह चलता हुआ उड़े हुए काला अगरु के अधिक धुएँ के सदृश केशों में प्रवेश करता है।

यहाँ प्रवेशादि रूप वस्तु से तुम्हारे यश का धवलत्व संसार में चञ्चल दृष्टिवाली के केश में 'श्यामिका' इतने में परिसंख्यालङ्कार है। कवरी पद से यह व्यञ्जित होता है।

समरवसुन्धरासु नरसिंह धराधिपते, रिपुनृपमौलिनीलमणयस्तव पादयुगे ।
सरसविकस्वरारुणसरोरुहलोभलगन्मधुकरमण्डलीललितडम्बरमादधते ॥३९॥

अत्र निदर्शनालङ्कारेण रणक्षोणीषु क्षणमपि तव चरणप्रणामाद्विरमन्ति न त्राणार्थिनः प्रत्यर्थिन इति वस्तु लगदिति पदेन व्यज्यते ।

पूर्वं पयोधेरुदरे स्थितासि, ततः सुधे त्वं हृदये सुधांशोः ।
मुखे कलिङ्गाधिपतेरिदानीं यथोत्तरं धाम तवाभिरामम् ॥४०॥

अत्र पर्यायालङ्कारेण वाक्सुधयोर्भेदेऽप्यभेद इत्येवं रूपातिशयोक्तिर्मुख इति पदेन व्यज्यते । एषूदाहरणेषु स्वतः संभविनोऽर्थस्य व्यञ्जकत्वम् ।

---

हे नरसिंह नरेश ! रणक्षेत्रे शत्रुनरेशाणां ललाटस्थितनीलमणयः तव चरणयुगलं निपतन्ति प्रणमन्ति च : सरसारुणविकसितकमलस्य लोभेन भ्रमरसमूहः शोभते ।

इह निदर्शनालङ्कारेण रणस्थले क्षणमपि ते चरणयुगलं प्रणामान्न विरमति त्राणकामनया शत्रुगणः इति वस्तु लगदिति पदेनाभिधीयते ।

सुधा पूर्वं समुद्रमध्ये स्थिता । तदनन्तरं चन्द्रस्य हृदये वसति स्म । सम्प्रति नरसिंहनरेशस्य मुखे तव सुवासोऽस्ति । क्रमोऽयं सुन्दरेणाजस्रं चलति ।

इह तु पर्यायालङ्कारेण वाक्सुधयोर्भेदेऽपि भिन्नता नास्ति । एवं रूपातिशयोक्ति-मुखपदेनाभिधीयतेऽभिव्यज्यते । एषूदाहरणेषु स्वतः संभविनोऽर्थस्याभिव्यञ्जकत्वम् ।

---

हे नरसिंह नरेश ! रण क्षेत्रो में शत्रु राजाओं के ललाट की नीलमणियाँ तुम्हारे दोनों चरण में पड़ती हैं । सरस एवं खिले लाल कमल की लालच से लगे मानो भौंरों का समूह शोभित हो रहा है ।

यहाँ निदर्शना अलंकार द्वारा रणक्षेत्रों में क्षण भर भी तुम्हारे चरण प्रणाम से विश्राम नहीं लेते हैं । त्राण की कामना करने वाले शत्रु गण इस वस्तु लगने के पद से यह व्यञ्जित है ।

सुधा ( अमृत ) ! पहले समुद्र के मध्य में स्थित रहे हो । तदनन्तर तुम चन्द्रमा के हृदय में रहे हो । इस समय नरसिंह राजा के मुख में तुम्हारा सुन्दर वास है । यह क्रम सुन्दर रूप से चल रहा है । इसमें पर्याय अलंकार द्वारा वाक्सुधा में भेद होने पर भी अभिन्नता है । इस प्रकार के रूपातिशयोक्ति मुख इस पद से व्यञ्जित होतो है । इन उदाहरणों में स्वतः संभवी अर्थ की व्यञ्जना है ।

---

Of these the most remarkable are the followings. 'O nectar ! you previously resided inside the Ocean; (in its stomach); then in the heart of the moon and now you reside in the mouth of the king of kalinga and each step in the course of your journey has increasingly added to your beauty." Here the figure of (Paryāya) leads to a suggested figure of speech called hyperbole,

हेमाद्रेः कन्दरायां रतिरमणरणाटोपविच्छन्नहार,
व्यस्तं मुक्ताफलानां तमसि तत इतः स्तोममन्वेषयन्त्याः ।
कस्याश्चित् स्वस्तरुण्या निकटगतनिजप्राणनाथोपगीता,
कीर्तिज्योत्स्ना त्वदीया क्षणमकृत मुदं श्रीनृसिंहक्षितीन्द्र ॥४१॥

अत्र वस्तुना तमस्यपि प्रकाशं कृतवती भवतः कीर्तिरिति वस्तु मुदमिति पदेन प्रकाश्यते ।

अम्भोजभूचन्द्रकलावतंस, कंसद्विषः कुत्र पदं लभन्ताम् ।
यशश्रियस्ते महिमा समन्ताद् व्याप्नोत्ययं वीर नृसिंह देव ॥४२॥

अत्र वस्तुना त्वद्यशोधवलिते जगति पुण्डरीकप्रभृतयो न शक्यन्ते विभावयितुमिति महिमेति पदेन सामान्यालङ्कारः प्रकाश्यते ॥

---

हे नरसिंहनरेश ! हिमाचलकन्दरायां रतिरमणविच्छिन्नहारेभ्यस्त्रुटितमुक्ता अन्धकारेऽन्वेषयन्त्याः कस्याश्चित् स्वतरुण्याः समीपगतनिजनाथेन सहोपगीतायाः कीर्तिः सा चन्द्रिका क्षणमपि मोदं कृतवती ।

इह वस्तुनान्धकारमपि प्रकाशयन्ती तव कीर्तिः मुदमिति पदेन द्योत्यते । हे वीर नरसिंह ! पद्मभूचन्द्रकिरणसमूहे विद्वेषिणः कुत्र स्थानं लभन्ताम् । इदं ते यशः । कीर्तिश्च सर्वत्र व्याप्ता ।

अत्र वस्तुना त्वद् यशसा प्रकाशिते संसारे कमलादिपदार्थाः विभावनां सम्पादयितुं न शक्नुवन्ति । महिमापदेन सामान्यालङ्कारो लक्षितः ।

---

हे नरसिंह नरेश ! हिमालय की कन्दरा में रति में रमण करनेवाले रण में विच्छिन्न हार होने से मोंतियों के फलों को अन्धकार में अन्वेषण करती हुई किसी स्त्री के निकट अपने पति के साथ गाई जाती हुई तुम्हारी कीर्ति का प्रकाश क्षण भर के लिए प्रसन्न कर दिया ।

इसमें वस्तु द्वारा अन्धकार को भी प्रकाशित करनेवाली तुम्हारी कीर्ति इस वस्तु (मुद) पद से उपलक्षित होता है ।

हे वीर नरसिंह ! पृथ्वी कमल को विकसित करने में चन्द्रमा की किरणों के समूहों में श्रेष्ठ तुमसे द्वेषी कहाँ स्थान पावें । यह तुम्हारा ऐश्वर्य है, जो चारो ओर व्याप्त हो रहा है ।

इसमें वस्तुद्वारा तुम्हारे यश से प्रकाशित संसार में कमल आदि विभावना करने के लिए समर्थ नहीं होते हैं । महिमा पद से सामान्य अलङ्कार परिलक्षित होता है ।

तनौ दत्त्वा पाकोन्मुखशरसखीं कामपि रुचिं,
रिपुस्त्रीभ्यस्तासां कलयसि कलिङ्गक्षितिपते।
प्रभां ताटङ्कानां श्रवणकुसुमानां विलसितं,
स्मितानामालोकं स्तनमलयजानां श्रियमपि ।।४३।।

अत्र परिवृत्यलङ्कारेण त्वत्पलायितारितरुणीतनौ विरहपाण्डिमा समुज्जृम्भत इति वस्तु पाकोन्मुखशरसखीमिति पदेन प्रकाश्यते।

त्वत्खङ्गधारा समरे पतन्ती, मूर्ध्नि द्विषां वीरनृसिंह देव।
विलोक्यतां क्षालयति क्षणेन, तदङ्गनानां स्तनपत्रभङ्गान् ।।४४।।

अत्रासङ्गत्यलङ्कारेण नवजलधाराविलक्षणेयं तव करवालधारेतिव्यतिरेकालङ्कारो विलोक्यतामिति पदेन प्रकाश्यते। एषु कविप्रौढ़ोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य व्यञ्जकत्वम्।

---

हे नरसिंह नरेश ! इन्द्रवाणसदृशी याकान्तिः तां शत्रुस्त्रीभ्यः दत्त्वा त्वमनिर्वचनीयत्वेन क्रीडसि। स्त्रीणां कर्णाभरणताटङ्कानां प्रभा प्रकाशिता। तासां स्मितानां प्रकाशःस्तनचन्दनशोभा च ततो वर्द्धितोऽभूत्। अत्र परिवृत्यलङ्कारेण त्वत्पलायितयुवतितनौ विरहपाण्डुता। इति वस्तु पाकोन्मुखशरसखीमिति पदेनाभिव्यज्यते।

हे वीरनरसिंहदेव ! समरे शत्रवः तव खड्गधारया पतन्ति। कः सपत्नीनां स्तनपत्रभङ्गान् क्षणे जलधारया प्रक्षालितवान्। आलोक्यताम्।

इहासङ्गत्यलङ्कारेण नूतनजलधारविलक्षणेयं तव खड्गधारेतिव्यतिरेकालङ्कारो विलोक्यतामिति पदेन द्योत्यते। एषु कविप्रौढ़ोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य व्यञ्जकत्वम् ।।

---

हे नरसिंह नरेश ! इन्द्र के वाण के सदृश शत्रु की स्त्रियों के लिए किसी कान्ति को शरीर में देकर अनिवर्चनीय क्रीडा करते हैं। स्त्रियों के कर्ण फूलों के ताटङ्कों की प्रभा प्रकाशित है। उनके मुस्कराहटों का प्रकाश स्तन के चन्दन की शोभा को और भी बढ़ा देता हैं।

इसमें परिवृत्त अलङ्कार होने पर तुमसे भगी हुई शत्रु तरुणियों के शरीर में विरह का पीलापन हो गया है। ऐसा वस्तु पाकोन्मुखशरसखी पद से प्रकाशित होता है। हे वीर नरसिंह देव ! तुमसे तलवार की धारा रणाङ्गण में शत्रुओं के शिर पर गिरती हैं। उन शत्रुओं की पत्नियों के स्तन पत्र भंग को क्षण भर जलधारा से प्रक्षालित करती है। इसको देखें।

इसमें असंगति अलङ्कार से नवीन जलधारा यह विलक्षण है,जो तुम्हारी तलवार की धारा इस व्यतिरेक अलङ्कार का विलोकन करें। इस पद से प्रकाशित है। इनमें कवि प्रौढ़ोक्ति मात्र निष्पन्न शरीर के अर्थ की व्यञ्जना हो रही है।

भुवः केलीतल्पं जयति नरसिंह क्षितिभृतो,
भुजः शौर्यक्रीडाडमरसमरारम्भलटहः ।
नवप्रेयोलाभप्रमुदितसमस्ताम्बरचरी,
विकीर्णैर्मन्दारैर्विततमुपहारं भजति यः ।। ४५ ।।

अत्र वस्तुना समराभिमुखानशेषानपि सर्वथा निहन्त्येव रिपूनयमिति वस्तु नवप्रेयोलाभेनेत्यादिना पदेन द्योत्यते ।।

धूर्ताधारेण देव वासव कथं पङ्केन लिप्तः करी,
पातुं तोयमुपागतः सुरनदीं तत्रास्ति पङ्कः कुतः ।
सर्वाशाविजयोत्सवं प्रति कृतोद्योगे कलिङ्गेश्वरे,
स्फार्यन्ते करिकर्णतालपवनोद्धूताश्चमूरेणवः ।। ४६ ।।

अत्र वस्तुना सुरनद्याश्चमूरेणुभिरसम्बन्धेऽपि सम्बन्धः कृत इति स्फार्यन्त इति पदेनातिशयोक्तिरलङ्कारो द्योत्यते ।।

---

नरसिंहनरेशस्य पृथिवी विलासशय्यां जयति । बाहुस्तु पराक्रमक्रीडाडमरसमरारम्भलटहः । एवंविधनवीनप्रेमीजनानां लाभेन प्रमुदितसमस्ताकाशे पक्षिभिः विकीर्णैर्मन्दोरैर्विस्तृतमुपहारं भजति यः ।

अत्र वस्तुना रणोन्मुखान् समस्तशत्रून् सर्वथैव निहन्ति । इति वस्तु नवप्रेयोलाभेनेत्यादिना पदेनाभिव्यज्यते ।

धूर्तानधःकुर्वन् हे देव नरसिंह ! इन्द्र इव कथं पङ्के नालिप्तः ते हस्ती । जलं पातुं सुरसरितामागतः । तत्र पङ्को नास्ति । सर्वदिशाविजयोत्सवं प्रति नरसिंहकलिङ्गाधिपते; श्रमे करिकर्णतालवायूत्थितसेनारेणवः विस्तृताः ।

इह तु वस्तुना सुरद्याश्चमूरेणुभिरसम्बन्धेऽपि सम्बन्धः । स्फार्यन्ते इति पदेनातिशयोक्तिरलंङ्कारो व्यज्यते ।

---

नरसिंह राजा की पृथ्वी विलास शय्या को जीतती है । और भुजा पराक्रम की क्रीडा रूपी आडम्बर जो है, उसे रण के आरम्भ में विलास देने वाली है । ऐसी भुजा नवीन प्रेमी जनों के लाभ से प्रमुदित समस्त आकाश में घूमने वाली पक्षियों से विकीर्ण की गई मन्दार पुष्प से विस्तृत उपहार को प्राप्त हो रही है । इसमें वस्तु से रण के उन्मुख सम्पूर्ण शत्रु को सर्वथा मार डालते हैं, ऐसी वस्तु नवीन प्रेय लाभ आदि पद से द्योतित है ।

धूर्तों को नीचा दिखाने वाले हे देव नरसिंह इन्द्र समान कैसे कीचड़ से तुम्हारी हाथी लिपट सके । जल पीने के लिए सुरसरिता में आई । वहाँ कीचड़ कहाँ से है ? सभी दिशाओं को विजय करने के समारोह के प्रति नरसिंह कलिङ्ग नरेश के किए गए श्रम पर हाथी के लम्बे कान की वायु से उठी सेना की धूलियाँ फैल जाती हैं ।

यहाँ वस्तु से सुर नदी के सेना धूलि से असम्बन्ध होने पर भी सम्बद्ध किया गया । इस प्रकार स्पष्ट है । ऐसे पद से अतिशयोक्ति अलङ्कार द्योतित होता हैं ।

आयोधनेषु रभसादधिरूढवत्या, वीरश्रियः स्तननितम्बभरातिभारात् ।
हन्तुं नृसिंह नृपतेर्न भुजः कथंचित्, पादोपकण्ठपतितान् क्षमते विपक्षान् ॥४७॥

अत्र जीवन्त एव परिपन्थिनो मुक्ता इति कार्ये पृष्ठे नृसिंहनृपतिभुजः कथमपि न हन्तुं क्षमते इति कारणाभिधानरूपा प्रस्तुतप्रशंसोपजीवनप्रवृत्तप्रतीयमानहेतूत्प्रेक्षानुप्राणितेन व्याजस्तुत्यलङ्कारेणानवरतक्षात्रधर्माचरणप्रवणत्वरूपं वर्णनीयविषयं वस्तु पादोपकण्ठपतितानित्यनेन पदेन द्योत्यते ।

---

युद्धस्थलेषु वेगेन प्राप्तवीरश्रियः स्तननितम्बभारातिभारात् चरणे निपतितान् शत्रुनरेशा न कथं भुजा; हन्तुं क्षमाः ।

अत्र जीवन्त एव शत्रवो विमुक्ताः । इति पृष्ठे सति नरसिंहनरेशस्य भुजः कथमपि हन्तुं न् क्षमते । इति कारणकथनरूपाप्रस्तुतप्रशंसोपजीवितप्रवृत्तप्रतीयमानहेतूत्प्रेक्षा च धर्माचरणभूयस्त्वं वर्णनीयविषयं वस्तुपादोपकण्ठपतितानित्यनेन पदेन व्यज्यते ।

---

युद्ध स्थलों में वेग से प्राप्त वीर लक्ष्मी उसके स्तन एवं नितम्ब के अत्यन्त भार से चरणों के समीप गिरे विपक्षों को किसी प्रकार से राजा की भुजाएँ मारने में समर्थ नहीं होती हैं । इसमें जीवित ही शत्रु मुक्त हैं । ऐसे कार्य में पूछे जाने पर नरसिंह राजा की भुजाएँ किसी भी प्रकार मारने में समर्थ नहीं है । ऐसे कारण के कहे जाने पर अप्रस्तुत प्रशंसा अलङ्कार से उपजीवित प्रवृत होने वाले हेतूत्प्रेक्षा अनुप्राणित होने से व्याजस्तुति अलङ्कार के कारण निरन्तर क्षात्र धर्म आचरण की बहुलता रूप वर्णनीय विषय की वस्तु ( पादोपकण्ठपतितानिति ) पद से प्रकाशित होता है ।

---

"It is a miracle, indeed, that your sword descends upon the heads of the enemies and its effect is less visible there, then it is on the breast of their wives; whose ointment is simultaneously washed off." because as a general rule; a cause and its effect has the same substratum. But here the cause exists in one substratum and the effect in its different substratum. Such incompatibility is called ( Asangati ); figure of incompatibility. It leads to a suggested figure called (Vyatirek); in which one of the two similars far excels the other, Here the sword compared to a stream has a more compassing effect than a stream, Hence ( Vyatirek ).

बाहुस्ते नरसिंह देव विजयश्रीकेलिसौधध्वज,
स्तत्रापि प्रलयाग्निधूमरुचिना खड्गेन सख्यं गतः ।
निर्मर्याददिशीर्यमाणविशिखप्राग्भारशात्कारिणि,
प्राक्रीडत् समरे सपत्नहरिणाक्षीणां ह हा हा विधिम् ॥४८॥

इह कारणाभिधानरूपाप्रस्तुतप्रशंसानुगृहीतेन काव्यलिङ्गेन सपत्नहरिणाक्षीणां दशा वचनगोचरतामपि नेतुं न शक्यत इति भणितिनिषेधेन वक्ष्यमाणविषय आक्षेपालङ्कारो ह हा हा विधिमिति पदेन द्योत्यते । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य व्यञ्जकत्वम् । वाक्य प्रकाश्यत्वेन यथा –

---

हे नरसिंह देव ! भवतो भुजः विजयश्रीक्रीडासौधध्वजः इव । तत्रापि प्रलयाग्निधूम कान्तित्वेन खड्गेन च मित्रत्वमस्ति । मर्यादाराहित्येन प्रक्षिप्तवाणाः पूर्वमेव भारात् शब्दायमाने युद्धस्थलेऽभवन् । शत्रुनरेशाणां हरिणीनेत्राणां वधूनां गतिर्दयनीयाभवत् । विधेर्विडम्बनेयम् ।

अत्र कारणाभिधानरूपाप्रस्तुतप्रशंसानुगृहीतेन काव्यलिङ्गेन शत्रुनरेशाणां वधूनां हरिणीनेत्राणामवस्था वक्तुमशक्येति कथननिषेधेन वक्ष्यमाणविषय आक्षेपालङ्कारो ह हा हा विधिमिति पदेन प्रकाश्यते ।

एतेषु कविनिबद्धवक्तृप्रोढोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य द्योतनम् । वाक्यप्रकाश्यत्वस्योदाहरणं यथा –

---

हे नरसिंह देव ! आप की भुज। विजयश्रीक्रीडा भवन के पताका स्वरूप है। वहाँ भी प्रलयाग्नि धूम की कान्ति से और तलवार से मित्रता हो गई । मार्यादा रहित होने से फेंके गए वाण पहले भार से शब्द करने में युद्धस्थल में शत्रु राजा के हरिण सदृश नेत्र वाली बधुओं की दयनीय ( गति ) ऐसी हो गई । यह विधि की विडम्बना है ।

यहाँ कारण के अभिधान रूप अप्रस्तुतप्रशंसा अनुगृहीत काव्यलिङ्ग होने से शत्रु की स्त्रियों के चञ्चल हरिण सदृश नेत्रों की दशा और बचन को दृष्टिगत होने पर निषेध होने से कहा जानेवाला विषय आक्षेप अलङ्कार है : 'ह, हा, हा, विधिम् पद से घोतित होता है इनमें कवि निवद्धवक्तृप्रौढोक्तिमात्रनिष्पन्न शरीर के अर्थ की व्यञ्जना है । वाक्य प्रकाश्य होने का उदाहरण –

एतास्ताराः समन्ताद्दिशि दिशि नभसि प्राप्य धाम स्वकीयं,
निःसापत्न्यप्रकर्षप्रकटनपटुतां नाटयन्त्यः स्फुरन्तु।
किं चन्द्रः कुत्र तिष्ठत्ययमियमधुना तस्यवार्ताऽपि लुप्ता,
कीर्तौ विस्फूर्तिमत्यां शुभचरितनिधेः श्रीनृसिंहस्य राज्ञः ॥४९॥

अत्रैतास्ताराः स्फुरन्त्विवति विधिरूपेण वस्तुना न स्फुरन्त्विवतिनिषेधरूपं वस्तु व्यज्यते। विधिनिषेधो हि भावाभावरूपतया विरुद्धाविति न कस्यापिविमतिः। अनयोस्तु वाच्यत्वं तावन्न यौग पद्येन। असंभवात्। नापि क्रमेण। विरम्यव्यापाराभावात्।

संघर्षोत्कर्षरिङ्खत्प्लवनकतिकुलोन्मूलितोत्तलाशैल,
प्राग्भारैः सेतुबन्धो दशवदनशिरश्छेदनाय व्यधायि।
पूर्वं तावत् त्वयासौ महति जलनिधौ साम्प्रतं तत्र सेतुं,
कं वा जेतुं नृसिंहक्षितिप रचयसि स्वैर्यशश्चन्द्रकान्तैः ॥५०॥

अत्र रावणवधाय वारिधौ सेतुस्त्वया बद्ध इत्येवंरूपेण वस्तुना त्वमेव राम इति रूपकं व्यज्यते ॥

---

इमास्ताराः स्फुरन्तु, सर्वत्र स्वदाक्षिण्यमाकाशे प्रदर्शयन् चन्द्रमधः कुर्वन्। शुभचरितनिधेः श्रीनृसिंहस्य नरेशस्य वितातायां कीर्तौ चन्द्रः क्व? कुत्र वसति? वार्ताऽपि लुप्ताधुना।

अत्रैतास्ताराः स्फुरन्तु विधिरूपवस्तुनानेन स्फुरन्तु नेति निषेधरूपवस्तु व्यज्यते। अस्मिन् कस्यापि न विमतिः। अनयोः वाच्यत्वं तावन्न। असंभवात्। क्रमेणापि न। विश्रम्य व्यापाराभावात्। संघर्षोत्कर्षणाप्लवन्तः प्लवन्तश्च प्लवङ्गमाः। तैर्विच्छिन्नोच्चाचलखण्डैस्तटबन्धः सेतुः। रावणशिरश्छेदनायायं विरचितः। हे नरसिंह नरेश! तव यशः प्रसरति चन्द्रकान्तमणिरिव। अधुना कं जेतुं तत्र सेतुं रचयसि। इह रावणबधाय सिन्धौ सेतुस्त्वया बद्धः इत्येवं रूपेण वस्तुना त्वमेव राम इति रूपकं व्यज्यते।

---

ये तारागण चारो दिशाओं में, आकाश में अपने गृह को प्राप्त कर शत्रु से रहित होकर उसकी प्रकर्षता की प्रकट करने में चतुरता का नाटक करते हुए स्फुरण करते हैं। शुभ चरितनिधि वाले श्रीनरसिंह राजा कीं फैली कीर्ति में चन्द्रमा क्या है? यह कहाँ रहता है? यह अब उसकी वार्ता भी लुप्त हो गई।

इसमें ये तारे स्फुरित हों, इस विधिरूप वस्तु से स्फुरित नहीं। यह निषेध रूप वस्तु व्यञ्जित है। विधि और निषेध भाव के अभाव रूपता से दोनों विरुद्ध हैं। ऐसी किसी की विरुद्ध मति नहीं है। इन दोनों के वाच्यत्व तब तक दोनों एक साधन ही होते हैं। असंभव होने के कारण क्रम से भी यह नहीं होता हैं। विराम करके व्यापार का अभाव कारण है।

संघर्ष के उत्कर्ष से चलते कूदते वानरों के समूह से नष्ट हुए ( खण्डित ) ऊँचे पर्वत के खण्ड से बंधा पुल का तट है। रावण के मस्तक को काटने के लिए निर्माण किया गया। पहले तब आप द्वारा यह महान् सागर में बनाया गया था। इस समय वहाँ पुल अथवा किसे जीतने के लिए हे नरसिंह नरेश! तुम यश फैला रहे हो। चन्द्रकान्त मणि के समान तुम्हारा यश है।

इसमें रावण बध के लिए सागर में सेतु तुम्हारे द्वारा बांधा गया। इस प्रकार के रूप वस्तु से तुम ही राम हो इस रूपक की व्यञ्जना है।

पृथ्वीभारावतारं कृतवति भवतो दोष्णि हर्षेण दूतः,
शेषेण प्रेषितोऽसौ निवसति भुजगःकोऽपि संवाद हेतोः ।
क्रुध्यत् कालीकटाक्षद्युतिदलनकलाकेलिकारस्त्वदीये,
पाणौ नायं कृपाणः शुभचरितनिधे श्रीनृसिंह क्षितीन्द्र ।।५१।।

अत्रापह्नुत्या सकलैरपि विपक्षैर्दुर्निरीक्ष्यस्त्वत् कौक्षेयक इति वस्तु व्यज्यते ।

सेनारजोभिस्तव तिग्मभानुराच्छादितोऽसौ नरसिंहदेव ।
विरोधिशुद्धान्तमृगेक्षणानां, वक्त्रेन्दुरासीन्मलिन प्रकाशः ।।५२।।

इहासंगत्यलङ्कारेण ध्वजिनीसमुद्धूतधूलीश्यामलितनभोमण्डलावलोकनसमकालमेव रिपुभूपालाः पलायन्त इत्यतिशयोक्तिरलङ्कारो व्यज्यते । उत समरपराङ्मुखत्वमभजन्त भूभुज इति कार्ये प्रस्तुते रजः पुञ्जपिञ्जरितगगनतलनिभालनानुमितस्याप्रस्तुतस्य सेनाबाहुल्यरूपस्य कारणस्याभिधानादप्रस्तुतप्रशंसा । उतस्विद्विषादाद्यनुभावत्वेनोपनिबद्धाद्विरोधिवधूवदनमालिन्यलक्षणात् कार्यात् प्रस्तुताज्झटितिरिपुसुभटरणापसरणादिरूपस्य कारणस्य प्रस्तुतस्यैव प्रतीतेः पर्यायोक्तम् ।

---

शुभचरितनिधे नरसिंह राजन् ! यदा तव भुजा पृथ्वीभारावनारं कृतवती, हर्षेण शेषो धन्यवादायैकं दूतं प्रेषयामास । यस्तव पाणौ कृपाणरूपेणावस्थितः । क्रोधे कालीकटाक्षप्रकाशककलाक्रीडारूपः ।

अत्रापह्नुत्यलङ्कारेण सम्पूर्णशत्रुभ्यः काठिन्येन दर्शनीयखड्गस्ते वस्तुना व्यज्यते । हे नरसिह देव ! तव सेनारेणुभिस्तीव्रोऽयं सूर्य आच्छादितः । शुद्धान्तमृगनयनीशत्रुवधूनां चन्द्रमुखं मलिनं प्रकाशितम् ।

अत्रासङ्गत्यलङ्कारेण सेनारजोभिः कृष्णवर्णोऽयमाकाशः । तदानीमेवावलोकनं भवेत् शत्रवः पलायिताः । इत्यतिशयोक्तिरलङ्कारोऽभिव्यज्यते ।

रणात् पराङ्मुखा राजानः । कार्ये प्रस्तुते सति रजःपुञ्जेनाच्छादिताकाश इवानुमितस्याप्रस्तुतस्य सेनाभूयस्त्वेनाभिधानेनाप्रस्तुतप्रशंसा । आहोस्वित् विषादाद्यनुभावेनोपनिबद्धशत्रुवधूनां मुखस्य मालिन्यस्य लक्षणकार्यस्य प्रस्तुते शत्रुवर्गे रणात् अपसरणादिरूपकारणस्य प्रस्तुतस्यैव प्रतीतेः पर्यायोक्तम् ।

---

हे शुभचरितवाले नरसिंह राजन् ! जब आपकी भुजा पृथ्वी के भार को उतार दिया तो हर्ष से शेष ने धन्यबाद देने हेतु एक दूत भेजा । जो तुम्हारी भुजा में कृपाण के रूप में स्थित है । क्रोध में काली कटाक्ष के प्रकाश को नष्ट करनेवाली कलाक्रीडा रूप है ।

इसमें अपह्नुति अलङ्कार से सम्पूर्ण विपक्षियों से भी कठिनता से देखने योग्य तुमसे तलवार इस वस्तु से व्यञ्जित है ।

हे नरसिंह देव ! तुम्हारी सेना के पैरों से उठी हुई धूलि से यह तेज सूर्य ढक गया है । शुद्ध अन्तः से मृग की दृष्टि वाली जैसी शत्रुबधुओं का मुखचन्द्र मलिन प्रकाश वाला हो गया ।

इसमें असंगति अलङ्कार से सेना से उठी धूलि से काले रंग का आकाश मण्डल हो गया है । इसका अवलोकन उसी समय किया जाय । शत्रु राजा भाग गए । इस अतिशयोक्ति अलङ्कार की व्यञ्जना है अथवा रण से पराङ्मुख राजा हो गए । इस कार्य के प्रस्तुत होने पर धूलि समूह से ढके आकाश तल के समान अनुमित अप्रस्तुत सेना बाहुल्य रूप कारण के अभिधान से अप्रस्तुत प्रशंसा है । अथवा विषाद आदि अनुभाव से उपनिबद्ध शत्रु की वधुओं के मुख की मलिनता के लक्षण के प्रस्तुत होने से तुरन्त शत्रु वीर रण से अपसरण आदि रूप कारण के प्रस्तुत होने की ही प्रतीति से पर्यायोक्त अलङ्कार है ।

एषूदाहरणेषु स्वतः संभविनोऽर्थस्य व्यञ्जकत्वम् ॥

सुराङ्गनाभ्यो मलये त्वदीयं श्रुत्वा यशो वीर नृसिंह देव ।
जिह्वाञ्चलान्युल्ललयन्ति दुग्ध मृणाललोभादुभयेऽपिनागा ॥५३॥

अत्र रसनाञ्चलोल्लोलनरूपेण वस्तुना विशिष्टचैतन्यशून्यानामपि चमत्कारं करोति यशस्त्वदीयमिति वस्तु व्यज्यते ।

वियोगिनो विभ्यति वैरिवीराः कौतूहलीमश्नुवते चकोराः ।
त्वत्कीर्तिमालोक्य कलिङ्गनाथ विज्जृम्भमाणां बहुलेऽपि पक्षे ॥५४॥

अत्र वस्तुना भ्रान्तिमदलङ्कारो व्यज्यते ।

उद्गीयमानमनिशं सुरसुन्दरीभिर्दानं निशम्य भवतो नरसिंह भूप ।
म्लानेषु निर्जरतरोर्नवपल्लवेषु शच्या तवैव यशसा विहितोऽवतंसः ॥५५॥

अत्र परिणःमेन निरतिशयं तव वितरणमिति वस्तु व्यज्यते ।

---

एषूदाहरणेषु स्वतः संभविनोऽर्थस्याभिव्यञ्जकत्वम् ।

हे वीर नरसिंह देव ! मलयानिले देवाङ्गनाभ्यो भवदीयं यशः श्रुत्वा दुग्ध-मृणाललोभेन क्रमेण सर्पाः नागाश्च लालायुक्ताः ॥

अत्र जिह्वाग्रलोलरूपेण वस्तुना भवदीयं यशो विशेषचेतनाशून्यानामपि चमत्करोति । यशस्त्वदीयमिति वस्तु व्यज्यते ॥

शत्रुवीराः वियोगिनो विभ्यति, चकोराश्च कौतूहलं पुष्णन्ति । त्वदीयं यशः श्रुत्वा हे नरसिंह नरेश ! कृष्णपक्षे विज्जृम्भाणां दशा ॥ इह वस्तुना भ्रान्तिमान-लंङ्कारो व्यज्यते । नरसिंह नरेश ! भवदीयं यशः श्रुत्वा देवाङ्गनाभिः गीताः गायिता ॥ इन्द्राणिना त्वदीयेन यशसा म्लानेषु कल्पवृक्षस्य नूतनपल्लवेषु कर्णावतंसः कृतः ॥

अत्र परिणामेन निरतिशयं तव वितरणमिति दानमिति वस्तु व्यज्यते ।

---

इन उदाहरणों में स्वतः संभवी अर्थ की व्यञ्जना हो रही है ।

हे वीर नरसिंह देव ! मलय में देवताओं की स्त्रियों से तुम्हारा यश सुनकर दूध एवं मृणाल के लोभ से क्रमशः दोनो सर्प एवं हाथी के जीभ के अग्रभाग लाला युक्त हो गए हैं ।

यहाँ जिह्वा के अग्रभाग के लोलरूप वस्तु से तुम्हारा यश बिशेष चेतना शून्य को भी चमत्कृत करता है । यह वस्तु व्यञ्जित हो रही है ।

शत्रुवीर वियोगी से डर रहे हैं । चकोर कौतूहल को पुष्ट करते हैं । तुम्हारे यश को सुनकर देखकर हे कलिङ्ग नरेश ! कृष्ण पक्ष में व्याप्त तुम्हारी विज्जृम्भितों की दशा है ।

यहाँ वस्तु से भ्रान्तिमान् अलङ्कार की व्यञ्जना है ।

नरसिंह नरेश ! आप के दान को सुनकर देवता की सुन्दरियों द्वारा नित्य गीत गाये जाते हैं । कल्पवृक्ष के मुर्झाये नये पल्लवों में इन्द्राणी द्वारा तुम्हारे ही यश को कर्णाभरण बनाया गया ।

इसमें परिणाम द्वारा निरतिशय वितरण वस्तु की व्यञ्जना है ।

पृथ्वी पूर्वापरगिरिघनोत्तुङ्ग वक्षोजनम्रा,
भूषा बाहोरजनि भवतः श्रीनृसिंहक्षितीन्द्र ।
बाहुश्चास्याः सुरगजकरस्थूलदीर्घः समग्रां,
कान्ति पुष्णात्यघटघटनाचातुरीयं विधातुः ॥५६॥

अत्रान्योन्यालङ्कारेणोपमेयोपमा व्यज्यते । एषु कविप्रौढ़ोक्तिमात्रनिष्पन्नशरीर-स्यार्थस्य व्यञ्जकत्वम् ।

कस्त्वं भद्र वनेचरः कथय नः कुञ्जं कमप्युद्भट,
ध्वान्तं साध्वसमीदृशं तव कुतो जातं कलिङ्गेश्वरात् ।
गीतैस्तस्य यशोभिरस्ततमसः कुञ्जास्ततः किं मया,
कार्यं मा भव कातरः स हि सदा जागर्ति वीरव्रते ॥५७॥

अत्र वस्तुना वाक्यार्थरूपेण भीतं पलायितमरण्यवासिनं हन्ति किं भवन्तमिति नरसिंहनरपतिविषयमनवरतक्षत्रधर्माचरणप्रवणत्वरूपं वस्तु व्यज्यते ।

---

वक्षस्थलस्तु पूर्वापराचलो घनोच्चैः । तवभूमिः । श्रीनृसिंह नरेश ! भवतो बाहुशोभां विभूषयति । ऐरावतगजकरस्थूलदीर्घो वाहुरस्याः पृथिव्याः कान्ति पुष्णाति । विधेरियमघटितघटनाचातुरी ।

इहान्योन्यालङ्कारेणोपमेयोपमाभिव्यज्यते । एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीर-स्यार्थस्याभिव्यञ्जकत्वम् ।

कथय भद्र कस्त्वं वनेचरः । त्वं मदीयं कुञ्जं घनान्धकारयुक्तमनिर्वचनीयं नाशयितुं केन साहसमवाप्नोषि । कलिङ्गेश्वरात् किं ? तस्य गीतैः अन्धकारो विनष्टः । अधुना किं करणीयं, कातरो मा भव कीर्तिः खलु वीरव्रते नरसिंहे जागर्ति । अर्थात् नरसिंहनरेशः वीरव्रती ।

इह वस्तुना वाक्यार्थरूपेण भीतं पलायितं वनवासिनं हन्ति किं भवन्तमिति-नरसिंहनरेशविषयं सदैव क्षत्रधर्माचरणभूयस्त्वरूपं वस्तु प्रकाशते ।

---

पूर्व एवं पश्चिम के पर्वतरूप विस्तृत वक्षस्थल हैं; ऐसी तुम्हारी भूमि है। हे नरसिंह नरेश ! आप की बाहु की शोभा को भूषित करने वाली हो गई। ऐरावत हाथी के कर के समान मोटी लम्बी बाहु इस पृथ्वी की कान्ति को पुष्ट करती है। यह ब्रह्मा जी के अघटनीय घटना की चातुरी है।

यहां अन्योन्य अलङ्कार से उपमेयोपमा व्यञ्जित हो रही है। इसमें कवि प्रौढोक्ति मात्र निष्पन्न शरीर के अर्थ की व्यञ्जना हो रही है। हे भद्र तुम कौन ? वनेचर। बोलो। तुमने हमारे घने अन्धकार वाले अनिर्वचनीय वन को नष्ट करने के लिए साहस किससे प्राप्त किया ? क्या कलिङ्ग नरेश से प्राप्त हुआ। उनके गाये गए गीतों से सभी अन्धकार विनष्ट हो गए। अब हमें क्या करना है ? ऐसा कातर तुम न बनो। वह कीर्ति निश्चय ही वीर व्रत में जागती रहती है। अर्थात् नरसिंह वीरव्रती हैं।

इसमें वस्तु से वाक्यार्थ रूप से, डरे हुए भागे हुए वनवासी को मारते हैं। क्यों आप को (भवन्तं) इससे नरसिंह राजा के विपय में सदा क्षत्रीय धर्माचरण करने की अधिकता रूप वस्तु की व्यञ्जना हो रही है।

युक्ता विपक्षेषु कृपा न कर्तुमेते विकुर्वन्ति हि कार्यकाले ।
इत्याहवे वीक्ष्य कलिङ्गनाथं नाथन्त्यमी प्राञ्जलयः सपत्नाः ॥५८॥

अत्र वस्तुना तद्दूषणावसरे न वयं शत्रव इति ध्वन्यते । निषेध एवायमिति किं हृदयम् ।

नहि नहि । स्वयं शत्रुभिरेव शत्रुत्वनिषेधस्य कृतत्वात् । ततश्च एष निषेधो वाधितः शत्रूणां निर्विकारत्वसततहितकारित्वादिविशेषं व्यनक्तीत्युक्तविषय आक्षेपो व्यज्यते ।

प्रागासीन्मकरन्दषिच्छिलतले पद्मस्य गर्भे ततः,
शौरेः कौस्तुभकान्तिपूरसुभगाभोगे भुजाभ्यन्तरे ।
आवासस्तव लक्ष्मि सम्प्रति पुनर्निर्व्याजमूर्च्छत् कृपा,
स्रोतः शीतलिते नृसिंह वसुधानाथस्य नेत्राञ्चले ॥५९॥

अत्र पर्यायालङ्कारेणोन्नतपदप्राप्तिकृतार्थीकृतात्मनो लक्ष्म्याः कलिङ्गेश्वरं प्रति प्रेमातिशयरूपं वस्तु व्यज्यते ।

---

शत्रवो न कृपार्हाः । यतः एते कार्यसमये विकुर्वन्ति । इति युद्धे कलिङ्गनरेशं दृष्ट्वा शत्रवोऽमी करबद्धाः प्रार्थयन्ति ।

अत्र वस्तुना तद् दोषस्यावसरे वयं न शत्रवः । इति ध्वन्यते । निषेधोऽयमेव । इति तु दृढविचारोऽस्ति । नहि नहि । वैरिभिरेव शत्रुत्वनिषेधस्य कृतत्वात् तदनन्तरञ्चायं निषेधो बाधितः शत्रूणां बिकारराहित्येन सदा हितकारित्वादिविशेषं व्यज्यते । उक्त विषयेऽयमाक्षेपोऽभिव्यज्यते ।

नरसिंहनरेशस्य शीतलनेत्रपुटे लक्ष्मि ! ते प्राग् निवासः । पुनः निर्व्याजमूर्च्छायुक्त कृपास्रोतः । मकरन्दस्तु कमलमध्ये पूर्वमेवासीत् । ततश्च शूरत्वेन युक्तकौस्तुभमणिकान्तिपूरसुभगभुजयोः शोभितः ।

अत्र पर्यायालङ्कारेणोन्नतपदप्राप्तिकृतार्थीकृतस्वलक्ष्म्याः कलिङ्गनाथं प्रति प्रेमातिरेकरूपं वस्तु व्यज्यते ।

---

शत्रुओं पर कृपा न करना उचित है । क्योंकि ये कार्य के समय बुरा करते हैं । ऐसा युद्ध में कलिङ्ग नरेश को देखकर ये शत्रुगण हाथ जोड़कर प्रार्थना करते हैं ।

यहाँ वस्तु उसके दोष के अवसर पर 'हम शत्रु नहीं हैं, यह ध्वनित हो रहा है । निषेध ही यह है । ऐसा क्या विचार है । नहीं नहीं । स्वयं शत्रुओं से ही शत्रुता के निषेध करने से होता है और उसके बाद ही निषेध बाधित है । शत्रुओं के विकार राहित्य से सदा हित करने आदि की विशेषता प्रकट करता है, ऐसी उक्त विषय आक्षेप की व्यञ्जना हो रही है ।

नरसिंह नरेश के शीतल नेत्र पुट में हे लक्ष्मी ! तुम्हारा निवास है । पुनः व्याजरहित मूर्च्छा युक्त कृपा का स्रोत है । मकरन्द पहले कमल के बीच में था । उसके बाद शूरता से युक्त कौस्तुभ मणि की कान्ति से पूर्ण सुन्दर भुजाओं के मध्य में शोभित हो गया ।

इसमें पर्याय अलंकार से उन्नत पद प्राप्ति से कृतार्थ किया गया अपनी लक्ष्मी से कलिङ्गनाथ नरसिंह के प्रति प्रेम के अतिशय रूप वस्तु की व्यञ्जना हो रही है ।

का त्वं भीरु वधूः प्रसूनधनुषः किं कर्तुमागाः पुनः,
स्नातुं कुत्र मुने निसर्गविमले मन्दाकिनीस्रोतसि ।
मागास्तत्र नृसिंहपार्थिवकरश्लाघासमाकर्णन,
म्लानस्वस्तरुशीर्णपर्णपटलीपातैः कषायं पयः ॥६०॥

अत्रातिशयोक्त्यानितरसाधारणं नृसिंहभूपतिवितरणमिति व्यतिरेको व्यज्यते। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य व्यञ्जकत्वम् ॥

यद्यपि शब्दार्थयोः प्रत्येकं व्यञ्जकत्वमुक्तं तथापि शब्दस्य व्यञ्जकत्वं तत्रार्थस्यापि सहकारित्वम् । यत्र पुनरर्थस्य व्यञ्जकत्वं तत्र शब्दस्य ॥ प्रबन्ध प्रकाश्यत्वेन यथा श्रीमहाभारते गृध्रगोमायुसंवादे ।

---

कथय त्वं भीरुवधूः । अथवा कामतृप्त्यै पुनः आगतासि । हे मुने स्नातुं स्वभावतोऽच्छमन्दाकिनीस्रोतसि मा गच्छ । तत्र नरसिंहनरेशस्य यशः श्रुत्वा म्लान तरुजीर्णरक्तपत्राणां पतनैः जलं कषायितम् । अत्रातिशयोक्त्या साधारणनरसिंहनरेशस्य दानमिति व्यतिरेकोऽभिव्यज्यते । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थस्याभिव्यञ्जकत्वम् ॥ यद्यपि शब्दार्थयोरुभयोः प्रत्येकं व्यञ्जकत्वमुक्तं तथापि यत्र शब्दस्य व्यञ्जकत्वं तत्रार्थस्यापि सहकारित्वम् । यत्र पुनरर्थस्य व्यञ्जकत्वं तत्र शब्दस्य सहकारित्वम् ।

प्रबन्धप्रकाश्यत्वेन यथा श्रीमहाभारते गृध्रगोमायुसंवादे ।

---

क्या तुम डरपोक बधू हो । काम सम्बन्धी कार्य करने के लिए पुनः क्या आई हो ? हे मुनि ! स्नान करने के लिए स्वभावतः स्वच्छ मन्दाकिनी की धारा में मत जायँ । वहाँ नरसिंह नरेश की प्रशंसा सुनने में मुर्झाये वृक्ष के जर्जर पत्ते के लाल वर्ण होकर गिरने से जल कषाय वर्ण का हो गया है ।

इसमें अतिशयोक्ति से साधारण नरसिंह राजा के दान की व्यतिरेक अलङ्कार की व्यञ्जना हो रही है । इसमें कविनिबद्धवक्तृप्रौढ़ोक्ति मात्र निष्पन्न शरीर अर्थ की व्यञ्जना है । यद्यपि शब्द और अर्थ दोनों के प्रत्येक की व्यञ्जना कही गई, तथापि वहाँ शब्द की व्यञ्जकता अर्थ की भी सहकारिता है । जहाँ अर्थ की व्यञ्जकता है, वहाँ शब्द की भी सहकारिता है । प्रबन्धप्रकाश्यता का उदाहरण महाभारत के गृध्र गोमायु संवाद में देखें ।

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले,
कङ्कालबहले घोरे सर्वप्राणिभयंकरे।
न चेह जीवितः कश्चित् कालधर्ममुपागतः,
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥६१॥

अत्र वन्धुषु निवृत्तेषु ममोपभोगाय भवत्वयं शव इति दिवावलोकिनो गृध्रस्य गोमायुवञ्चनाभिलाषरूपं वस्तु वस्तुनैव प्रबन्धेन व्यज्यते।

आदित्योऽयं स्थितो मूढा स्नेहं कुरुत साम्प्रतं,
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन।
अमुं कनकवर्णाभं बालमप्राप्तयौवनं,
गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशङ्किताः ॥६२॥

अत्रापि रात्रौ ममैवायमुपभोगाय संपत्सत इति पुरुषव्यावर्तनपरस्य गोमायोर्गृध्रप्रतारणाभिप्रायरूपं वस्तुपंवस्तुनैव प्रबन्धेन द्योत्यते।

---

अरे शोकसन्तप्तलोकाः! श्मशानोऽयम्। गोमायुगृध्रानां निवासस्थानम्। यत्र पश्यसि तत्रास्थिपञ्जरमेव केवलं दृश्यते। किं भयङ्करस्थानम्। तदेव स्थानं यत्र प्राणिनः कम्पायमाना भवन्ति। अत्र स्थित्वा किं करिष्यसि। अरे म्रियते प्राणी यदि वारमेकं मरणं तु ध्रुवं सर्वेषां प्राणिनाम्। प्रियो भवति, तटस्थः शत्रुर्वा। सोऽस्मिन् संसारे न जीविष्यति। शवोऽयमुपभोग्यो भविष्यति। यदि बान्धवाः इतो गताः। एवं दिने सति गृध्रो मृतकस्य मासं भक्षयिष्यत्युदरंभरः। एवं प्रतारणारूपा वार्ता गृध्रस्य। वस्तुना सह वस्तुप्रबन्धेन द्योत्यते।

पुनरपि शृंगालस्योक्तिः—रे मूर्खाः! सूर्यस्तु नास्तंगतः। तमस्तु नाभवत्। प्रियं ते भवतु। यदि बालकोऽयं भूतप्रेतबाधादिव्यथितः मुहूर्ते कदाचित् जीवेत्। प्रेतबाधानिवारिता यदि। गृध्रस्य कथनात् सुन्दरं सुकुमारं बालं क्षिप्त्वा कथं पलायिताः। न लज्जसे रात्रौ मेऽयमुपभोगयोग्यो भविष्यति। इति मानवानपसारयितुं संलग्नशृंगालो गृध्रं वञ्चयति। वस्तुना वस्तुप्रबन्धगतं प्रकाशयतां द्योत्यते।

---

शान्ति पर्व १४३ अध्याय में गृध्र गोमायु संवाद में गृध्र की यह उक्ति—'अरे शोकसन्तप्त लोगों! यह श्मशान है। गिद्धों एवं गीदड़ों जैसे जीवों का निवास स्थान है। यहाँ जिधर देखो उधर केवल अस्थि पञ्जर ही दिखाई देगा। कितना भयंकर है यह स्थान। यही वह स्थान है, जहाँ प्राणी काँप उठता है। यहाँ तुम रुककर क्या करोगे। अरे जो एक बार मर चुका और मरना तो एक दिन सभी को है। चाहे तुम्हारा वह प्रिय हो, शत्रु अथवा तटस्थ हो, वह यहाँ आकर जी तो नहीं उठेगा।

एवमपरेऽप्यर्थशक्तिमूलस्य ध्वनेरेकादश प्रबन्धप्रकाश्यभेदाः प्रबन्धान्तरेषु द्रष्टव्याः । उभयशक्तिमूलानुरणनरूपव्यङ्ग्यस्तु वाक्य एव संभवति । यथा—

सच्चक्रनन्दकः श्रीमान् महत्त्यागदयान्वितः ।
महानुभावः केन त्वं नरसिंह न सेव्यसे ॥६३॥

अत्र नरसिंह इव नरसिंह इति वाक्येनोपमालङ्कारो व्यज्यते । अत्र सच्चक्रादौ शब्दशक्तिमूलत्वं महानुभाव इत्यादावर्थशक्तिमूलत्वम् । एषां ध्वनिभेदानामङ्गाङ्गिभावेन संदेहेनैकव्यञ्जकानुप्रवेशेन च संकरस्त्रिविधो भवति संसृष्टिस्त्वेकविधैव ॥

इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रे ध्वनिभेदनिरूपणं नाम तृतीय उन्मेषः ॥

---

अर्थशक्तिमूलस्य ध्वनेरेकादशप्रबन्धगतभेदाः दर्शनीयाः अन्येषु प्रबन्धेष्वपि । उभयशक्तिमूलानुरणनरूपव्यङ्ग्यस्तुवाक्य एव संभाव्यते । उदाहरणमत्र—

हे नरसिंह नरेश ! भवान् श्रीमान् महात्यागी दयालुः, महानुभाव; सत्यानन्ददायकः केन त्वं न सेव्यसेऽर्थात् सर्वैरपि सेव्यसे ।

अत्र नरसिंह इव नरसिंह एवास्ति । अस्मिनुपमालङ्कारोऽभिव्यज्यते । इह स चक्रादौ शब्दशक्तिमूलत्वं, महानुभावादौ, अर्थशक्तिमूलध्वनिः ।

एषां ध्वनिभेदानामङ्गाङ्गिभावेन सन्देहेनैकव्यञ्जकानुप्रवेशेन च संकरस्त्रिविधो भवति संसृष्टिश्चैकविधैव ।

एकावलीसरलाख्याटीकायां तृतीयोऽध्यायः ।

---

यहाँ बन्धुओं के चले जाने पर मेरे उपभोग के लिए यह शव रहेगा । इस प्रकार दिन रहते गृध्र मृतक का मांस पेट भर खा सकेगा । ऐसी गीदड़ को ठगने की इच्छा रूप वस्तु के वस्तु से ही प्रबन्धगत व्यञ्जना हो रही है । पुनः गीदड़ की उक्ति—

अरे मूर्खों ! अभी सूर्य है । दिन नहीं ढला । इस समय प्रेम करो । यदि भूतप्रेत बाधा इसे हो तो थोड़ी देर में दूर होते ही वह भी जी उठे । इस गृध्र के कहने पर इस सोने जैसे सुन्दर सुकुमार बालक को पटककर भागे जा रहे हो । अरे तुम्हें लज्जा भी नहीं लगती ।

यहाँ भी रात्रि में मेरे ही उपभोग के लिए होगा, ऐसे पुरुषों को हटाने में लीन गीदड़ का गृध्र के वंचना के मतलब होने वस्तु से वस्तु की ही प्रबन्धगत प्रकाश्यता द्योतित हो रही है ।

इस प्रकार अन्य भी अर्थशक्तिमूलध्वनि के ग्यारह प्रवन्ध प्रकाश्यता भेद प्रवन्धान्तर में देखे जा सकते हैं । शब्दार्थशक्तिमूलानुरणनरूप व्यङ्ग्य तो वाक्य में ही संभव होता है ।

उदाहरणार्थ—

हे नरसिंह नरेश ! आप श्रीमान् महात्यागी, दयालु, महानुभाव, सत्य आनन्द-दायक रूप हैं । कौन आप की सेवा नहीं कर सकता है ! अर्थात् सभी करते हैं । यहाँ नरसिंह के समान नरसिंह ही हैं । इस वाक्य से उपमा अलंकार की व्यञ्जना है । इसमें सच्चक्र आदि में शब्दशक्तिमूलत्व, महानुभाव आदि में अर्थशक्तिमूलत्व-ध्वनि है । इन ध्वनि भेदों में अङ्गाङ्गिभाव, सन्देह, एकव्यञ्जकानुप्रवेश संकर से तीन प्रकार की ध्वनि होगी और संसृष्टि तो एक ही प्रकार की होती है ।

---

All the examples given by Vidyādhara based on opposition; incompatibility; Delusion, and Causality, exaggeration are better than those given by Mammaṭa in his ( Kāvya Prakāś ) and at least in this wise Vidyādhara steals march overs Mammaṭa. The entirety of composition can be suggested in eleven ways.

This fact has not been noted in the ( Kāvya Prakāś ) of Mammaṭa and Vidyādhara says that the examples of these eleven types had better be collected from other works of ( Dhvani Sampradāya ), school of suggestion, Written latter than ( Kāvya Prakāś).

## अथ चतुर्थ उन्मेषः

तरुणीकुचमण्डलमिव गूढं यस्माच्चमत्कुरुते ।
वाच्यायमानमस्माद् व्यङ्ग्यमगूढं गुणीभूतम् ॥१॥

यथा—

गण्डैरस्थिरपत्रखण्डरचनैः कर्णैरतालीदलै,
रङ्गै रच्छुरिताङ्गरागपरुषैर्नेत्रै रदत्ताञ्जनैः ।
वक्षोजैरनुपात्तमौक्तिकसरैः शंसन्ति ते पौरुषं,
निःसीमं नरसिंहदेव भुवने प्रत्यर्थिवामभ्रुवः ॥२॥

अत्र शंसनस्यात्यन्ततिरस्कृतवाच्यस्यातिप्रसिद्धत्वादगूढ़त्वम् ॥

वाच्यस्यरसादेर्वा वाक्यार्थस्यापरस्य यत्राङ्गम् ।
व्यङ्ग्यं भवति तदेतत्तज्ज्ञैरपराङ्गमाख्यातम् ॥३॥

यत्रानुरणनरूपं व्यङ्ग्यं वाक्यार्थीभूतस्य वाच्यस्यायरस्याङ्गं तादृशस्य रसादेरपरस्यापरं रसादि वाङ्गम् ।

क्रमेण यथा—

---

अथ चतुर्थोऽध्यायः एकावलीसरलाटीकायाम्

युवतेः स्तनमण्डलमिव गूढं यस्माच्चमत्करोति । व्याच्यायमानमस्माद् व्यङ्ग्यमगूढं गुणीभूतम् ।

उदाहरणमत्र—

नरसिंह देव ! भुवनेऽरिसुन्दरीणां गण्डस्थलानि पत्रखण्डरचनारहितानि । कर्णाभरणानि चाङ्गरागरहितानि शरीराङ्गानि नयनञ्चाञ्जनरहितं वक्षस्थलानि च मौक्तिकसररहितानि । एते ते निःसीमं बलं सूचयन्ति ॥

इह शंसनस्यास्यात्यन्ततिरस्कृतवाच्यस्यातिप्रसिद्धत्वादगूढ़त्वम् । वाच्यस्यरसादेर्वा यत्रान्यवाच्यस्यार्थस्याङ्गं तादृशस्य रसादेरन्यस्यान्यं रसादि वाङ्गम् ।

क्रमेणोदाहरणमिह—

---

अब चतुर्थ अध्याय का प्रारम्भ होता है ।

युवती के कुच मण्डल के समान गूढ़ जिससे चमत्कृत होता है, प्रधान ध्वनि होती है । जहाँ शीघ्रता से प्रतीति हो, वहाँ अगूढ़ होता है । गुणीभूत व्यङ्ग्य अगूढ़ होता है । उदाहरणार्थ—

हे नरसिंह देव ! भुवन में शत्रुओं की सुन्दर बधुएँ, तुम्हारे असीम बल की सूचना दे रही हैं । अस्थिर पत्र के खण्ड की रचना रहित कपोलों द्वारा तालीदल से शून्य कानों द्वारा, अङ्गरागरहित परुष अङ्गों द्वारा अञ्जन रहित नेत्रों से मोतियों की मालाओं से रहित अपने कुचों द्वारा सूचना दे रही हैं ।

यहाँ शंसन के अत्यन्त तिरस्कृत वाच्य के अति प्रसिद्ध होने से अगूढ़त्व है ।

तत्तद्वीर नृसिंह भूप भवतो दानापदानं मुहुः,
श्रुत्वा सिद्धपुरन्ध्रिगीतरचनाशिल्पेषु कल्पद्रुमः ।
नाश्लिष्टो लतया न पल्लवपुटैः पुष्णाति रागोद्गमं
पुष्पैर्नोद्गिरति स्मितं मधुकरध्वानैर्न चाभाषते ॥४॥

अत्र समासोक्तिस्तावदलङ्कारः। तत्र च प्रतीयमानेनानुगतस्य वाच्यस्य प्राधान्येनाङ्गित्वम् । आरोपित नायिकानायकमिथुनधर्मयोर्लताकल्पद्रुमयोरेव वाक्यार्थत्वात् ।

यथा वा—

नरसिंह देव न वयं कवयो नास्माकमीदृशो धर्मः ।
एष वचसां विलासः केवलमुपहारकुसुमतां व्रजतु ॥५॥

अत्रोक्तस्य कवित्वरूपस्य वस्तुनो निषेधः कृतः सन्नत्र राजनि सर्वेषामपि गुणानां विद्यमानत्वात् तदधिकगुणारोपणासंभवान्निरतिशयनरसिंहनरपतिगुणानुवादमात्रपर्यवसायि काव्यमिदमिति कमपि विशेषमभिव्यनक्ति । स च वाच्यस्यैवोपस्कुरुत इति वाच्याङ्गमेवैतत् ॥

---

हे वीरनरसिंहनरेश ! भवतः तत्तदद्भुतदानापदानं वारं वारं श्रुत्वा सिद्धसधवास्त्रीणां गीतास्वनायाः कलासु कल्पद्रुमः लतया नालिङ्गितवान् । पल्लवैः नानुरागः प्राप्तः । पुष्पैः न हसितं विकसितं वा । भ्रमरैः न गुञ्जितम् ।

अत्र तु समासोक्तिः । तत्र च प्रतीयमानेनानुगतस्य वाच्यस्य प्रधानतयाङ्गित्वम् । आरोपितनायकनायिकायुगलधर्मयोर्लताकल्पवृक्षयोरेव वाक्यार्थत्वात् । उदाहरणमत्र—

नरसिंहदेव वयं कवयो न । नास्माकं धर्म एतादृशः । वाणीनां विलासोऽयम् । केवलमुपहारपुष्पतां प्राप्नोति ।

अत्र कथितकवित्वरूपस्य वस्तुनो निषेधः कृतः । अत्र राजनि सर्वेषां गुणानां वर्तमाने सति गुणारोपेणाधिक्यस्य गुणानुवादमात्रपर्यवसितकाव्यमिदमिति कमपि विशेषमभिव्यज्यते । स च वाच्यस्यैवोपस्कारको भवति । वाच्याङ्गमेवैतत् ।

---

वाच्य अथवा रसादि के जहाँ दूसरे वाच्यार्थ का अङ्ग होता है, वहाँ यह व्यङ्ग्य-अपराङ्गगुणीभूतव्यङ्ग्य कहा जाता है ।

जहाँ अनुरणनरूपव्यङ्ग्यवाक्यार्थीभूतवाच्य के अपराङ्ग हो, उस रसादि का अपराङ्गरसादि अङ्ग होता है ।

क्रमशः उदाहरण देखें ।

हे वीर नरसिंह नरेश ! आप के उस अद्भुत दान और निकृष्ट दान को बार बार सुनकर सिद्ध सधवा स्त्रियों की गीत कलाओं में कल्प वृक्ष ने लता से आलिङ्गन नहीं किया । न पल्लवों द्वारा अनुराग के उदय को प्राप्त किया गया । फूलों में खिलने की प्रक्रिया न हुई और भौरों के द्वारा आभाषण नहीं हुआ । अर्थात् गुंजार न हुआ ।

यहाँ समासोक्ति अलङ्कार तो है और वहाँ प्रतीयमान होने से अनुगत वाच्य की प्रधानता से अङ्गित्व स्वीकार है। आरोपित नायिका नायक युगल धर्म के मध्य लता एवं कल्पवृक्ष के समान ही वाक्यार्थ होना कारण है। उदाहरणार्थ —

हे नरसिंहदेव ! हम कवि नहीं हैं। न हमारा यह धर्म ही है। यह वाणी का विलास है, जो केवल पुष्प रूप उपहार है। इसमें कहा गया कि कवित्व रूप वस्तु का निषेध किया गया है। ऐसा होते हुए यहाँ राजा में सभी गुणों के वर्तमान रहने के कारण अधिक गुणारोपण की संभावना से निरतिशय नरसिंह नरेश के गुणानुवाद मात्र में पर्यवसित होनेवाला यह काव्य है। ऐसी किसी विशेष की अभिव्यंजना हैं और वाच्य का ही उपस्कारक होता है। ऐसा वाच्याङ्ग ही यह होता है।

---

Chapter IV

Another class of suggested sense is that where the suggested meaning is not predominant; but holds a place of secondary importance. This class of suggested meaning is called (Guṇībhiūtvyangya) subordinate suggested senses, Such cases occur where the connoted meaning is predominant, because the suggested meaning is of a very common type or where the suggested sentiment is subservient in establishing the predominance of the connoted meaning.

There are eight types of subordinate suggested sense. The first of this type is a Case of the suggested meaning being as good as fully revealed, as is done in prose where as real beauty is at its best when concealed like the breast of a youthful woman. Because this element of Concealment is wanting in this class of suggested meanings, it loses much of its aesthetic appeal so that suggested meaning becomes one of the secondary importance.

2—Vidyādhara now proceeds to provide examples of the predominant suggested sentiment becoming a subservient to an abiding sentiment or an emotion becoming subservient to another emotion or the semblance of emotion becoming a subservient to another emotion.

For example in case of figure of compound (sumāsokti) figure; there is a suggested sense but in (samāsokti) the metaphorical meaning has a greater beauty than the suggested meaning; which as a result occupies a place of secondary importance.

The manner of which Vidyādhara deals with a case of (samāsokti) shows that he agrees more with Mammata than with Abhinavagupta.

यथा वा—

ब्रूमः किं पद्मनाभं वसति यदुदरे विश्वमेतत् समस्तं,
किं वा नागाधिराजं स्वपिति सुखमसौ यत्र लक्ष्म्या समेतः ।
किं वा चन्द्रार्धचूडं यदुपरि भजते सोऽपि हारस्य लक्ष्मी,
माधत्ते सोऽपि चित्ते तव वसति रुचिं गाङ्गवंशावतंस ॥६॥

अत्र प्रभुविषयस्य रतिभावस्याङ्गमद्भुतः ।

स्तोतव्यस्तिग्मरोचिस्त्रिभुवनभवनप्राङ्गणं लङ्घते
यश्चक्षुर्यस्यायमासीत् स भवति जगति श्लाघनीयो मुकुन्दः ।
देवः सोऽप्येष यस्याः कलयति कुचयोश्चूचुकाद्वैत
लक्ष्मीं लक्ष्मीं श्रीमन्नृसिंह क्षितिप रमयते तामपि त्वत्कटाक्षः ॥७॥

अत्र तिग्मरोचिः प्रभृतिविषयो रत्याख्यो भावः प्रभुविषयस्य रतिभावस्याङ्गम् ।

त्वत्प्रत्यर्थिवसुन्धरेशरमणीः संत्रासतःसत्वरं,
यान्तीर्वीर विलुण्ठितुं सरभसा याताः किराता वने ।
तिष्ठन्ति स्तिमिताः प्ररुढ़पुलकास्ते विस्मितोपक्रमा,
स्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि ॥८॥

---

उदाहरणमत्र—विष्णुं किं कथयामः यस्योदरे निखिलभुवनं वसति । किं शेषनागं ब्रूमः यस्योपरि सुखेन स शेते । यत्र च लक्ष्मीः सहचरी । किं वा शिवं वदामः । हारस्य लक्ष्मीं सोऽप्याधत्ते । हे गाङ्गवंशावतंस ! प्रधान श्रेष्ठ नरसिंह ! सोऽपि तव चित्ते निवासस्य रुचिं कुरुते ।

इह प्रभुविषयस्य रतिभावस्याङ्गमद्भुतः ।

स्तोतव्य सूर्यः त्रिषु लोकेषु भ्रमति । यस्य चक्षुः मुकुन्दः श्रीस्तनचूकुकाद्वैतं प्राप्य त्वत्कटाक्षः हे नरसिंहनरेश ! मोदं जनयति ।

अत्र तीव्रमयूखयुक्तः सूर्यो रत्याख्यो भावः प्रभुविषयस्यरतिभावस्याङ्गम् । त्वत् शत्रु नरेशाणां वध्वो भयेन पलायिताः । हे वीर नरसिंह ! विकलाः किराताः वेगेन वनं याताः । आश्चर्यचकितं भूत्वा स्थिताः । अद्भुतकार्यकारका रोमाञ्चिताः । तेऽतिक्रमिता बधूनां तुंगस्तनैश्चञ्चलकटाक्षैश्च ।

---

उदाहरणार्थ—विष्णु को हम क्या कहें; जिसके उदर में यह सारा संसार बसता है। अथवा शेषनाग पर जो ये सुखपूर्वक सोते हैं और जहाँ लक्ष्मीजी साथ में हैं। अथवा शिवजी को क्या कहें, जो हारकी शोभा पाते हैं। वे तुम्हारे हृदय में हे गाङ्गवंश में प्रधान एवं श्रेष्ठ नरसिंह ! निवास करने की इच्छा करते हैं।

यहाँ प्रभु विषयक रति भाव का अङ्ग है, जो अद्भुत है।

स्तुति करने योग्य जो सूर्य है, तीनो लोकों के भवन प्राङ्गण में घूमता है। जिसके यह विष्णु नेत्र हैं। जिस लक्ष्मी के स्तन के चूचुक के अद्वैत शोभा को प्राप्त हे नरसिंह नरेश ! तुम्हारे कटाक्ष आनन्द देते हैं। इसमें प्रचण्ड किरण वाले सूर्य आदि दो विषयों की रति है, जो रतिनामक भाव है। प्रभु विषयक रतिभाव का अङ्ग हैं।

अत्र रसाभासः प्रभुविषयस्य रतिभावस्याङ्गम् ।

**त्वयि लोचनगोचरं गते सफलं जन्म नृसिंह भूपते ।**
**अजनिष्ट ममेति सादरं, युधि विज्ञापयति द्विषां गणः ॥९॥**

अत्र भावाभासः प्रभुविषयस्य रतिभावस्याङ्गम् ।

**नृसिंह भवतो दानं निशम्य निभृतेक्षणाः ।**
**विस्रस्तहस्ताः कान्तारेष्वासते राजकुञ्जराः ॥१०॥**

अत्र मदाख्यस्य भावस्य शान्तिरङ्गं प्रभुविषयस्य रतिभावस्य ।

**समालोक्यालेख्यस्थितमपि मृगाक्ष्यः फणभृतं,**
**प्रकम्पन्ते धैर्य्यं त्वदरितरुणीनां त्वनुपमम् ।**
**यदेतास्त्वद्धाट्यामधिरजनि यान्त्यः फणभृतां,**
**फणारत्नं हस्तैः पिदधति दृढं वीर विपिने ॥११॥**

---

अत्र रसाभासः प्रभुविषयस्य रतिभावस्याङ्गम् ।

हे नरसिंह राजन् ! त्वां दृष्ट्वा जन्म सफलं जातम् । आदरेण प्राप्तोऽयं युद्धे शत्रुणां समूहः सूच्यते ।

अत्र भावाभासः प्रभुविषयस्य रतिभावस्याङ्गम् ।

हे नरसिंह नरेश ! तव दानं श्रुत्वा निश्चलनेत्रयुक्तराजगजा विश्वस्ताः सन्तः वने विचरन्ति ।

अत्र मदनामकभावस्य शान्तिरङ्गं प्रभुविषयस्य रतिभावस्य । मृगाक्ष्यः कान्ताः स्थितं चित्रितं सर्पं विलोक्य धैर्यं त्यजन्ति । त्वत्शत्रुवधूनां तु विचित्रा वार्ता । याः घाटीं यान्त्यः शोभिताः । सर्पस्य फणारत्नं हस्तेन पिदधति । हे वीरनरसिंह ! तास्तु वने दृढप्रकाशमपि पिदधति ।

---

तुम्हारे शत्रु नरेश की वधुएँ भय में शीघ्र जाती हुई हो गई । हे वीर नरसिंह ! विकल हुए किरात वेग से वन में चले गए । आश्चर्य चकित होकर ठहर गए । अद्‌भुत कार्य करने वाले रोमाञ्चित हो गए । उन बधुओं के ऊँचे स्तनों से चञ्चल कटाक्षों से भी वे अतिक्रमित हो गए ।

इसमें रसाभास है । प्रभु विषयक रति भाव का अङ्ग है ।

हे नरसिंह राजन् ! तुम्हे देखने से जन्म सफल हो जाता है । यह आदर पूर्वक मुझे मिला है । युद्ध में शत्रुओं का समूह सूचित करता है ।

इसमें भावाभास है । जो प्रभु विषयक रति भाव का अङ्ग है ।

हे नरसिंह राजन् ! तुम्हारे दानको सुनकर निश्चल नेत्र वाली राजहस्तियाँ विश्वस्त होते हुए वनो में चारण कर रहे हैं ।

इसमें मद नामक भाव की शान्ति अङ्ग प्रभु विषयक रति भाव से सम्वन्धित है । मृग समान नेत्रों वाली स्त्रियाँ स्थित भी चित्रित सर्प को देखकर धैर्य खो बैठती हैं । तुमसे शत्रु की स्त्रियों की तो विचित्र वात हैं । जो ये तुमसे पृथक् हो घाटी में जाती हुई शोभित हुई । सर्पों के फणारत्न को हाथों से ढकती हैं । हे वीर नरसिंह ! वे वन में फैले हुए दृढ़ प्रकाश को ढकती हैं ।

इह रिपुभूपालभामिनीभयरूपस्य भावस्योदयो नरसिंहनरपतिविषयस्य रतिभावस्याङ्गम् ।

एकाभूत् कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावलि,
जेतुं मङ्गलपालिकेव पुलकैरन्या कपोलस्थली ।
लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहांपश्यतो,
द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥१२॥

अत्र लोलाक्षीप्रेमसमरौत्सुक्ययोः संधिः प्रभुविषयस्य रतिभावस्याङ्गतया स्थितः ।

सौभाग्यं तस्य चित्रं तदधिचपलता कापि मद्वीरलक्ष्म्याः,
पश्यत्सु श्लाघते या रणभुवि नृपतिष्वद्भुतं तद्भुजाय ।
धिग्धातुः प्रातिकूल्यं मयि बलमतुलं तस्य कस्य ब्रवीमी,
त्याचक्षाणो विरोधी श्रयति गिरिवनं श्रीनृसिंह क्षितीन्द्र ॥१३॥

अत्र स्मृतिनिर्वेदमतिचिन्तानां शबलता पूर्ववदङ्गम् । एत एव रसवदादयोऽलङ्काराः ॥

वाच्यस्य सिद्धिहेतुं कृतिनः कथयन्ति वाच्यसिद्धचङ्गम् ॥१४॥

इह शत्रुनरेशस्य पत्नीभयरूपस्य भावस्योदयः । नरसिंहनरपतिविषयस्य रतिभावस्याङ्गम् । कामदेववाणैरिवैका शत्रुनरेशस्य बधूः व्यक्तपुङ्खावलिश्चान्या जेतुं मंगलपालिकेव रोमाञ्चिता । हे वीर ! भवतः प्रौढं घनघोरयुद्धं श्रुत्वा क्षणमात्रं विरहक्लेशेनाभवत् ।

अत्र चञ्चलनेत्रेण प्रेमरणं प्रत्यौत्सुक्यं द्वयोरेव भावसन्धिः । प्रभुविषयस्य रतिभावस्याङ्गतया स्थितः । हे वीर नरसिंह ! ते विरोधिनोऽचलवनमाश्रिताः । विचित्रं सौभाग्यम् । वीरलक्ष्म्याः चाञ्चल्यमनिर्वचनीयम । रणभूमौ पश्यत्सु राजसु रसमदभुतं जनयति । तेषां भुजाः धन्यवादार्हाः। विधातुर्दाक्षिण्यं धिक् । कथं सूचयामि विशालसेनया । इत्युक्तवन्तः विरोधिनो वनमाश्रयिणोऽभवन् ।

अत्र स्मृतिनिर्वेदमतिचिन्ताभावानां शबलत्वमङ्गम् । इमे एव रसवदादयोऽलङ्काराः । वाच्यस्य सिद्धिहेतुं वाच्यसिद्धिहेतुं वाच्यसिद्ध्यङ्गं गुणीभूतव्यङ्ग्यम् ॥

इसमें राज की स्त्री से सम्बद्ध भयरूप के भाव का उदय है । नरसिंह नरपति के विषय के रति भाव का अंग है ।

एक कोई शत्रु वधू कामदेव के वाण के तरकस के तरण रूप स्पष्ट पूंछ समूह वाली है और अन्य जीतने के लिए मंगलपालिका के समान रोमाञ्चित हुई और हे वीर ! आपके प्रौढ़ घनघोर युद्ध को सुनकर क्षण मात्र होने वाले विरह से क्लेश युक्त हो गई ।

इसमें चञ्चल नेत्र से प्रेम और रण के प्रति उत्सुकता दोनों में भाव सन्धि है । प्रभु विषयक रति भाव की अंगिता की स्थिति है ।

हे वीर नरसिंह ! तुम्हारे विरोधी पर्वत वन का आश्रय ले रहे हैं । और सौभाग्य अद्भुत है । उसमें मेरे वीरों की लक्ष्मी की चञ्चलता अनिर्वचनीय है, जो रण भूमि में देखने वाले राजाओं के लिए अद्भुत रस को प्रकट करने वाली उनकी भुजाओं के लिए धन्यवाद है । ब्रह्मा की प्रतिकूलता को धिक्कार है । मेरा

पत्रावलीकवलनान्यरिभूमिपाल, लीलावतीस्तनतटेष्वलमादधाना ।
गङ्गातरङ्गधवलानि यशःपयांसि,दुग्धे धरातिलक वीरतवासिधेनुः ॥१५

अत्रासिधेनोर्धेनुत्वं व्यङ्गयं यशसः क्षीरत्वरूपकलक्षणस्य वाच्यस्य सिद्धिमादधाति । यथा वा—

धाराविषं त्वदसिकालभुजङ्गमस्य, दृष्ट्वा सुदुःसहतरं समरे नरेन्द्राः ।
मूर्च्छां भजन्ति नरसिंहवसुन्धरेश, किंचोद्वहन्ति वपुराश्रितवर्णभेदम् ॥१६

अत्र धाराविषमिति विषशब्देन सलिलमभिधीयते । तस्यैव वाक्यार्थत्वात् । न तावदिदं श्लिष्टशब्दनिवन्धनं परम्परितम् । विषशब्दादाविभवन्त्या गरलार्थप्रतीतेः प्राक्कृपाणस्य फणित्वरूपणासिद्धेः । अत्र हि प्रकरणादिनाभिधाम्भसि नियमिता । अम्भस्तु कृपाण एव संभवति न भुजङ्गमे तस्मादम्भः संभव एव रूपके वाधकं प्रमाणम् । नाप्युपमा । भूजङ्गमेऽम्भः संभवाभावेन साधर्म्याभावात् । विषशब्दस्य श्लिष्टत्वेन साधर्म्यमस्त्येवेति चेत् तर्हि श्लेषःकारणमुपमाया इति वाच्यम् । तच्चविचारविकलम् । कृपाणस्य वाक्यार्थत्वेऽम्भस्यभिधानियमनेन श्लेषस्यैवानुदयात् ।

---

हे वीर राजन् ! तवासिर्धेनुः च स्वच्छो दुग्धयुक्ता क्रमेण । गङ्गतरङ्गनिर्मलानि, यशः जलानि दुग्धयुक्तानि । शत्रुनरेशाणां वधूनां स्तेनाग्रभागाः पत्रावलीयुक्ताः । शोभाधिक्यमासीत् । इहासिधेनोर्धेनुत्वं व्यङ्गयं यशसः क्षीरत्वरूपकलक्षण्स्य वाच्यस्य सिद्धि धारयति । उदाहरणमत्र त्वदसि कालसर्पस्य धाराविषं दृष्ट्वा शत्रुनरेशाः मूर्च्छिताः । हे नरसिंह नरेश ! कि ते शरीराश्रितवर्णभेदमुद्वहन्ति ।

अत्र धाराविषमितिविषशब्देन जलमिति कथ्यते । तस्यैववाक्यार्थत्वात् । न तावदिदं श्लिष्टशब्दनिवन्धनं परम्परितम् । विषशब्दाद्गरलार्थप्रतीतिपूर्वं कृपाणस्य फणित्वरूपणासिद्धेः । इह हि प्रकरणादिनाभिधा जले नियमिता । अम्भस्तु कृपाणेनैव संभवति । न तु भुजङ्गमे । अस्मिन्नेवाम्भःसंभवति । अस्मिन् रूपके बाधकप्रमाणम् । उपमापि नास्ति । भुजङ्गमेऽम्भसःसंभावनाभावेन साधर्म्यस्याभावकारणात् । यदि विषशब्दस्य श्लिष्टत्वं साधर्म्यम् । तदा श्लेषः उपमायाः कारणम् । कृपाणस्य वाक्यार्थत्वेऽभिधायाः नियमनेन श्लेषस्योदयो न भवति ॥

---

अतुलित बल है । उसे कहूँ किससे । ऐसा कहते हुए विरोधी पर्वत के बनों का सहारा लिए । इसमें स्मृति, निर्वेद, मति. चिन्ता भावों की शबलता पूर्ववत् अङ्ग है। ये ही रसवत् आदि अलङ्कार हैं । वाच्य के सिद्धिहेतुता को वाच्य सिद्धयङ्गगुणीभूत व्यङ्गय कहते हैं ।

हे वीर राजन् ! तुम्हारी असि एवं धेनु क्रमशः स्वच्छ एवं दूध युक्त हैं । गङ्गा के तरङ्ग के समान स्वच्छ यश रूपी दूध को देती है । शत्रु नरेश की वधू के स्तन के अग्रभाग पर पत्रावली है । वधू पर्याप्त रूप में धारण करने वाली हुई ।

इसमें असि एवं धेनु में धेनुत्व व्यङ्ग्य हैं । यश का क्षीरत्व रूपक लक्षण वाच्य की सिद्धि को धारण करता है । उदाहरणार्थ—

तुमसे चलती हुई तलवार की धार काल सर्प की जिह्वा रूपी विषवाली है । शत्रु राजा युद्ध स्थल में बहुत विकट देखकर हे नरसिंह नरेश ! मूर्छित हो जाते हैं । और आश्रित वर्ण भेद युक्त शरीर का उद्वहन करते हैं ।

तस्माद्विष शब्देन शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यमहिम्ना गरलं व्यङ्ग्यं कृपाण-भुजङ्गमस्येति रूपकस्य वाच्यस्य सिद्धिं करोतीति वाच्यसिद्ध्यङ्गम्।

यत्र न सदपि व्यङ्ग्यं स्फुटतां भजते तदस्फुटाभिख्यम् ॥१७॥
नृसिंह भूप भवतः संख्यामत्सरिणो गुणाः।
त्रिविक्रमपदैरेव मितमेतज्जगत्त्रयम् ॥१८॥

अत्र यद्यप्यनन्तानां गुणानां त्रिविक्रमपदत्रयमिते जगति समावेशो न घटत इत्यस्ति व्यङ्ग्यं तथापि झटिति न प्रतिभासत इत्यस्फुटम्।

यदि वाच्यं व्यङ्ग्यं वा मुख्यतया निश्चितं न भवेत्।
सन्दिग्धप्राधान्यं तत्तु सुधीभिर्विनिर्दिष्टम् ॥१९॥
त्वामारूढं मदगजपतिस्कन्धमाधूतखड्ग,
च्छायाविद्युद्वलयितभुजं वीक्ष्य युद्धे नृसिंह।
दूरोदञ्चत्पुलकपटलीवर्मिताङ्गस्तुरङ्गे,
दत्ते दृष्टिं विदितरभसैन्यक्तेभः सपत्नः ॥२०॥

---

अत एव विषशब्देन शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यमहिम्ना गरलं व्यङ्ग्यं खड्गभुजङ्गस्येति रूपकस्य वाच्यस्य साधयतीति वाच्यसिद्ध्यङ्गम्।

यत्र व्यङ्ग्यं स्फुटतां न घटते तत्रास्फुटाख्यं गुणीभूतव्यङ्ग्यम्। हे नरसिंह नरेश! भवतो गुणा अगणिताः। भगवता विष्णुना वामनेनेदं जगत् त्रिभिः पदैरेव मितम्।

अत्र यद्यप्यगणितानां गुणानां विष्णुना वामनेन त्रिपदैरेव जगत् मितमिति समावेशो न घटते इत्यस्ति व्यङ्ग्यं तथापि द्रुतं न प्रतिभासत इत्यस्फुटम्।

यदि मुख्यतो वाच्यं व्यङ्ग्यं वा निश्चितं न भवेत् तत्तु सन्दिग्धप्राधान्यं गुणीभूत-व्यङ्ग्यम्। हे नरसिंह नरेश! त्वामधिरूढं मत्तगजराजस्कन्धं विद्युल्लतेव खड्ग-छाया, भुजं युद्धे विलोक्य, तुरङ्गमे पुलकपटलयुक्तकवचधारकमङ्गं दूरमुदञ्चत्। शत्रवो व्यर्थाः। प्रसिद्धबलं प्रति दृष्टिः।

---

इसमें धारा विष में विष शब्द से सलिल कहा जाता है। उसका ही वाक्यार्थत्व कारण है। तब तक यह न श्लिष्ट शब्द निबन्धन परम्परित है। विष शब्द से गरल अर्थ को प्रतीति के पूर्व कृपाण के फणित्व रूपण की असिद्धि है। यहाँ प्रकरण आदि से अभिधा अम्भ में नियमित होता है। अम्भ तो कृपाण से ही संभव होता है। भुजङ्गम में नहीं। इसमें अम्भ संभव है। इस रूपक में बाधक प्रमाण है। उपमा भी नहीं है। भुजंगम में अम्भ की संभावना के अभाव से साधर्म्य का अभाव होना कारण होता है। यदि विष शब्द के श्लिष्टत्व से साधर्म्य होता है, तो श्लेष उपमा का कारण है, ऐसा वाच्य होगा। वह भी विचारणीय नहीं है। कृपाण के वाक्यार्थत्व में अम्भ की अभिधा नियमन से श्लेष का ही उदय नहीं होता है।

अतः विष शब्द से शब्दशक्तिमूल अनुरणन रूप व्यङ्ग्य महिमा से गरल व्यङ्ग्य है। कृपाण भुजङ्गम का रूपक वाच्य की सिद्धि करता है। इस प्रकार काव्य-सिद्ध्यङ्ग है। जहाँ व्यङ्ग्य स्फुटत्व को प्राप्त नहीं करता हैं. बहाँ वह अस्फुट नामक गुणीभूत व्यङ्ग्य होता है।

हे नरसिंह राजन् ! आप के गुणी की संख्या अगणित है। भगवाद् विष्णु के वामन रूप के पदों द्वारा यह संसार तीन पग से नाप लिया गया।

यहाँ यद्यपि अनन्त गुणों वाले विष्णु वामन रूप से तीन पदों में संसार को नापने में समावेश नहीं घटता है। यह व्यङ्ग्य है। तथापि शीघ्र प्रकट नहीं होता है। अतएव अस्फुट है।

यदि वाच्य अथवा व्यङ्ग्य काव्य का निश्चित नहीं होता है, तो उसे संदिग्ध प्राधान्य गुणीभूत व्यङ्ग्य कहते हैं।

हे नरसिंह ! युद्ध में आरूढ मत्त गजराज के स्कन्ध सदृश आप की पूर्णतया स्वच्छ तलवार की छाया विजली जैसी तेज चमकती भुजा को देखकर घोड़े पर पुलक, पटल युक्त कवच धारण करने वाला अंग दूर हुआ। शत्रु व्यर्थ हुए। प्रसिद्ध दृष्टि रही।

---

These Cases are given in a general meaning; (Rasvat, Preya, ūrjsvi, samāhita, Bhāvodaya, Bhāvaśānti, Bhāvaśabalatā etc or Aparānga Vyaṅgya).

3—Cases in which a suggested meaning helps the connoted meaning of the sentence; it is Called the case of ( Vācya-sidhyanga ).

In explaining the case of ( Vācyasidhyanga ) Vidyādhara has brought his scholarship into full play, because his logical insight is as great as that of Mammaṭa Both Mammaṭa and Vidyādhara have adduced as arguments that do not differ in any detail.

4–( Asfuṭvyaṅga )–Cases in which the suggested meaning does not dawn upon the mind immediately providing an oppoɪt-unity to the connoted meaning to become predominant, are ( Asfuṭvyaṅga).

5–If the suggested meaning and the connoted meaning are not particularly certain, it is a case of ( sandigdha Prādhānyam ) doubtful primacy.

अत्र वेगवत्तरतुरङ्गावलोकनेन किं पलायितुमचकमतेति व्यङ्ग्यं प्रधानं किं वा दत्ते दृष्टि तुरङ्ग इति भयानुभावरूपं वाच्यं प्रधानमिति सन्दिग्धम् ॥

**यस्मिन्ननयोः साम्यं तुल्य प्राधान्यमिष्यते तदिदम् ॥२१॥**

**अस्पृष्टाज्जनसम्पदः स्मृतिपथावस्थायिलीलास्मिताः**
**प्रत्याख्यातवतंसदामरचनास्त्यक्ताङ्गरागश्रियः ।**
**दूरोद्धूतकुरङ्गनाभिमकरी भङ्गास्तरङ्गभ्रुवः,**
**संजाता नरसिंह पार्थिव भवत्प्रत्यर्थिपृथिवीभुजाम् ॥२२॥**

अत्ररिपुनृपकान्ताकर्तृकस्याज्जनस्पर्शाभावरूपस्य कार्यस्य वाच्यस्यारिनरपतिमरणरूपस्य कारणस्य व्यङ्गयस्य च समं प्राधान्यम् ।

**आक्षिप्तं यत् काक्वा काक्वाक्षिप्तं तदाख्यातम् ॥२३॥**

**सर्वार्थिनामर्थितपूरणार्थम्, परिस्फुरत्त्यागमहोत्सवेऽत्र ।**
**त्वयि स्थिते वीर नृसिंहभूप न लज्जते सम्प्रति पारिजातः ॥२४॥**

अत्र लज्जत एवेति व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् ।

---

इह वेगवत्तराश्वविलोकनेन किं पलायितुं प्रकाश्यते । न व्यङ्गयं प्रधानं किं वा दृष्टिं दत्ते तुरङ्ग इति भयानुभावरूपं वाच्यं प्रधानमिति सन्दिग्धम् ।

यत्र कार्यकारणयोः समत्वं तत्र व्यङ्ग्यं तुल्यप्रधान्यं गुणीभूतव्यङ्ग्यम् ॥ हे नरसिंहनरेश ! शत्रुनरेशाणां वधूनामीदृशी दशाभवत् । शत्रुनरेशाणां मरणमभवत् । ताभिः अञ्जनसम्पदः न स्पृष्टाः स्मरणपथेऽपि न लीलास्मिताः अङ्गरागश्रियः त्यक्ताः । तरङ्गभ्रूवभङ्गाः दूरोद्धतकुरङ्गनाभिमकरी ।

अत्र शत्रु नृपतिवधूकर्तृकस्याञ्जनस्पर्शाभावरूपस्य कार्यस्य वाच्यस्य शत्रुनरेशाणां मरणरूपस्य कारणस्य व्यङ्ग्यस्य च प्रधानतया समत्वम् । काक्वाक्षिप्तं गुणीभूतव्यङ्ग्यं तत्र भवति यत्र काक्वा ध्वनितार्थो भवति ।

हे वीर नरसिंह नरेश ! पारिजातोऽधुना न लज्जते त्वयि स्थिते सर्वेषां याचकानां याचितार्थम् पूरणमप्यत्र त्यागमहोत्सवे ।

इह लज्जते एवेति व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् ॥

---

यहाँ वेगवत्तर तुरङ्ग के अवलोकन के प्रकाशन से व्यङ्ग्य प्रधान है क्या ! अथवा दृष्टि देने पर तुरंग से भय के अनुभाव रूप वाच्य प्रधानता में संदिग्धता है ।

जहां कार्य कारण दोनो की समता रहे; ऐसे व्यंग्यको तुल्य प्राधान्य गुणीभूत व्यंग्य कहेंगे । न स्पर्श करती हुई अञ्जन की सम्पत्तियाँ, स्मरण पथ में अस्थायी लीला से युक्त मुस्कराहट, प्रसिद्ध अस्वीकृत श्रेष्ठ आभूषणों की रचनाएँ, छोड़े गए अंगराग की शोभा, दूर से उठी हरिण की नाभी समान टूटे तरंग की भौंहों वाली शत्रु वधुएँ हैं । हे नरसिंह नरेश ! आप के शत्रु नरेशों की वधुओं की ऐसी दशा हो गई । शत्रु नरेशों का मरण हो गया ।

इसमें शत्रु राजा के मरण रूप कारण व्यंगय की प्रधानता में समानता है । जहाँ काकु वाणी से ध्वनित अर्थ हो, वहाँ काक्वाक्षिप्त गुणीभूत व्यंगय होगा ।

यद्भजति न सौन्दर्यम् तदसुन्दरमीरितं सद्भिः।
इत्थममुष्य भिदाष्टकमुट्टङ्कितमेतदस्माभिः ॥२५॥
अयज्ञः स्वर्लोकः सुकृतमतपः क्लेशसुभगं,
सुधासारोऽनभ्रः फलमकुसुमश्रीसहचरम् ।
अशौर्यम् साम्राज्यं निधिरखननायाससुलभो,
नृसिंह क्षोणीन्द्रो नयनपथमस्माकमगमत् ॥२६॥

इह निरतिशयसुखजनकत्वरूपं कारणं व्यङ्ग्यं सदपि न सौन्दर्यमावहति ।

उत्तिष्ठ कन्दखननाय गृहाण चापं गाहस्व काननमिति प्रहितोऽपि बध्वा ।
आकारितोऽपि सहकेलिसखैः किरातैरद्रेर्न वीर विजहाति दरीमरिस्ते ॥२७॥

अत्र त्वच्चापविलसितस्मरणजनितं भयमात्रं प्रतीयते । तस्य किमपि सौन्दर्यं न प्रतिभासत इत्यसुन्दरम् ।

इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलङ्कारशास्त्रे गुणीभूतव्यङ्ग्यनिरूपणं नाम चतुर्थ उन्मेषः

---

यत्र व्यङ्ग्यस्य सौन्दर्यं न भवति, तत्रासुन्दरं नामकं गुणीभूतव्यङ्ग्यं भविष्यति । एवंविधाः अष्टभेदाः एकावलीकारेण वर्णिताः ।

यज्ञेन विना स्वर्लोकं प्रापकः यशस्वी तपसा विना, दुःखेन विना सौभाग्यशाली, मेघेन विनामृतत्वयुक्तः, पुष्पेण विना फलयुक्तः, नरसिंहनरेशोऽस्माभिः दृष्टः लक्ष्म्या सह मित्रत्वयुक्तः पराक्रमेण विना साम्राज्यवादी उत वनेन विनासायसेन विधियुक्तः ।

अत्र निरतिशयसुखोत्पादकत्वरूपस्य कारणस्य व्यङ्ग्येऽपि सौन्दर्यं न भवति ।

हे वीर नरसिंह ! कन्दखननायोत्तिष्ठ, गृहाण चापं, वनं सेवध्वं, इतिप्रत्याहूतोऽपि शत्रुबध्वा किरातैः केलिसखैःसह तव शत्रवोऽचलकन्दरां न त्यजन्ति ।

अत्र त्वच्चापविलासस्मरणजनितं भयमात्रं प्रतीयते । यस्य किमपि सौन्दर्यम् न प्रतिभासते । असुन्दरमिति नाम गुणीभूतव्यंग्यम् ।

एकावलीसरलाख्याटीकायां चतुर्थोऽध्यायः ।

---

यहाँ सभी याचकों की याचना पूरी करने के लिए परिस्फुरित (त्याग) दान महोत्सव में तुम्हारे स्थित होने पर हे वीर नरसिंह नरेश ! पारिजात वृक्ष इस समय लज्जित नहीं होता हैं।

इसमें लज्जित होना ही व्यंग्य है। वाच्य निषेध दोनों के सहकारी भाव से स्थित है।

जहाँ व्यंग्य का सौन्दर्य न हो; वहाँ असुन्दर नाम का गुणीभूतव्यंग्य होगा। इस प्रकार इसका आठ प्रकार का भेद एकावलीकार द्वारा कहा गया है।

विना यज्ञ के स्वर्गलोक को प्राप्त करने वाले तप रहित यशवाले, दुःख बिना सौभाग्यवाले, बिना मेघ के अमृतत्व से युक्त, बिना खने ही अनायास प्राप्त खजानेवाले नरसिंह नरेश हम लोगो द्वारा देखे गए।

यहाँ निरतिशय सुखोत्पादकत्वरूपकारण व्यंग्य होने पर भी सौन्दर्य नहीं होता है।

कन्दमूल खनने के लिए उठो, धनुष धारण करो। वन का सेवन करो। ऐसे कहती हुई शत्रुवधू द्वारा बुलाई जाती हुई भी क्रीड़ायुक्त किरातों के साथ तुम्हारे शत्रु हे वीर नरसिंह पर्वत की कन्दरा को नहीं छोड़ते हैं।

इसमें तुम्हारे धनुष वाण के स्मरण से उत्पन्न भय मात्र की प्रतीति होती है। उसकी भी कोई सुन्दरता प्रतिभासित नहीं है। अतः असुन्दर नामक गुणीभूत व्यंग्य है।

एकावली का चतुर्थं अध्याय समाप्त।

---

6–The cases of equal importance are called the case of (Tulya Prādhānya Guṇibhūtavyanga), as the causes of the suggested meaning ( connoted meaning causing the suggested meaning ), and ( the suggested meaning resulting from such cases are equal in importance.

7–Where the guttural sounds become a means of establishing the suggested meaning, they are the cases of (Kakvāchipta Guṇī bhūtavyanga ). In these cases the suggested meaning remains secondary, because in this kind of mechanical device the force of words acquires a causative nature in yieding a suggested meaning.

8–The last subclass of this type of subordinate suggested meaning is called (Asundar) or plain, because its appeal is negligible; or too ordinary to be considered remarkable; and further because it does not lead to those depths of aesthetic pleasure that determine the superior position of suggested meaning in poetry. As for example the feeling of terror Caused by memory and not by perception aided by helping emotions.

# अथ पञ्चम उन्मेषः

अङ्गिनि रसे स्थिता ये विभ्रत्युत्कर्षहेतुतां सततम् ।
आत्मनि शौर्यादवइव ते नामैते गुणाः कथिताः ॥ १ ॥

आत्मनि शौर्यादय इव समबायंबृत्याङ्गिनि रसे स्थिताः सन्त उत्कर्षहेतवो भवन्ति माधुर्यादयो गुणाः । अलङ्कारास्तु हारादय इव कण्ठादीनां संयोगवृत्या वाच्य-वाचकरूपाणामङ्गानामतिशयमादधाना रसमुपकुर्वन्ति । अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यते ।

---

अथ पञ्चमोऽध्यायः, एकावलीसरलाख्याटीकायाम् ।

आत्मनि शूरत्वादीव गुणाःएतेऽभिधीयन्ते, येऽङ्गिनि रसे सर्वदोत्कर्षनिमित्ततां शोभन्ते । आत्मनि शौर्यादय इव समवायवृत्त्या काव्यस्याङ्गिनि रसे स्थिता उत्कर्ष-धायका माधुर्यादयो गुणाः । अलङ्कारास्तु हारादय इव कण्ठादीनां संयोगवृत्त्या वाच्य-वाचकरूपाणामङ्गानामतिशयेन शोभावृद्धिं कुर्वन्तो रसोपस्कारका भवन्ति । अत एव माधुर्यादयो रसस्य धर्माः समुचितैर्वर्णैरभिव्यज्यन्ते ।

---

अब पाँचवें अध्याय का आरंभ होता है ।

आत्मा में स्थित शूरता आदि के समान नाम वाले गुण कहे जाते हैं, जो अंगी-रस में रहते हैं और सर्वदा उत्कर्ष की निमित्तता को शोभित करते हैं ।

आत्मा में स्थित वीरता आदि गुणों की भाँति समवाय वृत्ति से काव्य के अंगी रस में स्थित होते हुए उत्कर्षाधायक माधुर्य आदि गुण होते हैं । अलङ्कार तो हार आदि के समान कण्ठ आदि में संयोग वृत्ति से वाच्य वाचक रूप अंगों की शोभा वर्द्धन करते हुये रस के उपस्कारक होते हैं । इसीलिये माधुर्य आदि रस के धर्म समुचित वर्णो के साथ व्यञ्जित होते हैं ।

---

Chapter V

Just as valour residing in the soul establishes its excellence, similarly certain qualities in poetry bring out its excellence and add to the aesthetic pleasure.

The difference between these excellences and figures of speech. is this :—Excellences inhere in suggested sentiments; where as figures of speech are not of the same essence and are added as something extraneous, so that poetry in general does not neces-ariiy require them, for a greater appeal where as it does require these excellences for such appeal e. g. (Mādhurya) or sweetness inheres in the erotic poetry.

यथा प्रांशुतममवलोक्याशूरेऽपि शूरोऽयमिति शूरत्वबुद्धिं विदधत्यविश्रान्त-बुद्धयस्तथा मधुरादिरसधर्मंव्यञ्जकत्व दर्शनात् सुकुमारेषु वर्णेष्वपि माधुर्यादि-व्यवहरन्ति। वस्तुस्तु रसस्य धर्मा गुणाः गुणालङ्काराणां समवायवृत्या स्थितिरिति गडरिका प्रवाहेण।

युवतेरिव रूपमङ्गकाव्यं, स्वदते शुद्धगुणं तदप्यतीव,
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ॥२॥

---

यथा दीर्घं मनुष्यं दृष्ट्वा भीरुरयं वीरो दृश्यते। इति वीरत्वबुद्धिं धारयति। एवम् विश्रान्तबुद्धयः स्युः। तथापि समवायवृत्या स्थितिः। गतानुगतिरन्धपरम्परेति।

अङ्गकाव्यं युवतेरिव रूपं शुद्धं गुणं स्वदते। तथाप्यलङ्कारविकल्पनाभिर-लङ्कारविशेषसृष्टिभिर्विहितप्रणयं कृतसख्यं तद्युक्तम्।

---

जैसे ऊँचे से ऊँचे व्यक्ति को देखकर डरपोक होने पर भी वीर यह है, ऐसी वीरत्व बुद्धि होती है। इस प्रकार की अविश्रान्त बुद्धि होती है। वैसे माधुर्या-दिगुणों का व्यवहार होता है। वास्तव में तो रसर का धर्म, गुण, गुण एवं अलङ्कारों की समवाय वृत्ति से स्थिति है। इस प्रकार गतानुगतिक रूप से होता हैं।

युवती के सदृश रूप से अङ्ग काव्य का स्वादन शुद्ध गुण का होता है। तिस पर भी अति संयुक्त प्रणय निरन्तर अलङ्कार विकल्प की कल्पनाओं द्वारा सम्पन्न होता है।

---

Excellences arc directly related to sentiments, where as figures of speech first of all embellish the word and the meaning and then only secondarily and through their meaning and through the word and meaning embellish the sentiment sought to be suggested. Therefore these excellences such as sweetness, perspi· cuity are the essential qualities af sentiments and they are expressed through the suggestive power of the latter sounds. These excellences are secondarily taken to belong to the latter sounds which are expressive of them.

यदि भवति वचश्च्युतं गुणेभ्यो, वपुरिव यौवनबन्ध्यमङ्गनानाम्,
अपि जनदयितानिदुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥३॥

इति भोजः । "काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः" इति वामनोऽप्याह । तन्नविचारितरमणीयम । तथा हि यद्येते काव्यव्यवहारप्रयोजकीभवन्तः संभूय काव्यव्यवहारं प्रयोजयन्ति तदानीमसमग्रगुण योर्गौडीपाञ्चाल्योः काव्यानात्मत्वप्रसङ्गः ।

---

यदि गुणोभ्यो वचश्च्युतं भवति यदा यौवनरहितायाः युवतेः शरीरं, पुरुषाणां कारणमपि प्रियं खलु वैभवहीनत्वरूपेणाश्रितम् । इति तु भोजराजेनाभिहितम् ।

वामनेन कथितं यत् काव्यस्य शोभावर्द्धनाय गुणा भवन्ति । तदतिशयित्वं तु हेतुत्वमलङ्काराः । तत्रापि विचारविकलम् । तद्यथा यदि काव्यप्रयोजनान्येतानि स्युस्तर्हि गौणीपाञ्चालीवृत्त्योर्गुणयोरसमग्रयोः काव्यस्य तात्त्विकतत्वं भवेत् ।

---

यदि गुणों से वचनच्युत होता है, जैसे यौवनरहित स्त्रियों का शरीर । पुरुषों के प्रिय कारण भी निश्चित ऐश्वर्य हीनता रूप में आश्रित होते हैं । यह भोजराज द्वारा कहा गया मत है ।

काव्य की शोभा को बढ़ानेवाला धर्म गुण है; उनका अतिशय हेतु तो अलङ्कार है । यह वामन ने भी कहा है । वहाँ भी विचार करना सुन्दर नहीं है । वैसे कहा गया कि यदि ये काव्य व्यवहार के प्रयोजन हों तो अपूर्ण गुण गौणी और पाञ्चाली के काव्य की अतात्त्विकता होती है ।

---

Bhojarāja has justly argued that in absence of these excellences poetry loses its charm even though it be full of the figures of speech exactly like thc beauty of an old woman inspite of a thousand decorations loses its appeal; if the woman were wanting in equalities likc sublimity grandeur etc.

Vāmana too has said that beauty of poetry essentially results from these excellences where as figures of speech only heighten its beauty. However, the arguments of both are less than Conclusive, because of these excellences which are traditionally numbered at ten are found in (Vaidarbhī) style only,

अथ कतिपये तदा गुणमात्रसंभवेऽपि काव्यव्यवहारप्राप्तिः । तस्मादलङ्कार एव काव्यव्यवहारप्रयोजकः । गुणस्तु वस्तुतोऽस्त्येव तस्य रसधर्मत्वात् । किन्त्वलङ्कारस्तं नापेक्षते ततस्तत्कृताशोभैव नास्ति कुतस्तरां तदतिशयोऽलङ्कारजन्य इति ॥

संक्षेपेणाधुना लक्ष्मगुणानां प्रणिगद्यते ।
आनन्दस्यन्दिता तज्ज्ञैर्माधुर्यमभिधीयते ॥४॥

---

अधुना कतिपये गुणमात्रोत्पन्नेऽपि काव्यव्यवहारस्य प्राप्तिर्भवति । अत एवालङ्कार एव काव्यव्यवहारे प्रयोजकीभूतः । वस्तुतस्तु गुण एवास्ति । यतो रसधर्मत्वात् । किन्तु तद्गुणस्यापेक्षालङ्कारो न करोति । ततस्तत्कृताशोभैव न भवति । तत्र कुतस्तदतिशयोऽलङ्कारजनितः इति ।

साम्प्रतं संक्षेपेण गुणानां लक्षणं कथ्यते माधुर्यगुण आह्लादयुक्तः ।

---

अब कतिपय गुण मात्र उत्पन्न होने पर भी काव्य व्यवहार की प्राप्ति होती है । अतः अलङ्कार ही काव्य व्यवहार में प्रयोजक है । गुण तो वास्तव में है ही । क्योंकि उसके द्वारा की गई शोभा ही, नहीं होती हैं, तब कहाँ से उसका अतिशय अलङ्कार से उत्पादन होगा ?

अब संक्षेप में गुण के लक्षण कहे जाते हैं । मधुर्य गुण आह्लाद से युक्त होता हैं ।

---

If all the beauty of poetry essentially results from these excellences, then abviously poetry of (Vaidarbhī) style should be taken to be the best type of poetry; because all the ten excellences are essentially and simultaneously present in (Vaīdarbhī) style and poetry of other style like (Panchālī) and (Gauṇī) should be taken to be insipid or bad poetry; because only a few of these excellences are essentially present in these two styles. But no Conoisseur of poetic art will be persuaded to believe in such absurd argument, because in quite a number of cases it is seen that poetry of (Pān·halī) style is better than poetry of the other two styles i. e. (Vaidarbhī) and (Gauṇī). Therefore the numbers of poetic excellences is not determined by the relevance of good or bad poetry. It is the sentiment and the means employed in suggesting that sentiment that determine, whether a piece of composition is good or bad. Poetic excellences will be essentially present according to the nature of the sentiment; no matter what the number is, Style (Rīti) is, not the soul of poetry, though we agree that poetic excellences inherring in all sentiments add to the charm of poetry.

Sweetness is that excellence which leads to the highest amount of interrupted asthetic pleasure.

सम्भोगे करुणे विप्रलम्भे शान्ते च तत् क्रमात् ।
काष्ठां पुष्यति चितस्य विलीनत्वमिवार्पयत् ॥५॥
ओजो दीप्त्यात्मविस्तारकारणं परिकीर्तितम् ।
क्रमेण वीरबीभत्सरौद्रेष्वेतत् प्रकर्षति ॥६॥
किं च भग्नमनोवृत्तिस्वभावेऽपि भयानके ।
दीप्तत्वेन विभावस्य भजत्योजः परां भुवम् ॥७॥
यश्चित्तं व्यश्नुतेऽह्नाय शुष्केन्धनमिवानलः ।
स प्रसादो मतः सर्वरससाधारणस्थितिः ॥८॥
श्लेषः समाधिरौदार्यमपि स्वीकृतमोजसा ।
अर्थव्यक्तिः प्रसादाच्च कथंचिन्नातिरिच्यते ॥९॥
समता दोषराहित्यमात्रं स्यान्न पुनर्गुणः ।
सौकुमार्यं च कान्तिश्च भवेद्दोषविपर्ययः ॥१०॥

---

माधुर्यगुणः सम्भोगे विप्रलम्भेश्रृङ्गारे, करुणे तथैव शान्ते च रसे क्रमेणोपलब्धः । माधुर्यगुणस्तु चित्तं द्रवीकरोति । ओजगुणः प्रज्ज्वलनरूपो भवति । आत्मविस्तार-कारणम् । क्रमेणायं वीरवीभत्सरौद्ररसेसु प्रकर्षेण समुपलभ्यते । किन्तु गुणोऽयं वीर-रसे नास्ति । प्रत्युत भयानकरसेऽपि दृष्टिगतोऽस्ति । ओजसि विभावस्योद्दीपनं भवति । शुष्केन्धनमिवाग्निः प्रसरति तथैव प्रसादगुणः समस्तेपु रसेपु श्रृङ्गारादिषु साधारणतः स्थितः । चित्ते व्याप्नोति ।

श्लेषः समाधिरौदार्यमपि स्वीकृतमोजसा च समर्थितम् । अर्थव्यक्तिः प्रसादाच्च-कथं नातिरिच्यते । समता दोषराहित्यमात्रं न पुनर्गुण; स्यात् । सौकुमार्यं च कान्तिश्च उभयोऽपि दोपविपर्ययः ।

---

माधुर्य गुण संभोग एवं विप्रलम्भ श्रृङ्गार करुण तथा शान्त रस में क्रमशः उपलब्ध होता है । यह चित्त कों द्रवीभूत करता है । ओज गुण प्रज्ज्वलन रूप है, जो आत्मा के विस्तार का कारण होता है । यह क्रमशः वीरवीभत्स तथा रौद्र रस में अधिक होता है । यह गुण वीर रस में ही नहीं, परन्तु भयानक रस में दृष्टिगत होता है । ओज में विभाव का उद्दीपन होता है ।

जैसे सूखे ईन्धन में अग्नि फैल जाती हैं, वैसे ही प्रसाद गुण की सभी रसों श्रृङ्गार आदि रस में साधारणतः स्थिति होती है, जो चित्त में फैल जाती है ।

श्लेष, समाधि, औदार्य गुण भी ओज गुण से अङ्गीकृत है एवं समर्थित है। अर्थव्यक्ति प्रसादगुण से भिन्न नहीं है ।

समता दोष हीनता मात्र है । यह गुण में नहीं है । सौकुमार्य और कान्ति दोनों गुण दोष के विपर्यय है ।

पदानामेकपदवद्भासमानत्वं श्लेषः । आरोहावरोहक्रमरूपः समाधिः । विकटत्वमौदार्य्यम् । एषामन्तर्भाव ओजसि । झटित्यर्थप्रतिपत्तिहेतुरूपार्थव्यक्तिः प्रसादान्नापरा । मार्गाभेदरूपा समता दोषाभावमात्रं न गुणः । अपारुष्यरूपं सौकुमार्यं श्रुतिकटुकस्य दोषस्य विपर्य्ययः । पदानामौज्ज्वल्यरूपांकान्तिर्ग्राम्यस्य ।।

त्रीनभिधाय गुणान् वयमधुना रीतीः प्रचक्ष्महे तिस्रः ।
वैदर्भीपाञ्चालीगौडीयेत्यत्र संक्षेपात् ।।११।।
अकृतसमासस्पर्शा समग्रगुणगुम्फितादिमा तत्र ।
एकैव जयति रीतिर्विदलितवीणाभिमानसर्वस्वा ।।१२।।

ओजः कान्तिविहीनामाहुः श्लथसंधिबन्धुरां कवयः ।
पञ्चषपदसमुदञ्चल्ललितसमासांच पाञ्चालीम् ।।१३।।
ओजः कान्तिकरम्बितसकलोद्धतपदविराजितां बृत्ति ।
विभ्राणा रीतिज्ञै गौंणीया रीतिराम्नाता ।।१४।।

---

गुणः श्लेषः पदानामेकपदवद्भासमानत्वं भवति । आरोहावरोहक्रमरूपः समाधिर्गुणोऽस्ति । विकटतोदारता । एतेषामोजगुणेऽन्तर्भावः । शीघ्रार्थसिद्धिहेतुरूपावबोधिकार्थव्यक्तिः प्रसादगुणाद्भिन्नो न भवत्ययं गुणः । मार्गाभेदरूपा समता गुणो न मन्यते । दोषाभावोऽस्ति । श्रुतिकटुकदोषस्य विपर्य्ययोऽपारुष्यं सौकुमार्यं गुणोऽस्ति । ग्राम्यत्वदोषस्य परित्यागेन पदानामौज्ज्वल्यरूपा कान्तिः । माधुर्यौजप्रसादगुणान् त्रीनभिधायाधुना रीतीः वयं कथयिष्यामः । एताः संक्षेपाद्वैदर्भीपाञ्चालीगौडीयारीतयः सन्ति । समासरहितासमग्रगुणयुक्ता वैदर्भीरीतिः प्रमुखा वीणाभिमानदलनसमर्थैव । पाञ्चालीरीतिस्तु ललितसमासोपेता । ओजकान्तिविहीना सूक्ष्मसन्धिपञ्चपदानां समूहस्य समासेन संयुक्ता । ओजकान्तियुक्ता सम्पूर्णपदेनसंयुक्ता सुसज्जिता वृत्तिकगौडीया रीतिर्भवति ।।

---

पदों के एक पदवत् भासमानता श्लेष गुण होता है। आरोह अवरोह रूप समाधि गुण होता है। विकटता उदारता है। इसका ओजगूण में अन्तर्भाव होता है। तुरन्त अर्थ सिद्धि हेतु रूप अर्थ व्यक्ति नामक गुण प्रसाद गुण से भिन्न नहीं है। मार्ग भेदरूप समता को गुण नहीं माना जा सकता। यह दोषाभाव है। श्रुतिकटु दोष का उल्टा अपारुष्य रूप सौकुमार्य गुण हे। ग्राम्यत्व दोष के परित्याग से पदों का औज्ज्वल्यरूपक्रान्ति गुण है। माधुर्य, ओज तथा प्रसाद तीन गुणों को कहकर हम अब तीन रीतियों को कहेंगे। यहाँ संक्षेप में ये वैदर्भी, पाञ्चाली तथा गौडीया रीतियाँ हैं। समासरहित, समग्रगुण से युक्त एक ही वैदर्भी रीति वीणाभिमान को नष्ट करने वाली सर्वश्रेष्ठ एवं प्रमुख है। ओज, कान्ति से विहीन सूक्ष्म सन्धि से युक्त पांच पदों के समूह के समास युक्त ललित समास वाली पाञ्चाली

**एतासामेव साङ्कर्य्याद्भवन्त्यावन्तिकादयः ।**
**पार्थक्येन ततोऽस्माभिर्नाभ्यधीयन्त ताः पुनः ॥१५॥**

तल्लक्षणं राज्ञोक्तम् । यथा—

**अन्तराले तु पाञ्चालीवैदर्भ्योर्यावतिष्ठते ।**
**सावन्तिका समस्ता स्याद् द्वित्रैस्त्रिचतुरैः पदैः ॥**
**समस्तरीतिव्यामिश्रा लाटीया रीतिरुच्यते ।**
**पूर्वरीतेरनिर्वाहात् खण्डरीतिस्तु मागधी ॥१६॥**

दर्शनान्तरे त्वेता वैदर्भीपाञ्चालीगौडीयाचेति तिस्रो रीतयो मधुरमध्यमपुरुषवर्णारब्धत्वान्मधुरा मध्यमा पुरुषा चेति वृत्तयो रसविषयव्यापारत्वेन कथ्यन्ते। यदुक्तमलङ्कारसर्वस्वकारेण। "वृत्तिस्तु रस विषयो व्यापारः इति ॥"

इति श्रीमतोमहामोहश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रे गुणनिरूपणं नामपञ्चम उन्मेषः ।

---

एतासां साङ्कर्यगतिभेदेनावन्तिकादयो रींतयोऽपि पुनस्तु पृथग्रूपेण न वर्णिताः। भोजराजेन कृतं तल्लक्षणं दर्शनीयम् । यथा –

पाञ्चालीवैदर्भीरीत्योर्मध्येऽवस्थिताऽवन्तिका द्वित्रैस्त्रिचतुर्भिः पदैः संयुक्ता समस्ता । समस्तरीतिसंयुक्ता लाटीयारीतिस्तु कथिता । पूर्वरीतेरनिर्वाहात् खण्डरीतिस्तु मागधीरीतिः । अन्येषां काव्यशास्त्रज्ञानां मते त्वेताः वैदर्भीपाञ्चालीगौडीयारीतयः सन्ति । याः, क्रमेण मधुरमध्यमपरुषवर्णैः प्रारभ्यमाणेन मधुरा मध्यमा परुषा भवन्ति । वृत्तिरसविषयको व्यापारः । अलङ्कारसर्वस्वकारेणोक्तम् ।

इति एकावलीसरलाटीकायां पञ्चमोऽध्यायः ।

---

रीति होती है । गौंडीया रीति वह है, जो ओज कान्ति युक्त उद्धत पद से शोभित वृत्ति वाली होती है ।

सांकर्यगति भेद से अवन्तिका आदि रीतियाँ भी हैं, जो पुनः उन्हें पृथक् से हमारे द्वारा नहीं कही गई हैं ।

राजा भोजराज द्वारा कहा गया लक्षण देखें । उदाहरणार्थ –

पाञ्चाली एवं वैदर्भी दोनो के मध्य में जो अवस्थित है, वह अवन्तिका दो, तीन चार पदों से युक्त समास वाली होती है । पूर्व रीतियों के निर्वाहन होने से खण्डरीति तो मागधी रीति है । दूसरे काव्य शास्त्रियों के मत में तो ये तीन वैदर्भी पाञ्चाली तथा गौडीया रीतियाँ हैं, जो क्रमशः मधुर, तथा परुष वर्ण से प्रारम्भ होने से मधुरा, मध्यमा तथा परुषा वृत्तियाँ रस विषयक व्यापार के कारण कहो जाती है । इस सम्बन्ध में अलंकार सर्वस्वकार रुय्यक ने कहा है । (वृत्ति तो रस विषयक व्यापार हैं )

एकावली में गुण निरूपण नामक पाँचवाँ अध्याय समाप्त हुआ ।

It is found in the erotic, pathetic, the love of grief and the quietistic sentiments. It amounts in the ascending order,

Florridity inheres in the heroic, the abhorrent, and the furious sentiment. Perspicuity or lucidity is present in each of the nine sentiments.

The number of excellences are only three and not ten as propounded by Vāmana and Bhojarāja; because what they have-termed as (ślesa), (samādhi) and (Audārya) are nothing but other names for floridity (Arthavakti) and perspicuity are mere synonymous, (samatā) is not an excellence at all because ( samatā ) is merely the absence of blemishes and a negation having no reference, can not be taken for a positive quality and what they—have termed (saukumārya) and (Kānti) are nothing but deterrent of blemishes and not positive qualities.

On this score vidyādhara has given thc same arguments as has Mammaṭa in his (Kāvya Prakāś) wlthout adding any new argument of his own, A few scholars have given a new name to style and this new name is (vritti).

Ruyyaka is correct in rejecting their views, because ( vrittis ) are a type of mental activity pertaining to the suggestion of sentiment. They have, therefore, no claim to the position of style,

# अथ षष्ठ उन्मेषः

**न विधेयप्राधान्यं वृत्तिर्वक्तुं प्रगल्भ्यते यस्मात् ।**
**अविमृष्टविधेयांशस्तस्मादस्यामुदीर्यते दोषः ॥१॥**

परस्परसव्यपेक्षप्रधानोपसर्जनभावापन्नविध्यनुवादरूपावयवद्वितयशालि तावद्वाक्यम् । अज्ञातज्ञापनं विधिः । प्रमाणान्तरसिद्धस्य पदार्थस्य प्रयोजनान्तरेण स्वरूपकीर्तनमनुवादः । यथा गौरयं पदा न स्प्रष्टव्य इत्यत्र गौरयमित्यनुवादभागः पदा न स्प्रष्टव्य इति हि विधीयते । अत्र च विधेयस्यार्थस्य प्राधान्यमनुवाद्यस्य पुनरप्राधान्यम् । स चायं विधेयानुवाद्ययोः प्रधानोपसर्जनभावो वाक्यात् प्रतीयते न वृत्तेः । वृत्तिमासाद्य प्रधानोपसर्जनभावस्य निमज्जनप्रसङ्गात्—

अथ षष्ठोऽध्यायः एकावलीसरलाटीकायाम् ।

येन विधेयप्राधान्यं नास्ति, सोऽविमृष्टविधेयांशः पदवाक्यगतभेदेन द्विविधः । कृत् तद्धितसमासाश्च तिस्रः वृत्तयः ।

परस्परसापेक्षोपसर्जनभावात् विध्यनुवादरूपावयवद्विशालि तावद्वाक्यम् । अज्ञातज्ञापनं विधिः । प्रमाणेतरसिद्धस्य पदार्थस्यान्येन प्रयोजनेन स्वरूपकीर्तनमनुवादः । यथा—गौरयं पदा न प्रष्टव्यः इत्यत्र गौरयमित्यनुवादभागः । पदा न स्प्रष्टव्य इति विधीयते । अत्र विधेयस्यार्थस्यप्राधान्यमनुवाद्यस्यः पुनरप्राधान्यस् । विधेयानुवाद्ययोश्चायं प्रधानोपसर्जनभावो वाक्यात् प्रतीयते न तु वृत्तेः । वृत्तिं समासाद्य प्रधानोपसर्जनभावस्य निमज्जनप्रसङ्गात् ।

अब छठवाँ अध्याय प्रारम्भ होता है । जिसमें विधेय प्राधान्य नहीं होता हैं, वह अविमृष्टविधेयांश है । पद वाक्यगत दो भेद होते हैं , कृत तद्धित ससास से सम्बद्ध तीन वृत्तियाँ होती हैं ।

परस्पर सापेक्ष उपसर्जन भावयुक्त विधि एवं अनुवाद रूप अवयव दोनों से शोभित वाक्य अर्थात् महाकाव्य है । अज्ञात का ज्ञापन कराने वाला विधि होता है । किसी दूसरे प्रमाण से सिद्ध पदार्थ के प्रयोजनान्तर से स्वरूप कीर्तन ही अनुवाद होता है । जैसे 'गौरयं पदा न स्प्रष्टव्य' इसमें (गौरयं) यह अनुवाद का भाग है और 'पदा न स्प्रष्टव्यः' में विधि है । यहाँ विधेय अर्थ की प्रधानता है, पर अनुवाद्य की प्रधानता नहीं है । विधेय एवं अनुवाद्य दोनों का यह प्रधान उपसर्जन भाव वाक्य से प्रतीत होता है, वृत्ति से नहीं । वृत्ति को प्राप्त कर प्रधान के उपसर्जन भाव के तिरोहित हो जाने का प्रसंग कारण है ।

Chapter (VI) Poetic blemishes–where it is not clear what the speaker intends to lay emphasis on, are called (Avimrisṭavidheyāṅśa) It is to be noted that every sentence by its very nature has got two parts as it is in engish too i, e. the subject and the predicate so also in sanskrit there are two parts one being (Vidheya) and the other is (Anuvadya).

तत्र समासेषु कर्मधारये यथा—

जाते वीरनृसिंहभूप चलतस्त्वत्सैन्यपाथोनिधे,
न्यञ्चद्भूतलभारभङ्गुरफणोत्सङ्गोरगाधीश्वरे ।
वाष्पोत्सङ्गितलोचनं कुचतटीविन्यस्तहस्ताञ्चलं,
तस्यान्तपुरसुभ्रुवामुद्चरन् हाकारगर्भागिरः ।।२।।

अत्र न्यञ्चद्भूतलभारभङ्गुरफणोत्सङ्गत्वं तावद्विधेयम् । तच्चोरगाधीश्वरेणानुवाद्येन समं समासतया न्यग्भावमानीतम् । 'फणोत्सङ्गे भुजङ्गेश्वरे' इति समुचितः पाठः । बहुव्रीहौ यथा—

---

कर्मधारयसमासे यथा—

हे वीर नरसिंह नरेश ! भूमौ त्वत्सैन्यसागरस्य संचालने पृथिव्याः भारेण शेषनागस्य फणो व्याकुलतामाप्नोति । नेत्रेऽश्रुजलम् । स्तनाग्रभागात् करात् त्यक्ताञ्चस्यान्तलपुरस्यसुन्दरिणः हा हा ध्वनिः निसृता ।

इह चलत्भूमिभारेण भङ्गुरफणोत्सङ्गत्वं विधेयम् । तत् विधेयमुरगाधीश्वरेणानुवाद्येन सह समासेन न सम्पन्नम् । ('फणोत्सेङ्गे भुजङ्गेश्वरे') इति समुचितपाठः । यथा बहुव्रीहि समासे ।

---

यहाँ समासों में जैसे कर्मधारय समास में विधेयांश के तिरोधान का उदाहरण है । हे वीर नरसिंह नरेश ! भूमि पर तुम्हारी सेना सागर के सञ्चालन पर हुए पृथ्वी के भार से दबे शेषनाग के फण व्याकुल हुए । अश्रुजल नेत्र में भर गये । स्तन के अग्र भाग से छूटे हाथ से अंचल उस अन्तःपुर में सुन्दरी की हा हाकार युक्त ऐसी वाणी निकल पड़ी ।

इस पर चलते हुए भूतल भार से भङ्गुर फणोत्सङ्गत्व विधेयत्व है, वह विधेय उरगाधीश्वर अनुवाद्य के साथ समासत्व से सम्पन्न नहीं हुआ । भुजङ्गेश्वरे फणोत्सङ्गे ऐसा समुचित पाठ है । बहुव्रीहि समास का उदाहरण—

---

Thg (vidheya) part is something that has been added newly and on which the speaker intends to lay special emphasis. Therefore it should hold th e dominant Position in each syntactical arrangement. If poet is careless, the syntactical arrangement made by him might relegate this dominant part to a secondery position thereby causing a blemish to arise. This can be caused by a compound like (Tatpuruṣa). The second part is always predominant what is to be laid emphasis on, might by mistake be compound with something and become the first member of the compound arrangement, Naturally it will become secondary importance, Likewise in (Bahubrīhi) compound the stress is laid on something out side the individual members of the compound.

त्यागश्रीहसितेन्द्रकेलिविपिनक्षोणीरुहांकृतिः,
कीर्तिव्रीडितकार्तिकेन्दुमहिषीगण्डस्थलीपाण्डिमा ।
हेलाताण्डवित प्रतापलहरी निर्धूतकल्पानलः,
केषामेष न वर्णनीयमहिमा वीरः कलिङ्गेश्वरः ॥३॥

अत्र कल्पद्रुमाहंकारादिनानुवाद्येन समं हसनादिविधेयत्वात् प्रधानतयाविवक्षितं समासेन गुणीभूतम् ।

त्यागेनोपहसन् महेन्द्रविपिनक्षोणीरुहांकृतिं,
कीर्त्यापित्रपयन् सुधांशुमहिषीगण्डस्थलीपाण्डुताम् ॥४॥
निर्धुन्वन् प्रवलप्रतापलहरीनृत्येन कल्पानलम् । इति निरवद्यः पाठः ॥

---

दानश्रीशोभितेन्द्रक्रीडावनस्य पृथिव्यां कल्पवृक्षस्याहंकारवृत्तिः । नरसिंहराज्ञः यशसा लज्जितोभूत्वा कार्तिकमासस्य चन्द्रो महिषीगण्डस्थली च पीततां भजेते । क्रीडानृत्येन संयुक्तपराक्रमेण धूमरहितप्रलयाग्निः । हे वीर कलिङ्गनरेश केषामेष-वर्णनीयमहिमा । इह कल्पद्रुमाहंकारादिनानुवादेन सह हसितादिविधेयेन प्रधानस्य-विवक्षितेन गुणीभूतम् । चन्द्रकिरण इव महिषीकपोलः पीतवर्णोऽभवत् । राज्ञः यशसा लज्जितः । तस्य प्रताप लहरीनृत्येन कल्पाग्निप्रलयाग्निरधः कृतः । निरवद्योऽयं पाठः ।

---

दान की लक्ष्मी से शोभित इन्द्र के क्रीडा वन पृथ्वी पर कल्पवृक्ष की अहंकार-वृत्ति हैं । नरसिंह राजा के यश से लज्जित होकर शरद् कालीन कार्तिक मास का चन्द्रमा एवं महिषी की गण्डस्थली (कपोल) का भाग पीला वर्णवाला हो गया है और लज्जित हैं । क्रीडा नृत्य से युक्त पराक्रम लहरी से धूम रहित प्रलयाग्नि है । हे वीर नरसिंह कलिङ्ग नरेश किसका वर्णन करने योग्य यह महत्व नहीं होता है ।

इसमें कल्पद्रुम अहंकार आदि से अनुवाद के साथ हसना आदि विधेय होने से प्रधानता से विवक्षित होने के साथ उससे गुणीभूत होता है, चन्द्रमा की किरण सदृश पटरानी के कपोल के पीलेपन कीर्ति से लज्जित हुआ प्रवल प्रताप की लहरी के नृत्य कल्पाग्नि को हिला देने वाले राजा हैं । निर्दोष पाठ का उदाहरण है ।

---

If the part intended to be emphasised is put as a member (Bahubrīhi) Compound, it loses its importance. For example the poet might intend to say.

'Your generosity farexcels the generosity of the wishgranting tree (Kalptaru)'.

Here emphasis is laid on the excellence of your generosity and this excellence to remain predominant must be described by the main Verb of the sentence and in no case by a subordinate clause or by a (Bahubrīhi) compound. If the latter too are chosen as a means of describing this excellence; it will naturally be relegated to a secondary position.

द्विगौ यथा –

विधुन्तुद ममाधुना वत करिष्यते किं भवा,
निति स्फुरदहंकृतिस्तुहिनदीधितिर्निर्भयम् ।
विधाय तवकीर्तिभिर्निजवपुः सहस्राण्यसौ,
कलिङ्गवसुधाधिप त्रिषु जगत्सु विद्योतते ॥५॥

अत्र संख्यायाः संख्येयेषु जगत्सु निरवशेषतावगमैकप्रयोजनमतिशयमादधानायाः प्राधान्यमभिमतं तच्च त्रिजगत्यामिति समासे नोपसर्जनत्वमानीयते । तत्पुरुषे यथा ।

---

द्विगौ समासे यथा—

राहो ! मे खेदः । किं करिष्यति भवान् । इति स्फुरदहंकारयुक्तचन्द्ररश्मिः । अभयं कुर्वन् ते यशसा स्वशरीरस्य सहस्ररूपं धारयनयं कलिङ्गनरेशः त्रिषु लोकेषु द्योत्यते ।

अत्र संख्यायाः संख्येयेषु संसारेषु निखशेषताज्ञानमेकप्रयोजनम् । अतिशयेन प्राधान्यमभिमतम् । तच्च त्रिषुसंसारेषु समासेनोपसर्जनत्वमानीतम् । तत्पुरुष समासस्योदाहरणम् ।

---

द्विगु समास का उदाहरण—

'अविमृष्ट विधेयांश दोष के पदगत उदाहरण में देखें। राहु ! मुझे खेद है। अब आप क्या करेंगे ? ऐसी स्फुरित होती अहंकार युक्त चन्द्र किरण है। इसे भय रहित करते हुए यह कलिङ्ग नरेश तीनों लोकों में प्रकाशित होते हैं।

इसमें संख्या के संख्येय होने में संसार में निरवशेपता का ज्ञान एक प्रयोजन है। इसके अतिशयत्व धारण करने की प्रधानता अभिमत है और वह तीन लोकों में, समास से उपसर्जन होता है। तत्पुरुष समास का उदाहरण—

---

(Dwigu) Compouud might also shift the emphasis to something other than what is intended to be emphasised. For example; "O king ! your fame has reached all the three worlds. If the word (three) were compound will fail to indicate that extensiveness all the three worlds which as sought to be emphasised by the poet. In a ( Tatpuruṣa ) compound what is to be emphasised must always come as the second member and then alone its importance will remain intact. While making use of a ( kṛidanta ) suffix; a poet has to be on his guard to escape this blemish.

**यदिह ककुभां सीम्नि व्योम्नः स्थलेऽप्यमितं यश,**
**स्तव कथमपि ज्योत्स्नागौरं नृसिंहनरेश्वर ।**
**तदिदमखिलं चित्रं पञ्चाशता परमक्षरैः,**
**कृतपरिकरे वाग्व्यापारे निवेशयते कविः ॥६॥**

अत्रामितमिति निषेधस्तावद्विधेयत्वेनाभिधित्सितः । मानं पुनरनुवाद्यत्वेन । अनयोः समासेनाभिधानमनुचितम् । समासे विध्यनुवादगतत्वेन विवक्षितयोः प्राधान्याप्राधान्ययोर्विपर्यासप्रसङ्गात् । अतश्च 'यदिह न दिशां सीम्नि व्योम्नः स्थलेऽपि मितं यशः इति पाठः परिणमयितव्यः । यत्र तु विध्यनुवादभावो नाभिमतस्तत्र समासः स्यादेव । यथा 'निधिरखननायाससुलभः । यथा वा—

---

यदत्र दिशां सीम्नि स्थले आकाशस्यापि ते यशोऽतिविस्तृतम् । नरसिंह नरेश ! केनापि प्रकारेण चन्द्ररश्मिरिव गौरवर्णः । विचित्रमयोऽयं संसारः । पञ्चाशता परमक्षरैः कविः वाचि बद्धपरिकरः निवेशयति ।

अमितमत्र निषेधस्तावद्विधेयत्वेनाभीष्टः । मानं पुनरनुवाद्येनाभीष्टः अनयोर्द्वयोः समासेनाभिधानमनुचितम् ।

समासे विध्यनुवादगतत्वेन विवक्षितयोः द्वयोः प्राधान्याप्राधान्ययोर्विपर्यासप्रसङ्गकारणात् । अतश्च—'यदिह न दिशां सीम्नि व्योम्नः स्थलेऽपि मितं यशः 'परिणामेऽयं पाठः समुचितः । यत्र विध्यनुवादयोः भावोऽभिमतो नास्ति । तत्र समासो न भविष्यति । यथा निधिरखननायाससुलभः । अथवा—

---

जो यहाँ दिशाओं की सीमा में आकाश स्थल में भी तुम्हारा यश अत्यन्त फैला है । नरसिंह नरेश ! किसी प्रकार से भी चन्द्र किरण समान गौर वर्ण है । तब यह सम्पूर्ण विचित्रमय है । पच्चासों परम अक्षरों से कवि वाणी के व्यापार में कटिवद्ध होकर निवेसन करता है । इसमें 'अमित' यह निषेध है । तब विधेयत्व से अमींष्ट है । मान पुनः अनुवाद्यत्व से अभीष्ट है । इन दोनों का समास से अभिधान अनुचित है ।

समास में विधि एवं अनुवाद गत होने से दोनों के विवक्षित प्रधान एवं अप्रधान का बिपर्यास का प्रसङ्ग कारण है । अतः 'यदिह न दिशां सीम्नि व्योम्नः स्थलेऽपि मितं यशः' —यह पाठ परिणाम में उचित है ।

जहाँ बिधि एवं अनुवाद का भाव अभिमत नहीं है- वहाँ समास ही होगा । जैसे—'निधिरखननायाससुलभः' । अथवा जैसे ।

आक्रम्य स्मरवैरिशेखरसरित्पूरैकसिंहासनं,
राजानं नरसिंह पार्थिव तथाहंकारभारोद्धुरः ।
त्वत्कीर्तिप्रसरो हसत्ययमसौ शक्रस्य दन्तावलं,
व्यालेन्द्रं मुसलायुधं किमपरं देव्याश्च पञ्चाननम् ॥७॥

अत्र प्रलयघटारटितपटुतरहुङ्कारपरिपीतहरिदन्तदन्तावलमदस्रोतस्तयानितर केसरिसाधारणत्वं पञ्चाननस्याभिधातुमभिमतं तावद्भगवत्याः पार्वत्याः सम्बन्धित्वेनेति देव्याः प्राधान्यं पञ्चाननेन समं समासकुर्वता नोपसर्जनतां नीतम् । समासे हि पञ्चाननस्य प्राधान्यं न तु देव्याः । तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् । एवं कृत्तद्धितयोरपि वृत्तिर्नादरणीया ।

---

कामरिपोः शिवस्य मस्तके गाङ्गलहरीव राजसिंहासनमतिक्रम्य नरसिंहनरेशः तत्सदृशमहंकारभारोद्धुरेण नवयशसः प्रसारोऽयं हसति । इन्द्रस्यैरावतः, शेषनागः, बलरामश्च सर्वे श्वेतवर्णाः । किं कथनीयम् ? देव्याश्च सिंहोऽपि श्वेतः ।

अत्र प्रलयघनघटाटोपहुङ्कारध्वनिना पीतो मदस्रोतः ऐन्द्रैरावतस्य । तत्केसरिसाधारणत्वं पञ्चाननस्य कथनेऽभिमतम् । तदा भगवत्याः पार्वत्याः नास्मिन् देव्याः प्रधानतायाः पञ्जाननेन सह समासेनोपसर्जनीयत्वं नाभवत् । यतः समासे पञ्चाननस्य प्रधानता न तु देव्याः । तत्पुरुष समासस्योत्तर पदस्यार्थस्य प्रधानत्वात् । एवं कृत्तद्धितयोरपि वृत्तिर्नादरणीया ।

---

कामदेव के शत्रु अर्थात् शिवजी के मस्तक पर गङ्गाजी की लहर सदृश राजसिंहासन को आक्रमित कर नरसिंह नरेश उस प्रकार के अहंकार भार को ढोते हुए, तुमसे यश का प्रसार यह हँसता है । इन्द्र के ऐरावत, शेषनाग, बलरामजी सभी श्वेत वर्ण हैं । क्या कहा जाय ? देवी का सिंह भी सफेद है ।

यहाँ प्रलय के बादल की घटा छाये रहने पर हुङ्कारत्व सिंह का कहना हेतु अभिमत है । तब भगवती पार्वती के सम्बन्ध में, न इसमें देवी की प्रधानता है । पञ्चानन के साथ समास करने से उपसर्जनीय भाव हुआ । क्योंकि समास में पञ्चानन की प्रधानता है, न तो देवी की । तत्पुरुष समास के उत्तर पद के अर्थ की प्रधानता कारण है । इस प्रकार कृत् एवं तद्धित की भी वृत्ति आदरणीय नहीं है ।

सर्वम् कषति न केषामेषां समरेषु विद्विषां गर्वम्;
कालीव दानवानां वीर कृपाणी तव स्थिता पाणौ ।।८।।

अत्र कषणस्य कर्मत्वेन सर्वमिति गर्वविशेषणमुत्कर्षप्रकाशनपरतया प्राधान्येन विवक्षितम् । सर्वं कषेति कृद्वृत्त्या न गुणतां नीतम् ।

न कस्य कर्णयोर्हर्षमेषा वर्षति भारती ।
कवित्वतत्त्वनिष्ठस्य नरसिंहस्य भूपतेः ।।९।।

अत्र नरसिंहसम्बन्धित्वेन भारत्याः प्रकर्षो वक्तुमिष्ट इत्यस्याः प्राधान्यं नारसिंहीति तद्धितवृत्त्या न म्लानिमानीतम् । विभक्त्यन्वयव्यतिरेकानुविधायिनी विशेषणानां विधेयतावगतिः ।

---

हे वीर ! ते कृपाणोऽयं केषां गर्वं न हरति । रणेषु शत्रूणां गर्वं कालीव दैत्यानां विनाशे तवकृपाणोऽयं स्थितः । सर्वान् नाशयति ।

अत्र कषणस्य कर्मत्वेन सर्वमिति गर्वविशेषणमुत्कर्षप्रकाशनपरत्वेन प्राधान्यस्य विवक्षा ।

सर्वं कषेति कृद्वृत्त्या न गुणतां नीतम् ।

कवितातत्त्वे निष्ठावतः नरसिंहनरेशस्य विषये कवितेयं कस्य श्रुतयोः हर्षं न जयति । इह नरसिंहसम्बन्धित्वेन वाचः प्रकर्षं वक्तुमिष्ट इत्यस्याः प्रधानत्वं नारसिंहीति तद्धितवृत्या न म्लानमभजत् । विभक्त्यन्वयव्यतिरेकानुविधायिनी विशेषणानां विधेयतावगतिः ।

---

हे वीर नरसिंह ! किस शत्रु के गर्व को नष्ट नहीं करते हैं । रणक्षेत्र में इन शत्रुओं के गर्व को तुम्हारे हाथ में स्थित कृपाण चूर्ण करती हैं । अर्थात् सभी को मारती है । जैसे काली दानवों को नष्ट कर देती हैं । मार देती हैं । इसमें कषण के कर्म होने से सर्वम् से गर्व विशेषण के उत्कर्ष प्रकाशन परत्व से प्राधान्य की विवक्षा है ।

सर्वं कषा में कृत् वृत्ति से गुणत्व नहीं हुआ हे ।

कविता तत्व में निष्ठावाले नरसिंह नरेश विषयक यह कविता है । यह किसके दोनों कानों में हर्ष की वर्षा नहीं करती है ।

इसमें नरसिंह से सम्बन्धित वाणी के प्रकर्ष का कहना इष्ट है । इसलिए इसकी प्रधानता नरसिंह से सम्बन्धित यह तद्धित वृत्ति से म्लान नहीं हुई । विभक्ति अन्वय व्यतिरेक की विधायिका है । विशेषण की विधेयता की अवगति है ।

---

For examplec your sword banquishes the entire army of your opponents. For this idea (Sarvam Kaṣati); i. e. the employment of the verb (Kaṣati) is perfectly all right; but if the word were changed to (sarvamkaṣā) by the employment of (Kridanta) suffix the tribute paid to the sword will begin to give a very different meaning and thus lead to the blemish (Avimriṣṭa Vidheyānśa) or unhappy change of emphasis. Similarly this blemish may also arise by a careless use of a (Tadhita) suffix. For example, Nar-

विशेष्येषूत्कर्षापकर्षविधायिनामेषां शाब्दे गुणभावेऽप्यार्थं प्राधान्यं विशेष्याणां शाब्दे प्राधान्येऽप्यार्थो गुणभावोऽनूद्यमानत्वात् । समासे तु समुदितार्थाभिधायितया नोत्कर्षः प्रतीयतेऽपकर्षो वा । अव्ययीभावे यथा--

नाथः काकोदरणां कथयति लिखति क्ष्मापतिः कार्तवीर्यो,
मेलानन्दो जलानां निधिरचलपतिर्लेखनी व्योम पत्रम् ।
संख्यापारे परार्धं यदि भवति पुनः किं च वैरिञ्चमायुः,
संख्येयत्वं तदानीं दधति तव गुणाः श्रीनृसिंहक्षितीन्द्र ।।१०।।

---

विशेष्येषूत्कर्षापकर्षविधायिनामेषांशाब्दे प्राधान्येऽप्यार्थे गुणभावोऽनूद्यमानत्वात समासे तु समुचितार्थाभिधानेनोत्कर्षापकर्षो वा प्रतीयते । अव्ययीभावसमासे यथा--

हे नरसिंह राजन् ! तव गुणास्तु तदानीमेव गणनीयाः यदा शेषनागो यदि निज-सहस्रमुखैर्वर्णनं कुर्यात् । सहस्रार्जुनश्च यदा सहस्रकरैः लिखेत् । सागरश्च मसी भूयात् । पर्वतराजः यदा लेखनी भूयात् । परार्धसंख्यापरेऽपि सख्यास्तु । ब्रह्मणश्चायुर्बलमस्तु ।

---

विशेष्य में उत्कर्ष एवं अपकर्ष विधायी इनके शब्द सम्बन्धी गुण के अभाव में भी अर्थ सम्बन्धी प्रधानता है । विशेष्य के शब्द सम्बन्धी गुण के अभाव में अनुवाद्यता कारण है । समास में तो समुचित अर्थ कहने से उत्कर्ष अथवा अपकर्ष होता है । अव्ययी भाव का उदाहरण--

हे नरसिंह राजन् ! तुम्हारे गुण तब गिनने योग्य समझे जायंगे । जब शेषनाग यदि अपने हजारों मुखों से वर्णन करें । सहस्रार्जुन जब हजारों हाथों से लिखें । समुद्र जब मसी हो जाय । पर्वतराज (हिमालय) जब लेखनी हो जाय, आकाश कागज (पत्र) हो जाय । परार्धसंख्या के परे भी जब कोई संख्या हो जाय और ब्रह्मा का आयु बल हो ।

---

singhaś speech is very pleasant; but in this changed form the word ( Nārsingh ) will not remain a noun, it becomes an adjective which in sankrit grammar is taken to be secondary in importance leading to the loss of excellence attaching to the person ( Nasingha ). Careless use of an ( Avyayībhāva ) adverbial compound leads to this blemish, For example; for more than the highest countable number", Can be changed to an adverbial compound like ( Pāreparārdha) or uncountable, But in its latter position the sentence will not yield the desired sense.

अत्र प्रभोः प्रकर्षप्रकाशनं प्रस्तुतं तच्च गुणवाहुल्यप्रतिपादनेनाभिमतम्। तत् पुनर्गुणानामगणनीयतया क्रियते। सा च संख्याया अभावादेवाभूत्। अत एव संख्याधिक्याशंसनं कृतम्। इहाल्पीयसी संख्या परार्धरूपा तया गुणगणनं कर्तुमशक्यम्। अतः पारे इत्यस्याव्ययार्थस्य विशेष्यस्यानूद्यमानत्वान्न प्राधान्यम्। परार्धस्य तु विशेषणस्य विधेयत्वात् प्राधान्यम्। तच्च न्यग्भावितं समासेन। ततश्च 'संख्यादूरे परार्धात्' इति न्याय्यः पाठः। द्वन्दस्य विशेष्यविशेषणभावाभावेऽपि यदा प्रत्येकं क्रियासम्बन्धोपलक्षणं प्राधान्यमभिमतं तदा न समासः कर्तुमुचितः। उपसर्जनत्वप्रसङ्गात्।

---

अत्रः प्रभोः राज्ञः प्रकाशनं प्रस्तुतम्। तद्गुणस्य बाहुल्यं प्रतिपादनेनेष्टम्। तदा पुनः गुणानां गणना नास्ति। संख्या च भविता। अभावेनैव भवति। अतः संख्याया आधिक्यं कथितम्। अत्र लघ्वी संख्या परार्धरूपा गुणस्य गणनायामसमर्था। अतः पारे इत्यस्याव्ययार्थस्य विशेष्यानुवाद्यत्वान्न प्रधानता। तच्च समासेन सह वृथा। तदनन्तरं संख्या दूरेऽपि परार्धात् पाठोऽयमुचितः। द्वन्दसमासस्य विशेष्यविशेषणभावाभावेऽपि प्राधान्यं यदा प्रत्येकं क्रियासम्बन्धोपलक्षणम्। तदा समासो नोचितः। उपसर्जनत्वस्य प्रसङ्गात्।

---

इसमें प्रभु का प्रकाशन प्रस्तुत किया गया है और वह गुण की बहुलता प्रतिपादन से अभीष्ट है। तव पुनः गुणों की गणना नहीं की जाती है और वह संख्या जो होती है। अभाव से ही होती है। इसलिए संख्या की अधिकता कही गई। यहाँ लघु संख्या परार्ध रूप होने से गुणों की गणना में असमर्थ हैं और वह समास के साथ व्यर्थ होता है और तदनन्तर संख्या दूर में होने पर परार्ध ही पाठ उचित है। द्वन्द्व के विशेष्य विशेषण भाव के अभाव होने पर भी जव प्रत्येक क्रिया सम्बन्ध से उपलक्षित प्रधानता की गई, तब समास करना उचित नहीं है। इसमें उपसर्जन का प्रसङ्ग कारण है।

---

For countless and uncountable presented to different ideas the first being hyperbole in nature and the other negative in nature.

Thus where a hyperbolic description is intended an adverbial compound might play havoc and had better be avoided. A syntactical blemish of this type, in other words, thus blemish arising out of unhappy syntactical order will be like this.

प्रत्युदाहरणं यथा—

गर्जद्दुर्जयशत्रुसैन्यजलधेर्मन्थाय विद्वज्जना,
भीष्टानां परिपूरणाय वसुधावष्टम्भदानाय च ।
राजन् वीर नृसिंहदेव भवतः सृष्टे भुजे वेधसा,
व्यर्थः सम्प्रति मन्दरः सुरतरुः सर्पाधिपश्चाभवत् ॥११॥

अत्र भवनक्रियायां मन्दरादीनां प्रत्येकं सम्बन्धः प्राधान्येनाभिधातुमभिमतो न समासेनावसादितः ॥

अनुवाद्यविधेयांशावुक्तौ स्यातां विपर्ययेण यदा ।
अविमृष्टविधेयांशो भवति तदानीं तु वाक्यगतः ॥१२॥

यथा—

---

ब्रह्मणा यदा गर्जद्दुर्जयशत्रुसैन्यसागरस्य मन्थनाय भवतो भुजे रचिते । तदा समुद्रमन्थनाय मन्दराचलः व्यर्थः । विदुषां मनोरथपूरणाय कल्पवृक्षोऽपि व्यर्थोऽभवत् । शेषनागश्च व्यर्थः । अत्र भवनक्रियायां मन्दरादीनां प्रत्येकं सम्बन्धः प्रधानतया कथयितुमभिमतो न समासेनावसादितः ।

वाक्यगतविमृष्टविधेयांशदोषो भवति, यत्रानुवाद्यविधेयांशौ कथितौ । विपर्ययेण तौ भवेतामनुवाद्यानुपपत्तौ विधेयो न । उदाहरणम्—

---

प्रत्युदाहरण देखें—

ब्रह्मा के द्वारा हे राजन् वीर नरसिंहदेव गर्जते हुए कठिनता से जीती जानेवाली शत्रुओं की सेना के सागर को मन्थन करने के लिए जब आप की भुजा बना दी गई । समुद्र मन्थन के लिए तब मन्दराचल व्यर्थ हुआ । विद्वानों के मनोरथ पूर्ति हेतु कल्पवृक्ष व्यर्थ हो गया और पृथ्वी को स्थित धारण रखने की क्षमता के लिए शेषनाग व्यर्थ हो गए ।

इसमें भवन क्रिया में मन्दर आदि प्रत्येक का सम्बन्ध प्रधानता से कहने के लिए इष्ट है । समास से प्राप्त ही है ।

वाक्यगत अविमृष्ट विधेयांश दोष तब होता है, जब अनुवाद्य विधेयांश दोनों के उक्त होने पर विपर्यय द्वारा दोनों उलटे हो जायँ और अनुवाद्य अनुक्त होने से ही विधेय न कहा जाय । उदाहरणार्थ—

कलानिधे वीर कलिङ्गनाथ, प्रायस्त्वमिन्दोरपरावतारः ।
त्वां पश्यतामेव मुदः स्फुरन्ति, यदुत्तरङ्गाः कविकैरवाणाम् ॥१३॥

अत्र त्वामनूद्य चन्द्रावतरत्वं विहितम् । यदि पुनरस्य पदद्वयस्यवैपरीत्येनोपादानमकरिष्यत्तदा निर्विवादमिदं दूषणमभविष्यत् ॥ धर्मिणमुद्दिश्य धर्मो विधीयत इतिसिद्धस्योद्देश्यत्वं साध्यस्य च विधेयत्वम् । तयोर्विपर्ययेणोपादाने तार्किकैरपि नित्यमाकाशमित्यादावप्राप्तकालस्य निग्रहस्थानस्याभ्युपगतत्वात् । यथा वा—

---

चन्द्र इव कलिङ्गनरेश ! प्रायशो भवान् चन्द्रस्य द्वितीयोऽवतारः । त्वां विलोकयन्नेवं कविकुमुदानां हृदयं हर्षेण परिस्फुरितम् ।

अत्र भवानिति चन्द्रावतरत्वं कथितमनूद्य । यदि पुनरस्यद्वयोः पदयोः वैपरीत्यमस्ति; निर्विवादोऽयं दोषो भविष्यति ।

अवयविनमुद्दिश्यावयवो विधीयते । इतिसिद्धस्य लक्ष्यत्वं साध्यस्य च विधेयत्वम् । तयोर्विपर्यासोऽवयवानां व्युत्क्रमेण कथनमप्राप्तकालम् । उदाहरणमत्र ।

---

हे चन्द्रमा सदृश-कलिङ्गनरेश ! प्रायः आप चन्द्रमा के दूसरे अवतार हैं । आप को देखते ही कविकुमुदों के हृदय तरङ्गित होकर प्रसन्नता से परिस्फुरित होते हैं । इसमें 'त्वाम्' को अनुवाद कर चन्द्रावतार विहित है । यदि पुनः उस दो पदों की विपरीतता करें, तो निर्विवाद दोष होता ।

धर्मी को उद्देश्य कर धर्म कहा जाता है । सिद्ध को उद्देश्य कर साध्य का विधेय होता है । उन दोनों के उलटने से उपादान में तार्किकों द्वारा भी नित्य आकाश को अप्राप्ति काल के निग्रह स्थान के निकट आना कारण बताया जाता है । उदाहरणार्थ—

---

"You are as good as the moon which makes the lily bloom and therefore you are another moon."

The sentence without such befitting adjective of (you) as can justify your comparison to the moon, the sentence does not do any thing to establish the importance of the person who is being addressed here,

The Cases of sentences begun with so and as may also lead to this defect, if the word, So and as were not carefully inquired. A person so good as he is difficult to find, Here the word (so) will be useless without the adjective good and if some where to say a person so as he is difficult to find the sentence will be wanting impropriety, Cases like these also lead to blemish, because an adjective and its degree must have some noun or pronoun to qualify and adverb must likewise have an adjective an adverb or verb

लोकत्रयेऽपि चरितैस्तव कोऽपि तुल्य, स्तैस्तैर्बभूव भवितास्ति च किं न वेति ।
आलोकनाय नृपते नरसिंह नूनं, देवः सुधाकिरणमौलिरभूत् त्रिनेत्रः ॥१४॥

अत्र सुधाकिरणमौलित्वमनूद्य त्रिनेत्रत्वं विहितमिति नायं दोषः । विपर्ययोपादाने भवत्येव । यथा—

उत्कण्ठाभारताम्यत् कुवलयनयनामानसाम्भोजभानु,
श्चिन्तासंतापमीलत्कविकुलकुमुदव्यूहनक्षत्रनाथः ।
ईर्ष्यासम्बर्द्धमानप्रतिनृपतिकुलाम्भोधिकुम्भोद्भवश्च,
ख्यातः सर्वत्र योऽसौ जगति विजयते श्रीनृसिंहः क्षितीन्द्रः ॥१५॥

अत्र यदः प्रयोगो नोचितः । यत्र हि यत्तदोरन्यतरस्य निर्देशस्तत्र तत्प्रत्यवमर्शिना तदितरेणोपसंहारो न्याय्यः ।

---

हे नरसिंह नरेश ! शिवः त्रिनेत्रयुक्तः । कथमेतदस्ति । त्रिषु लोकेषु विश्रुतस्तव चरितैः कोऽपि तुल्यो भविष्यति वाभवत् वास्ति । भगवान् शिवोऽपि द्रष्टुं त्रिनेत्रोऽभवत् ।

इह सुधाकिरण मौलित्वमनूद्य त्रिनेत्रत्वं विहितम् । इति नायं दोषः । विपर्यये सति दोषो भविष्यति ।

उत्कण्ठाभारेण च संकुचितकमलनयननायिकानां मानसाम्भोजा राजानं दृष्ट्वा विकसति । यथा सूर्यं दृष्टवा कमलानि च विकसन्ति । चिन्तया जनितेन दुःखेन संकुचितकविसमूहकुमुदानां विकासार्थं राजा चन्द्र इव वर्द्धमानेर्ष्यया शत्रुनरेशाणां समूहः । अगस्त्य इव राजा सैन्यसागराय । अयं नरेशो जगति प्रसिद्धः । सोऽयं नरसिंहनरेशो विजयते ।

अत्र यदः प्रयोगो नोचितः यत्र हि यत्तदोरपरस्य निर्देशस्तत्रेतरेतरस्योपसंहरणमुचितम् ॥

---

हे नरसिंह नरेश ! शंकर जी त्रिनेत्र क्यों हो गये । तीनों लोकों में भी उन उन प्रसिद्ध तुम्हारे चरित्रों के तुल्य कोई है, होगा, हुआ है । इसे देखने हेतु शंकर जी त्रिनेत्र हो गए । यहाँ सुधाकिरणमौलित्व का अनुवाद कर त्रिनेत्र हो गया है । इसमें दोष नही है । उलट देने पर दोष होता ही है । उत्कण्ठा के भार से सिकुड़े हुए कमल रूपी नयन वाली नायिकाओं के मानस राजा को देखकर खिल उठते हैं । जैसे कमल सूर्य द्वारा खिल जाता है । चिन्ता से उत्पन्न दुःख से संकुचित कवि समूह रूपी कुमुद समूह को विकसित करने वाले राजा चन्द्र स्वरूप है । बढ़ी हुई ईर्ष्या से युक्त शत्रु राजाओं के समूह के सागर हेतु राजा नरसिंह अगास्त्य समान हैं । यह राजा जगत् में सर्वत्र प्रसिद्ध हैं । इस प्रकार राजा नरसिंह विजयी होवें ।

यहाँ यदः का प्रयोग उचित नहीं है । जहाँ यद् तद् दोनों में से एक निर्देशित हो, वहाँ एक दूसरे का उपसंहार होना उचित है ।

तयोरनुवाद्यविधेयार्थत्वेनाभिधातुमभिमतयो; परस्परसव्यपेक्षत्वेन सम्वन्धस्य नित्यत्वात् । स पुनरुपक्रमोपसंहारक्रमो द्विविधः शाब्दश्चार्थश्चेति । तत्र द्वयोरुपादाने शाब्दः । यथा—

हिमकरकलामौलिः कृष्णः सरोरुहसंभवः,
फणधरकुलं नालं बोद्धुं नृसिंह नरेश्वर ।
यदमरधुनीं दुग्धाम्भोधिं मरालमहीश्वरं,
स खलु महिसा विश्वाख्यातस्तवैव यशः श्रियः ॥१६॥

अत्र यदित्युक्त्वा स इत्युक्तम् । एकतरोपादाने त्वार्थः । तदितरस्य सामर्थ्येनावसीयमानत्वात् । तत्र केवलस्य तद उपादाने सत्यार्थो न त्रैविध्यमतिक्रामति । प्रक्रान्तप्रसिद्धानुभूतविषयतयोपकल्पितसंनिधिना यच्छब्देन तच्छब्दस्याभिसंबन्धात् । क्रमेण यथा—

---

तयोरनुवाद्यविधेयार्थत्वेन कथनमुचितम् । यतो हितयोः परस्परं सापेक्षत्वेन सम्बन्धो नित्योऽस्ति । स च सम्बन्धः पुनरुपक्रमोपसंहारक्रमश्चेति द्विविधः । शाब्द, आर्थतयोरुपादाने शाब्दः । यथा—

हे नरसिंह नरेश! ब्रह्मा विष्णुशिवाश्च स्वकुलाभिज्ञानेऽसमर्थाः । ते गङ्गां क्षीरसागरं, शेषं, राजहंसं नाजानन् । यतः ते यशो विश्वविख्यातम् । श्रीयश्च महिमास्ति ।

अत्र यदित्युक्त्वा स इत्युक्तम् । एकोपादाने त्वार्थः । अन्यतरस्य सामर्थ्येन स्थितिः कारणम् । तत्र केवलस्य तच्छब्दस्य प्रयोगे आर्थः । स च त्रिविधः । प्रसङ्गार्थे शाब्दः प्रसिद्धार्थेऽनुभूतार्थे शब्दशब्दोपादानं विना साकाङ्क्षशब्दसाकाङ्क्षत्वसम्बन्धि क्रमेणोदाहरणमत्र—प्रक्रान्तं प्रसिद्धमनुभूतं च विषयीकुर्वतः तच्छब्दस्य सम्बन्धत्वात् ।

---

उन दोनों के अनुवाद्य विधेयार्थ होने से कहना ठीक है, जो परस्पर सापेक्ष सम्बन्ध का नित्य कारण है । वह पुनः उपक्रम एवं उपसंहार भेद से क्रमशः दो प्रकार का होता है । शब्द सम्बन्धी और अर्थ सम्बन्धी । उसमें दोनों के उपादान होने पर शब्द सम्बन्धी होता है । जैसे—

हे नरसिंह नरेश ! शंकर, विष्णु तथा ब्रह्माजी क्रमशः गङ्गा, क्षीरसागर, शेषनाग तथा राजहंस को नहीं समझ पाये । क्योंकि तुम्हारे यश की विश्वविख्यात श्री की वह निश्चय ही महिमा है । यहाँ यत् यह कह कर तत् कहा गया ।

उनमें एक के उपादान में अर्थ सम्बन्धी होता है । अन्य के सामर्थ्य से अवस्थिति कारण है । वहाँ केवल तद् के उपादान में अर्थसम्बन्धी तीन प्रकार का होता है । प्रक्रान्त अर्थ में शब्द, प्रसिद्ध अर्थ में अनुभूत अर्थ, शब्दोपादान विना साकांक्ष शब्द का साकांक्षत्व सम्बन्धी क्रमशः निम्नलिखित हैं ।

लोकेऽस्मिन् नरसिंहदेवनृपतिर्दाता न कल्पद्रुम-,
स्तेजस्वी स न पद्मिनीसहचरः कान्तः स नो चन्द्रमाः ।
गम्भीरः स न वाहिनी परिवृढस्तुङ्गः स नो मन्दरः
शिल्पज्ञः स न पद्मभूः किमपरं वाग्मी स नो वाक्पतिः ॥१७॥

अत्र तेजस्वी स इत्यादौ प्रक्रान्तेऽर्थे तच्छब्दः

सा किं दत्तवती कदा वत शिला कस्मै स शाखी पुनः,
कस्यालोकपथं गतो निविशते कस्यान्तिके सा पशुः ।
पर्याया नरसिंहपार्थिव तव प्रख्यातिचिन्तामणि,
र्मन्दारोदिविषद्गवीत्रिभुवनश्लाघ्याः समस्ता अमी ॥१८॥

इह निरतिशयवितरणचणतया प्रसिद्धाया शिलेति प्रसिद्धेऽर्थे तच्छब्दः ।

त्वत्प्रत्यर्थीगोरिचरगजस्याङ्कदत्तदृष्टि-,
स्तस्मिंस्तस्मिन् स्मरति मधुरं तत्तदङ्गं प्रियायाः ।
कुम्भाभोगे गुरुकुचतटं दन्तयोर्गण्डलक्ष्मी,
मुरू हस्ते गतिषु च गतिं श्रीनृसिंहक्षितीन्द्र ॥१९॥

---

राजा नरसिंहदेवो दातास्मिन्लोके एक एव, न तु कल्पद्रुमोऽस्ति । सः तेजस्वी न तु सूर्यः । सुन्दरः सः, न तु चन्द्रः । गम्भीरः सः, तथा यथा न सेनापतिः । तुङ्गः सः, मन्दराचलो न । शिल्पज्ञः न च स ब्रह्मा । किं कथनीयम् । सः, दक्षो वक्ता बृहस्पतिश्च न । सः, तेजस्वीत्यस्मिन् प्रक्रान्तार्थे तद् शब्दः ।

सुमेरुः कस्मै दत्तवान् कल्पद्रूमेण कस्मै दानं दत्तम् । कल्पद्रुमः कैर्दृष्टः । कस्य समीपे कामधेनुः । हे नरसिंह नरेश ! अमी सर्वेऽपिते पर्यायवाचिनः । चिन्तामणिश्च ते पर्यायः । मन्दारः स्वर्गे वसति । त्रिषु लोकेषु विश्रुताः सर्वेऽपि ते पर्यायाः ।

अत्र निरतिशयवितरणदानादिना प्रसिद्धार्थे तत् शब्दः ।

हे नरसिंह नरेश ! त्वया विजिता शत्रवो वनमाश्रिताः । वनगजं दृष्ट्वा ते प्रियायाः सुन्दरमधुराङ्गानि स्मरन्ति । गण्डाभोगे कुचतटं, हस्तिदन्तयोर्निजकान्ता-कपोलं शुण्डादण्डे स्मरन्ति तासामुरुगतिं च गतिषु ।

---

इस लोक में नरसिंह देव राजा दाता है, कल्प वृक्ष नहीं । वे तेजस्वी हैं, सूर्य नहीं । वे सुन्दर हैं, चन्द्रमा नहीं । वे शिल्प ज्ञाता हैं, ब्रह्मा नहीं । और क्या कहा जाय । वे बोलने में चतुर हैं । बृहस्पति नहीं ।

यहाँ तेजस्वी वह है, इसमें प्रकान्त अर्थ में तत् शब्द है ।

उस सुमेरु ने किसको दान दिया ? वह बृक्ष जिसे सभी लोग कल्प वृक्ष कहते हैं, उसने किसको दान दिया । किसकी दृष्टि में कल्प वृक्ष देखा गया । किसके समीप वह कामधेनु है । हे नरसिंह नरेश । ये सभी तुम्हारे पर्यायवाची हैं । चिन्तामणि

अत्र तत्तदित्यनेन पदेनानुभवैकगोचराः प्रकाश्यन्तेऽर्थ इत्यनुभूतेऽर्थे तच्छब्दः यच्छब्दस्तूत्तरवाक्यगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यगततच्छब्दस्योपादनं नापेक्षते । यथा—

श्रीमन्नृसिंहनृपते कविकाव्यशय्यां-, त्वत्कीर्तिरेति भुवनत्रयगर्भभारात् ।
यस्याः प्रभा भजति दौहृदपाण्डु भावं, प्रौढीभवत्यसिमिषेण च रोमराजिः ॥२०

प्रागुपात्तस्तु यच्छब्दोपादानं विना साकाङ्क्षः । यथा—

यत्र द्विपस्तुषारक्षितिभृदुडुगणो मौक्तिकानां निकायः,
शैवालं व्योमशङ्खः कुमुदकुलगुरुर्धाम सान्ध्यं प्रवालः ।
यूथं दिक्कुन्जराणां करिमकरकुलं किं च कृष्णः कृपाण,
स्त्वत्कीर्तिक्षीरबार्द्धिः स जयति जगति श्रीनृसिंहक्षितीन्द्रः ॥२१॥

---

अत्र तदिति पदेनैकानुभवगोचरार्थः प्रकाशितः । अनुभूबार्थेऽस्मिन् तत् शब्दः । यत् शब्दस्तूत्तरवाक्यगतसामर्थ्येन कथितः । पूर्ववाक्यगतत्वेन तत् शब्दस्योपादनं नापेक्षते । उदाहरणम्—

श्रीमन् नरसिंह राजन् ! तव यशः कविकाव्यशय्यामाप्नोति । त्वत्कीर्तिभुवनत्रयगर्भभारात् यस्य प्रकाशः । पाण्डुरः । रोमावलिः खड्गव्याजेन प्रौढ़ीभवति ।

पूर्वं यत् शब्दः कथितः । तत् शब्दोपादानं विना साकाङ्क्षः । यथा—

नरसिंहो विजयते जगति । अर्थात् सर्वोत्कृष्टः सः । श्रीनरसिंह ! ते यशः क्षीरसागरपर्यन्तं विस्तृतम् । यत्र गजः तुषारपर्वतः (हिमगिरिः) तारागणः मौक्तिकानां समूहः, शैवालं शङ्खः कुमुदसमूहः दिक्कुन्जराणां दिग्गजानां समूहः, नक्रकुलं किं च कृष्णः कृपाणः । सर्वाणि वस्तूनि निर्मलानि यातानि । कारणमत्र तु नरेशस्य यशः ।

---

भी तुम्हारा ही पर्याय है । कल्पतरु स्वर्ग में रहता है । तीनों लोक में जितने प्रसिद्ध हैं, वे सभी आप के पर्यायवाची हैं ।

यहाँ निरतिशय वितरण दान आदि प्रसिद्ध अर्थ में तत् शब्द है । तुम्हारे शत्रु गण जब तुमसे हारकर जंगल में चले गये । तब जंगली हाथी के ऊपर दृष्टि डाली, तो उन उन प्रिया के सुन्दर मधुर अङ्गों का स्मरण करते रहे । गण्डस्थली में महान् कुच का स्मरण करते रहे । हाथी के दाँतों को देखकर अपनी प्रिया के कपोल लक्ष्मी स्मरण और शुण्डा दण्ड को देखकर जंघे का स्मरण तथा उनके चलने में अपनी पत्नियों की चलने का स्मरण करते रहे ।

यहाँ तत् इस शब्द से एक अनुभव गम्य अर्थ प्रकाशित होता है । इस अनुभूत अर्थ में तत् शब्द है । यत् शब्द तो उत्तर वाक्यगत सामर्थ्य से कहा गया है । पूर्व वाक्यगत तत् शब्द के उपादान की अपेक्षा नहीं करता है । जैसे—

इह स जयतीति यदि न क्रियेत तदा यच्छब्दस्य साकाङ्क्षत्वम् ।

यासामम्बुधिरालवालवलयं चक्राचलेन्द्रो वृतिः,
कुल्याः सह्यकलिन्दविन्ध्यतनया मुख्या महानिम्नगा ।
मेरुः संश्रयभूरुहो मधुकरालापाः कवीनां गिरस्ताः
प्रीतिं जगतां नृसिंह दधतित्वत्कीर्तयो वीरुधः ॥२२॥

अत्र ताः प्रीतिमिति यदि न क्रियेत तदा यच्छन्दसाङ्क्षत्वम् ॥ क्वचित्पुनरुपात्त-वस्तु विषयतयोपकल्पितयोरुभयोरपि सामर्थ्यादाक्षेपः यथा—

न भवसि कथंकारश्लाघ्यः कलिङ्गपुरन्दरस्मर इति
वरारोहाः साक्षात्मुकुन्द इतीन्दिरा ।
सुरतरुरिति त्वां सेवन्ते निरन्तरमर्थिनो,
भरतमुनिरित्यार्यास्तोर्यत्रयी निपुणा अपि ॥२३॥

अत्र ततः कथं न श्लाघ्योभवसि यतस्त्वां सेवन्त इति । एवं तु योऽसावित्यत्र तच्छब्दोपादानं विना साकांक्षत्वम् । असाविति तच्छब्दार्थं एवेति यद्यभिसन्धिस्तन्न-बन्धुरम् ॥

---

अत्र स जयतीति यदि न भवेत् यदा यत् शब्दस्य साकांक्षत्वम् । यासामब्धिराल-बालवलयं चक्राचलेन्द्र इव वृत्तिः । कुल्याः सह्यकलिन्दविन्ध्यतनया मुख्या महानद्यः । सुमेरुः आश्रयसहितः वृक्षः, भ्रमराणां ध्वनिः कवीनां ताः वाचः । हे नरसिंह त्वत्यशसः विरुदावलिः जगतः प्रीतिं धारयति ।

अत्र 'ताः प्रीतिं' यदि न भवेत् तदा यत् शब्दस्य साकांक्षत्वम् । कुत्र पुनरुपात्त-वस्तु विषयतयोपकल्पितयोर्द्वयोरपि सामाथ्यीदाक्षेपः । यथा—

हे कलिङ्गनरेश ! इन्द्र इव न कथं भवान् श्लाघनीयोऽस्ति । कामदेव इति वारा-ङ्गनाः साक्षात् विष्णुरिति लक्ष्मीः कल्पवृक्ष इति त्वां सदैव याचकाः सेवन्ते । वेदानां गायने दक्षोऽपि भरतमुनिरित्यार्या मन्यते । अत्र ततः कथं न श्लाघ्योभवसि । यतस्त्वां सेवन्ते इति । एवं तु योऽयमित्यत्रतच्छब्दोपादानं विना साकांक्षत्वम् । अयमिति तच्छब्दार्थ एवेति यद्यभिसन्धिस्तन्न मनोरमम् ।

---

श्रीमान् नरसिंह नरेश ! तुम्हारा यश कवि काव्य शय्या को प्राप्त होता है । तुमसे तीनों लोकों के गर्भ भार से जिसका प्रकाश पीला पड़ गया है और रोमावली तलवार की ब्याज से (बहाने से) प्रौढ हो जाती है ।

पहले यत् शब्द कहा गया । तत् शब्द उपादान के विना साकाङ्क्ष के है । जैसे—जहाँ हाथी हिमपर्वत है । तारागण मोतियों का समूह है । शेवार, आकाश शंख कुमुदों का समूह गुरुधाम संन्ध्या मूगा है । दिग्गजों का झुण्ड हाथी घडियाल का समूह है । और क्या ? काली तलवार सभी निर्मल हैं । हे नरसिंह जो तुम्हारा यश

कविकुवलय प्रालेयांशुर्जगत्त्रयपावनै,
र्भवसि न गुणैः कस्य श्लाघ्यः कलिङ्गपुरन्दर ।
हिमरुचिरसौ कीर्त्या यस्य प्रकामपराजितः,
स्मरहरशिरः स्रोतस्विन्यां निमज्जति लज्जितः ।।२४।।

अत्रादः शब्दस्य तच्छब्दार्थप्रतीतिपथानधिरोहात् । अत्र तच्छब्दार्थप्रतीतिपद्धतिमध्यास्त एवेति यदि यौष्माकीणमाशयमधिवसति । तदा—

कति कति भुवः कोणे कोणे क्वचित् क्वचिदूर्जितै,
र्वितरणगुणैः प्राप्ताः ख्यातिं न सन्ति नराधिपाः ।
अलमधरयन्नेतानिन्दुश्रिया स्वयशः श्रिया,
स जयति महीमन्दारोऽसौ नृसिंहनरेश्वरः ।।२५।।

अत्रादस्तच्छब्दयोः प्रयोगे पौनरुक्त्यं दुष्परिहारं स्यात् । किं चादः शब्दस्तच्छब्दार्थमाहेति यदुच्यते तत्तुच्छम् । तच्छशब्दस्य यच्छब्दसान्निध्यमध्यासीनस्य प्रसिद्धपरामर्शित्वात् । यथा—

---

इन्द्र इव कलिङ्गनरेशः कविकमलविकासे भानुः त्रिलोकं पावनं कुर्वन् भवान् केन न श्लाघ्योऽर्थात् सर्वैरपि । हिमकान्तिरिव कीर्तिस्ते यस्य प्रकर्षः कामपराभूतः । कामदेवोऽयं शिरशि स्थितगङ्गायां निमज्जति लज्जितः सन् ।

अत्रादः शब्दस्य तच्छब्दार्थप्रतीतिमार्गं नारोहति । तत् शब्दार्थप्रतीतिपद्धतिमध्ये सति यदि भवदीयमाशयमधिवसति तदा—

पृथिव्याः कति कोणे कुत्र विजितदानगुणैर्विख्याता राजानो न सन्ति । चन्द्रकांतिः वृथैवैषां समक्षे । यशसा भूमेः कल्पद्रुमरूपो नरसिंहनरेशो विजयते ।

अत्रादः तत् शब्दस्य प्रयोगे पुनरुक्तातायाः दुष्परिहारोऽस्तु । किं चादः शब्दः तत् शब्दार्थं कथयति । यदि कथनीयं तर्हि न साधु । तत् शब्दस्य यत् शब्देन सान्निध्यवशात् स्थितप्रसिद्धपरामर्शः कारणम् । यथा---

---

है, वह क्षीर सागर पर्यन्त फैला हुआ है । ऐसे वह नरसिंह संसार में विजयी होते हैं । अर्थात् सर्वोत्कृष्ट हैं ।

यहाँ 'स जयति' में यत् के समान किया जावे तब यत् शब्द का साकांक्षत्व है । जिनके सागर थाले के वलय रूप हैं । चक्र के समान वृत्ति है । नालियाँ जैसे सह्य कलिन्द विन्ध्याचल की कन्या मुख्य रूप से महानदियाँ हैं । सुमेरु आश्रयसहित वृक्ष जैसे है । भौंरों की ध्वनियाँ कवियों की वाणी हैं । हे नरसिंह ! तुमसे उत्पन्न यश विरुदावली जगत की प्रीति को धारण करती है । यहाँ 'ताः प्रीतिम' ऐसा यदि न किया जाय तो 'यत्' शब्द का साकांक्षत्व है । कहीं पुनरुपात्त वस्तु विषय उन दोनों में उपकल्पित भी सामर्थ्य बल से आक्षेप होता है । जैसे—

हे कलिङ्गनरेश ! इन्द्रतुल्य तुम क्यों न प्रशंसनीय हो ? कामदेव समान वाराङ्गनाएँ साक्षात् विष्णु ऐसी लक्ष्मी, कल्पवृक्ष ऐसा तुम्हें सदैव याचक गण होकर सेवन करते हैं। वेदों के गायन में निपुण भरतमुनि भी आर्या ऐसा मानते हैं।

यहाँ तब किस प्रकार प्रशंसनीय नहीं होते हो, क्योंकि तुम सेवित किये जाते हो। इस प्रकार तो जो यह इसमें यहाँ 'तत्' शब्द के उपादान बिना साकांक्षत्व हैं। यह ऐसा तत् शब्दार्थ है। जो अभिसन्धि है। मनोरम है।

हे इन्द्र तुल्य कलिङ्गनरेश ! कवि कमल को विकसित करने में आप भानु स्वरूप हैं। आप तीनों लोकों को पवित्र करनेवाले किन गुणों से प्रशंसनीय नहीं हैं। हिम की कान्ति समान आप की कीर्ति से प्रकर्ष काम पराभूत है। यह काम शिव के शिर पर स्थित गङ्गा में लज्जित होकर डूब जाता है।

यहाँ अदः शब्द के तत् शब्दार्थ प्रतीति के मार्ग का आरोहण नहीं होता है। यहाँ तत् शब्दार्थ प्रतीति पद्धति के मध्य में ही वह है। यदि आप का आशय होता है। तब—

किस किस भूमि के कोने में कहाँ कहाँ विजित दान के गुणों से युक्त ख्याति को प्राप्त राजा गण नहीं हैं। चन्द्रमा की कान्ति इनके आगे व्यर्थ है। यश की शोभा से वह यह पृथ्वी के कल्पवृक्ष रूप नरसिंह नरेश विजयी होते हैं। अर्थात् वे सर्वश्रेष्ठ हैं।

यहाँ अदः तत् शब्दों के प्रयोग में पुनरुक्तता दुष्परिहार हो और क्या 'अदः' शब्द तत् शब्द के यत् शब्द के सान्निध्य के बीच में प्रतिष्ठित प्रसिद्ध परामर्श कारण है। जैसे—

---

modify without them, they will lose their relevance, In this discussion Vidyādhara has been at paint like Mammaṭa who has assigned a very long space to the discussion of the proper and improper. use of (yat) and (tat) and vidyādharaś discussion is still more datailed and scholarly, because he has raised cartain points in regard to the use of (yat) and (tat) in the context of not only (Dharma) and (Dharmībhāva); but also (Avayava) and (Avayavībhāva ) and as such context as have been considerd in the (Nyāya) theory of (Nigrahasthāna),

2—The other blemish is called (Prakramabhaṅga). The cases of this blemish are those in which a poet disagrees to a different order leaving out the order in which he began his description.

यत्तदुत्तीर्णमर्यादं नरसिंह नभस्तलं ।
कीर्तेस्तव तदप्यासीत् कस्तुरीतिलकं मुखे ॥२६॥

अत्र यत्तत्तदपीत्युक्तम् । यथा वा ।

यत्तद्वैरिवसुन्धरेशरमणीताटङ्कलीलायित,
स्तेयारम्भनिरङ्कुशं तव धनुस्तत् केन न श्लाघ्यते ।
मौर्वीचुम्बितकोटिना जलनिधिव्यालोलकाञ्चीगुणा,
जाता येन नृसिंह देव समरे सभ्रूविलासामही ॥२७॥

अत्र यत्तदित्यभिधाय तदित्यभिहितम् । एवमिदमदसावपि यच्छब्दसंनिधाने प्रसिद्धि परामृशतः । इतरथा तु प्रत्यक्षायमाणमर्थम् । तस्याद्योऽसावित्यत्र यच्छब्द-संनिध्यमध्यासीनस्यादः शब्दस्य प्रसिद्धिपरामर्शित्वात्तच्छदाकाङ्क्षा न विरमति । अतस्तच्छब्देन भवितव्यम् । ततश्च जगति स जयतीति पाठः परिणमयितव्यः ॥

**भवति प्रक्रमभङ्गः प्रकान्तं यत्र भज्यते वस्तु ॥२८॥**

---

हे नरसिंह ! यत्तद् मर्यादं गगनतलं लङ्घितं, तव यशसः तदपि कस्तुरीतिलकं मुखे आसीत् । अत्र यत्तत्तदपीति कथितम् । यथा वा—

यत्तद् शत्रुनरेशवधूनां ताटङ्कः क्रीडायां चञ्चलः तव धनुषः निरङ्कुशसंचालनम् केन श्लाघनीयमस्ति । प्रत्यञ्चासन्धानेनैव सागरो व्याकुलो भूत्वा पृथिव्यामेखलास्वरूपमधारयत् । येन नरसिंहदेवो रणे, स्थितः भूमिश्च भ्रूविलासयुक्ताऽभवत् ।

अत्र यत्तदित्यभिधाय तदित्यभिहितम् । एवमिदमसावपि तत् शब्दसन्निधाने प्रसिद्धिमाप्नुतः । अथवान्येन प्रत्यक्षार्थो द्योत्यते । अतोऽत्रासौ यत्शब्देनसान्निध्येनासीनोऽदः शब्दस्य प्रसिद्धिप्रतिष्ठाकारणात् तत् शब्दस्य साकाङ्क्षत्वे विश्रामो नास्ति । अत एव तत् शब्दः साधु । तदनन्तरं 'जगति स जयति' इति पाठो न्याय्यः ।

यत्र प्रस्तावभङ्गो भवति, तत्र प्रकरणभङ्गदोषो भविष्यति ।

---

हे नरसिंह ! जो आकाश तल की मर्यादा पार किया गया है, वह भी तुम्हारी कीर्ति का कस्तुरी तिलक था । यहाँ यत् तद् भी कहा गया है । दूसरा उदाहरण—

जो शत्रु राजा की वधू के ताटङ्क आभूषण से क्रीडा में चञ्चल है, वह तुम्हारे धनुष का निरङ्कुश चलना है । किसके द्वारा प्रशंसनीय नहीं है । प्रत्यञ्चा चढ़ने से ही सागर व्याकुल हो उठा । पृथ्वी करधनी समान हो गयी । नरसिंह देव के रण में स्थित होने में भूमि भ्रूविलास युक्त हो गई ॥

यहाँ यत् तद् इसे कहकर तद् यह कहा गया है । इस प्रकार इदम् अदस् दोनों यत् शब्द के संविधान में प्रसिद्धि प्राप्त करते हैं । अथवा अन्य तो प्रत्यक्ष अर्थ द्योतक है । अतः जो यहाँ असौ यत् शब्द सान्निध्य के मध्य आसीन अदः शब्द की प्रसिद्धि की प्रतिष्ठा के कारण तत् शब्द की आकाङ्क्षा में विश्राम नहीं है । इसलिए तत् शब्द होना चाहिए । तदनन्तर 'जगति स जयति' यह पाठ उचित है ।

जहाँ प्रस्ताव का भङ्ग हो जाता है, वहाँ प्रक्रम भङ्ग दोष होता है ।

प्रक्रमस्य प्रस्तावस्य भङ्ग इति कृत्वान्वर्थाभिधानोऽयम्। उद्देश्यप्रतिनिर्देश्यभावः प्रक्रमस्य विषयः। उद्देश्यप्रतिनिर्देश्यभावाभावविषयं च पौनरुक्त्यम्। अयं च प्रकृतिप्रत्ययोपसर्गविभक्तिवचनकालकारकलिङ्गसर्वनामविशेषणपर्यायवाक्यसमासालङ्कारगतत्वेन भवन्ननेकधा भवति। क्रमेण प्रत्युदाह्रियते।

जीयात् पार्वणरोहिणीशकिरणश्रेणीसमालिङ्गित,
क्षीराम्भोधितरङ्गलङ्घितयशोराशिः कलिङ्गेश्वरः।
आश्चर्यं समरे निमज्य सहसा यत्खड्गधाराम्भसि,
प्रोन्मज्जन्ति समन्ततः प्रतिभटाः स्वर्वाहिनीस्रोतसि ॥२९॥

अत्र निमज्येत्यस्य स्थाने निपत्येति यद्यकरिष्यत तदा प्रकृतिप्रक्रमभङ्गसमपस्यत।

लोके विक्रमितुं त्रिविक्रमपदाद्दातुं सुरक्ष्मारुहा-,
द्धात्रीं धातुमहीश्वरात् प्रभवितुं पत्युश्च नाकौकसाम्।
तत्तत्कीर्तिविकासवासितनभः सीम्नां गुणानां निधिः।
को वा वीर नृसिंहदेव नृपतिस्त्वामन्तरेणाधिकः ॥३०॥

---

प्रस्तावभङ्गः प्रक्रमभङ्गाभिधानोऽयमित्यन्वर्थकः। उद्देश्यं प्रति निर्देशाभावः प्रस्तावस्य विषयो भवति। अस्याभावः पुनरुक्तत्वम्—अयं च प्रकृतिप्रत्ययोपसर्गविभक्तिवचनकालकारकलिङ्गसर्वनामविशेषणपर्यायवाक्यसमासालङ्कारगतभेदेनानेकधा भवति। क्रमशः उदाहरणमत्र।

कलिङ्गेश्वर ! भवतो यशोराशिः क्षीरसागरतरङ्गं लङ्घितवान्। पौर्णमास्याश्चन्द्रकिरणसमूहेन स्पष्टम् ईदृशः सः नरेशो विजयते। अहो आश्चर्यं महत्। रणक्षेत्रे सहसैव यस्य खड्गधारायां निमज्य शत्रवोऽमिताः पतन्ति। सेनायामपि पतन्ति।

अत्र निमज्येति स्थाने निपत्येतिकृतं तर्हि प्रकृतेप्रक्रमभङ्गो दोषो भविष्यति। लोकमतिक्रमितुं विष्णुचरणादप्यधिक, दानाय कल्पवृक्षादधिकं, पृथ्वीं धारयितुं शेषनागादप्यधिकं नरसिंहदेवस्य यशः। तेन यशसा सुगन्धितोऽयमाकाशः। गुणानां निधिः सीम्नामथवा कोऽप्यधिको वीरदेवनरेशात्। अर्थात् कोऽपि नास्ति।

---

प्रक्रम का प्रस्ताव भङ्ग करके यह अन्वर्थक कहा गया है। उद्देश्य के प्रति निर्देश्य भाव प्रस्ताव का विषय है और इसका अभाव पुनरुक्तता है। यह प्रकृति, प्रत्यय उपसर्ग, विभक्ति, वचन, काल, कारक, लिङ्ग सर्वनाम विशेषण, पर्याय, वाक्य समास अलंकार गत भेद से अनेक हैं। इसका क्रम से उदाहरण दिया जाता है। पूर्णिमा के चन्द्र किरण के समूह से स्पर्श किए जाते हुए; क्षीरसागर के लहर से लांघे गए यशोराशि वाले कलिंग नरेश हैं। उनकी विजय हो। आश्चर्य है। रण क्षेत्र में एकाएक जिसकी तलवार की धारा में डूबकर चारो ओर शत्रु इधर उधर पड़ जाते हैं। सेना की धारा में गिर जाते हैं।

अत्र दानाय कल्पद्रुमादिति पाठे प्रत्ययप्रक्रमभङ्गो भवति ।

**दयायै दृक्कर्णः सरसकविसूक्ताय वदनं,**
**सरस्वत्यै पृथ्व्यै भुजशिखरमीशायहृदयम् ।**
**इति प्रत्तास्तावत् स्वयमवयवा अप्यविरतं,**
**प्रदेयं किं कस्मै न तव नरसिंह क्षितिपते ॥३१॥**

अत्र प्रत्ता इत्यभिधाय प्रदेयमित्यभिहितम् । इतरथोपसर्गप्रक्रमभङ्गप्रसङ्गः ।

**मदान्धास्त्वन्नागाः प्रतिभटपुरं वीर सहसा,**
**घनाक्रीडं क्रीडाशिखरिकमनीयं जगृहिरे ।**
**ददुस्तेभ्यः कल्पद्रुमपरिगतोद्यानसुभगं,**
**भविष्णुभ्राजिष्णुत्रिदशगिरिगीर्वाणनगरम् ॥३२॥**

अदुरितिपाठे त्वत्र विभक्तिप्रक्रमभङ्गः ।

**वीर नृसिंहकवित्वं चम्पकसौरभ्यमिन्दुसौन्दर्यम् ।**
**गङ्गाजलमाधुर्यं कस्य न भुवनेषु सर्वदा मान्यम् ॥३३॥**

---

अस्मिन्नुदाहरणे दानायेति स्थाने कल्पद्रुमपाठात् प्रत्ययगतप्रक्रमभङ्गदोषो भवति । हेनरसिंह नरेश ! तव दृष्टिः दयायै; कर्णः सरसकविकाव्याय, मुखं सरस्वत्यै, भुजशिखरं पृथिव्यै, हृदयमीशाय ॥ एवं विधो वितरको भवान् कस्मै तवाङ्गं न प्रदेयम् ।

अत्र प्रत्तेति स्थाने प्रदेयमिति कथितम् । इह तूपसर्गगतप्रक्रमभङ्गदोषोऽस्ति ।

मेघाः इव तव मदान्धाः हस्तिनः शत्रुनगरीं प्रविशन्ति । क्रीडाशिखरकमनीयकं क्रीडागृहृणन्ति । कल्पद्रुमस्तेभ्यः शोभोपेतः सुन्दरोद्यानस्य । देवपुरोऽयं देवगिरिः सुन्दरः कान्तिसंयुक्तश्च । अदुरितिपाठे विभक्तिगाप्रक्रमभङ्गदोषो भवति ।

लोकेऽस्मिन् सदा मान्यं गंगाजलमाधुर्यम् । चन्द्रसौन्दर्यं चम्पकसौगन्ध्यं वीर नरसिंहकवित्वम् ।

---

इस उदाहरण में 'निमज्य' के स्थान पर 'निपत्य' ऐसा यदि किया जाय तब प्रकृति प्रक्रम भङ्ग दोष है । लोक में लाँघने के लिए विष्णु के चरण से भी बढ़कर दान देने के लिए कल्पवृक्ष से बढ़कर पृथ्वी को धारण करने के लिए शेषनाग से बढ़कर और स्वर्ग भवन के स्वामी वैकुण्ठ पति के प्रभाव के लिए उनसे भी बढ़कर नरसिंह देव हैं । उनकी कीर्ति फैलने से आकाश सुगन्धित है । गुणों की सीमा की निधि है । अथवा कौन ऐसा है ? नरसिंह देव नरेश ! जो तुमसे अधिक हो अर्थात् कोई नहीं है ।

इस उदाहरण में 'दानाय' के स्थान पर 'कल्पद्रुम पाठ करने पर प्रत्ययगत प्रक्रमभङ्गदोष होता है । नरसिंह नरेश ! दया के लिए दृष्टि, सरस कवि सूक्ति

अत्रैकवचनं निर्व्यूढमिति न वचनप्रक्रमभङ्गः ॥

सूत्रामा गोत्रभेदं रचयति भजते दृष्टिवैषम्यमीशो,
हीनं कृष्णोऽधिशेते क्षिपति सुमनसो मार्गणान् पुष्पचापः ।
इन्दुर्दोषाकरत्वं कलयति कुमुदं मन्दयत्यंशुमाली,
पश्यामस्ते नृसिंह क्षितितलतिलक क्वापि नैवोपमानम् ॥३४॥

अत्र वर्तमानस्य कालस्य प्रक्रान्तस्य निर्वाहान्नकालप्रक्रमभङ्गः ।

तव क्रियन्ते करुणाकटाक्षैः श्रियः कवीनां नरसिंहदेव ।
ताभिर्विकासा मनसः पुनस्तैः, सूक्तानि तैस्त्वद्गुणवर्णनानि ॥३५॥

---

अत्रैकवचनं कथितं, इह तु प्रक्रमभङ्गदोषो नास्ति ।

इन्द्रः पर्वतं भिनत्ति । भवान् गोत्रं न भिनत्ति । हे नरसिंह ! शिवस्योपमा यदि त्वां प्रति दत्ता तस्य तर्हि त्रीणि नेत्राणि । कृष्णो विष्णुः शेषोपरि शेते । कामदेवः पुष्पबाणं क्षिपति । चन्द्रः रात्रौ, च सूर्यः कुमुदं तु म्लानयति ।

हे नरसिंहनरेश ! श्रेष्ठो भवान् । कीदृशी देयोपमा । भवान् पृथ्वीतलतिलकः । कुत्रापि भवतो नोपमानम् । यदि त्वां प्रति पश्यामः । अत्र वर्तमानस्य कालस्य प्रक्रान्तस्य निर्वाहान्न कालप्रक्रमभङ्गदोषोऽस्ति ।

हे नरसिंह नरेश ! कवीनां शोभा तव करुणाकटाक्षैर्भवति । शोभा विकसितेन मनसः पुनरपि तेन ते गुणानां वर्णने कवेर्विकासो भवति ।

---

के लिए कान, सरस्वती के लिए मुख पृथ्वी के लिए भुजशिखर, ईश के लिए आप हृदय हैं । इस प्रकार आप वितरक (दाता) हैं । किसे तुम्हारे अङ्ग प्रदेय नहीं हैं । इस प्रकार दिये हुए अवयव स्वयं भी निरन्तर किसे प्रदेय नहीं हे । अर्थात् सब कुछ प्रदेय है ।

इस उदाहरण में प्रत्ता के स्थान पर प्रदेयम् यह कहा गया हैं । यहाँ उपसर्गगत प्रक्रमभङ्ग दोष है ।

तुम्हारे मदान्ध हाथी शत्रु की नगरी को सहसा मेघों के समान क्रीडा योग्य विलास शिखर सदृश कमनीय क्रीडा को ग्रहण कर लिए हैं । उनके लिए दिये कल्पवृक्ष जो उद्यान की सुन्दर शोभा हैं, सुन्दर होनहार कान्ति युक्त देव गिरि का देवपुर है । 'अदुः' इस पाठ में विभक्तिगत प्रक्रमभङ्गदोष है ।

वीर नरसिंह की कविता, चम्पक पुष्प की सुगन्धि, और चन्द्रमा की सुन्दरता है । गंगा के जल की मधुरिमा किसे इस त्रिलोक में सदा मान्य नहीं है ।

यहाँ एकवचन कहा गया है । इसमें वचन प्रक्रमभङ्ग नहीं है । इन्द्र पर्वत का भेदन करते हैं । आप गोत्रभेदन नहीं करते हैं । हे नरसिंह ! आपको शंकर की उपमा दी जाय तो उनके तीन नेत्र हैं । कृष्ण (विष्णु) शेषनाग पर सोते हैं । कामदेव पुष्पबाण फेंकता है । चन्द्र रात्रिकारक है तो सूर्य कुमुद को मुर्झाता है । हे नरसिंह

इहानुक्तस्य कर्तुः प्रकान्तस्य निर्वहणान्न कारकप्रक्रमभङ्गः ।

विम्बं चन्द्रमसः कलङ्कमयते धत्तेविकारं पयः,
कुन्दं म्लानिमुपैति किं न कुरुते मैत्रीं मृणालं जलैः ।
मालिन्यं भजते हरित्करिमदस्यन्देन मन्दाकिनी,
स्रोतो वीर नृसिंह भूप भवतः केनोपमेयं यशः ।।३६।।

अत्र नंपुसकमेव प्रति कर्तृगतत्वेनोपनिवद्धमिति न लिङ्गप्रक्रमभङ्गप्रसङ्गः ।

लोकेऽस्मिन् नरसिंहदेव नृपतिर्दाता न कल्पद्रुमस्तेजस्वी स न,
पद्मिनीसहचरः कान्तः स नो चन्द्रमाः ।
गम्भीरः स न वाहिनी परिवृढस्तुङ्गः स नो मन्दरः,
शिल्पज्ञः स न पद्मभूः क्रिमपरं वाग्मी स नो वाक्पतिः ।।३७।।

---

इहानुक्तस्य कर्तु; प्रकान्तस्य निर्वहणान्न कारकप्रक्रमभङ्गदोषो भवति ।

हे वीर नरसिंह नरेश ! भवतो यशसः तुलना वोपमा केन देया । कलङ्कयुक्तश्चन्द्रः । दुग्धे विकारो भवति । कुन्दपुष्पमपि कृष्णायते । जडजलेन भिन्नत्वं कथं नोपनीतं मृणालस्य दिग्गजानां मदस्रावेण मन्दाकिन्याः स्रोतो मालिन्यं भवति ।

अत्र नंपुसकमेव प्रति कर्तृगतत्वेनोपनिबद्धम् । एवञ्च लिङ्गप्रक्रमभङ्गप्रसङ्गो न भवति ।

संसारेऽस्मिन् नरसिंह देवो राजा दाता, न तु कल्पद्रुमः । स एव तेजस्वी । न तु सूर्यः । स सुन्दरः न तु चन्द्रः । सः गम्भीरः न तु सेनापतिः । स उच्चो न तु मन्दराचलः । स शिल्पज्ञः न तु व्रह्मा । किं कथनीयमधिकम् । स कुशलो वक्ता न तु वृहस्पतिः ।

---

नरेश श्रेष्ठ । तुम्हारी उपमा किससे दी जाय । हे नरसिंह ! आप पृथ्वीतल तिलक हैं । जब हम देखते हैं, तब कहीं भी तुम्हारा उपमान नहीं है ।

यहाँ वर्तमान काल के प्रकान्त के निर्वाह से काल प्रक्रमभङ्ग दोष नहीं है । हे नरसिंहदेव ! कवियों की शोभा तुम्हारी करुणा कटाक्षों से होती है । शोभा से विकसित मन का पुनः उनके द्वारा तुम्हारे गुणों के वर्णन में कवि का विकास होता है ।

इसमें अनुक्त कर्ता के प्रकान्त के निर्वहन से कारकप्रक्रमभङ्ग नहीं है ।

हे वीर नरसिंह नरेश ! आप के यश की तुलना एवं उपमा किससे की जाय । चन्द्रमा का विम्व कलंकयुक्त है । दूध में विकार उत्पन्न हो जाता है । कुन्द का पुष्प काला हो जाता है । जल से मृणाल मैत्री कैसे न करे । दिग्गजों के मद के स्राव से मन्दाकिनी का स्रोत मलीन हो जाता है ।

यहाँ नंपुसक ही के प्रति कर्तृगत से अपनिबद्धता है । इस प्रकार लिङ्गप्रक्रमभङ्ग का प्रसंग नहीं है ।

इस संसार में नरसिंह देव राजा दाता हैं। कल्पवृक्ष नहीं। वे ही तेजस्वी हैं, सूर्य नहीं। वे सुन्दर हैं, चन्द्रमा नहीं। वे गम्भीर हैं। सेनापति नहीं। वे ऊँचे हैं, मन्दराचल नहीं। वे शिल्पज्ञ हैं, ब्रह्मा नहीं। और क्या कहा जाय ! वे बोलने में चतुर हैं। बृहस्पति नहीं।

---

For example a description starting active voice is unnecessarily changed into the passive voice in the next sentcnce. One set of root words, suffices, affices, declension number, tense, case, gender pronoun, adjective etc. to a different set, where they are completely uncalled for.

For example, when I last saw him, I found him reading a book, If this sentence were to be changed (when I last saw him I find him reading a book), the sentence will be a case of (Bhagna Prakrama), because the sentence was begun in the past tense so that it can not admit of the word (find) in the present tense. Here the change of the tense is defective.

Let the buffaloes wallow in the pond, let stags enjoy themselves under the shade of trees, Let muste plants be eaten by pigs and let us put a stop to kill animals now.

Here the first; second and the fourth sentences beginning with (let) are in active voice. while the third sentence is in the coordinate clauses must ordinarily commit errors of order in choosing pronouns, adjective etc.

For example, (the sun is crimson while arising and it is crimson while setting). It does not change its colour in either states, Those that are great, do not change the position; no matter; how lucky or how sad their days. If in this description the poet were to say while rising the sun is crimson while setting the sun is red such change of adjectives will be very unhappy and will lead to (Prakramabhanga),

This discussion is again of the same type as found in the (Kāvya Prakāś) of Mammaṭa, Vidyādhara however must be given credit for a more detailed discussion of this blemish as also of the selection of more appealing examples.

अत्र तच्छब्देनैव प्रक्रान्तेन निर्वाहान्नास्त्येव सर्वनामप्रक्रमभङ्गः ।

प्रागासीन्मकरन्दपिच्छिलदले पद्मस्य गर्भे ततः ।
शौरेः कौस्तुभकान्तिपूरसुभगाभोगे भुजाभ्यन्तरे ।
आवासस्तव लक्ष्मि सम्प्रति पुनर्निर्व्याजमूर्च्छत् कृपा,
स्रोतः शितलिते नृसिंह वसुधानाथस्य नेत्राञ्चले ॥३८॥

अत्र सविशेषणस्य विशेषस्याभिधातुं प्रक्रान्तस्य निर्वाहान्न विशेषणप्रक्रमभङ्गः ।

किमेतासामन्तः पुरपरिसरे केवलमदभूसूर्यं-
पश्यत्वं त्वदरिसुदृशामुत्कलपते ।
इदानीमप्येता गिरिगहनगेहप्रणयिनीरसूर्यं
पश्यत्वं सततमुरबध्नाति किमिदम् ॥३९॥

---

अत्र तत् शब्देनैव प्रक्रान्तेन निर्वाहान्नास्त्येव सर्वनामप्रक्रमभङ्गदोषः । हे लक्ष्मि ! ते निबासो नरसिंहनरेशस्य शीतलनेत्रपुटे । पुनः निर्व्याजमुर्च्छत्कृपास्रोतः । मकरन्दः पूर्वसमये कमलमध्ये वसति स्म । तदनन्तरं शूरतयायुक्तस्य कौस्तुभमणेः कान्त्यातिसुन्दरनरसिंहभुजामध्ये निवासेन शोभनमभवत् ।

अत्र विशेषणसहितेन विशेष्यककथनाय प्रक्रान्तस्य निर्वाहान्न विशेषणप्रक्रमभङ्गदोषो भवति ।

एतासां रमणीनामन्तःपुरपरिसरेऽभूत् केवलमसूर्यंपश्यत्वम् । यदा सर्वे शत्रुनरेशाः पलायिताः । घोरपर्वतस्य कन्दरायां प्रणायिनीरसूर्यंपश्यत्वमधुनापि सदैव । अहो आश्चर्यम् ।

---

यहाँ तत् शब्द से ही (प्रक्रान्त) प्रस्ताव के निर्वहन होने से सर्वनाम प्रक्रम भङ्ग दोष नहीं है ।

हे लक्ष्मी ! नरसिंह नरेश के शीतल नेत्र पुटो में तुम्हारा निवास है । पुनः व्याज रहित मूर्च्छा से कृपा का स्रोत है । मकरन्द पहले कमल के बीच में था । उसके बाद शूरता से युक्त कौस्तुभ मणि की कान्ति से पूर्ण सुन्दर नरसिंह की भुजाओं के मध्य शोभित हुआ ।

यहाँ विशेषण सहित विशेष्य कहने के लिये प्रस्ताव के निर्वाह से विशेषण प्रक्रम भङ्ग दोष नहीं है ।

इन रानियों के अन्तःपुर के भूमि पर सूर्य दिखाई नहीं देता था । इस समय जब सभी शत्रु राजा भगे । घने पर्वत की कन्दरा में प्रेम करने वाली सूर्य को अब भी निरन्तर नहीं देखती । अरे आश्चर्य है ।

अत्र द्वितीयस्यासूर्यं पश्यत्वमिति शब्दस्य स्थाने 'अनर्कालोकित्वम्' इति यदि क्रियते तदा पर्यायप्रक्रमभङ्गः ।

**संत्यज्य पुष्पसमयं कुसुमाभिवृद्धिं, ज्योत्स्नाविजृम्भितमपास्य तुषारभानुम् ।**
**मुक्ताफलोल्लसितमम्बुनिधिं विहाय, कीर्तिस्तव स्फुरति वीरकलिङ्गनाथ ।।४०।।**

अत्र वाक्येन वक्तुं प्रक्रान्तं निर्वाहं प्रापितमिति न वाक्यप्रक्रमभङ्गः ।

**काश्मीरपांसुरुचिरांशुकचारुहारैः, यैप्रागवभौ कुचतटीरिपुसुन्दरीणाम् ।**
**सैवाद्य भाति कुपिते त्वयि वीरभूभृद्, धातुच्छटातरुणपल्लवरक्तसूत्रैः ।।४१।।**

अत्र समासस्य निर्गूढत्वान्न समासप्रक्रमभङ्गः ।

**त्यागस्तावत् सुरतरुयशः कौमुदीकालमेघः,**
**शौर्यं कुन्तीतनयचरितश्रुत्यनध्यायपर्व ।।४१।।**
**कान्तिः पुष्पायुधवपुरहंभावरुद्रावलोकः,**
**कस्ते वक्तुं प्रभवति गुणान् श्रीनृसिंहक्षितीन्द्र ।।४२।।**

---

इह द्वितीयस्यांसूर्यंपश्यत्वमिति शब्दस्य स्थानेऽनर्कालोकित्वम् । इति यदि भवेत् तर्हि पर्यायप्रक्रमभङ्गदोषो भवति ।

हे वीर कलिङ्गनरेश ! वसन्तसमयं परित्यज्य, चन्द्रज्योत्स्ना विज्जृम्भितंचन्द्रं च विहाय मुक्ताफलेन शोभितसागरं व्यतिरिच्य ते कीर्तिः सर्वत्रास्ति ।

इह वाक्येन कथनेन विषयस्य निर्वाहात् वाक्यप्रक्रमभङ्गो नास्ति । शत्रुनरेशाणां वधूनां स्तनाग्रभागाः प्रथमे तु कुंकुमसुवस्त्रहारैः सुसज्जिताऽ । अद्य तु वीर नरेश ! त्वयिक्रोधितेसति धातुकान्त्या नूतनपल्लवानामरुणवर्ण इव सुशोभिताः ।

अत्र समासस्य निर्व्यूढत्वान्न समासप्रक्रमभङ्गोऽस्ति । हे वीर नरसिंहनरेश ! तव गुणा अकथनीयाः न कोऽपि कथने समर्थः । यथा कालमेघो वर्षति,संसारः संसरति । त्यागस्तव कालमेघ इव । यशः कौमुदीस्वरूपम् । वीरत्वं कुन्तीपुत्रार्जुनसदृशम् । वेदानध्यायपर्वं । श्वेतत्वं कामदेवशरीरमिव निर्मलम् । कामदेवस्याहंकारभावः रुद्रावलोकोऽस्ति ।

---

यहाँ दूसरे असूर्यंपश्यत्वं शब्द के स्थान पर अनर्कालोकित्वम् यह यदि किया जाता है । तव पर्याय का प्रक्रम का भङ्ग होता है । हे वीर कलिङ्ग नरेश ! वसन्त पुष्प वृद्धि, चन्द्र ज्योत्स्ना चन्द्रमा को छोड़कर मुक्ता फल उल्लसित समुद्र को छोड़कर सर्वत्र तुम्हारी कीर्ति है ।

इस वाक्य को कहने वाले बिषय के निर्वाह करने से वाक्य प्रक्रम भङ्ग दोष नहीं है । शत्रु राजा के बधुओं के स्तन के आगे का भाग जो पहले कुङ्कुम एवं सुन्दर वस्त्रों तथा हारों से सुशोभित था । वही आज ऐ वीर नरेश ! तुम्हारे क्रोधित होने पर धातु की कान्ति से नवीन पत्तों वाले लाल वर्णसमान शोभित हैं । इसमें समस्त निर्व्यूढ होने से समास का प्रक्रम भङ्ग दोष नहीं है ।

हे श्री नरसिंह नरेश ! तुम्हारे गुणों को कहने में कौन समर्थ है । जैसे काल मेघ वर्षता है, तो संसार बह जाता है ।

अत्र रूपकस्य निर्वाहान्नालंकारप्रक्रमभङ्गः।

अत्र प्रकृतिप्रत्ययपर्यादीनां प्रक्रान्तानामर्थभेदाभावेऽप्येकरसायाः प्रतीतेः।

परिस्खलनं प्रतिभातीति न शब्दभेदमाद्रियन्ते कवयः।
यदवाच्यस्य वचः स्यादवाच्यवचनं तु तद्गदितम् ॥४३॥

निःशेषनिर्जरनमस्कृतपादपद्मं यं नीलपूर्वमिह लोहितमामनन्ति।
देवः स एव भवतः शशिखण्डमौलिः, श्रेयः श्रियं दिशतु वीरनृसिंहदेव ॥४४॥

इह नीललोहितइति प्रसिद्धायाः संज्ञाया विशेषणविशेष्यभावेनाभिधानमनुचितम्। विरोधात्। संज्ञायाः संज्ञिगतत्वेनैव विशेषणत्वमुचितं न स्वगतत्वेन।

---

इह रूपकस्य निर्वाहान्नालङ्कारप्रक्रमभङ्गोऽस्ति।

अत्र प्रकृतिप्रत्ययपर्यायादीनां विषयो भङ्गो भवति। अर्थभेदेऽप्येकोरसः तस्य प्रतीतिर्भ्रष्टा। एवं कवयः शब्दभेदं नादृतवन्तः। अवाच्यवचनं तत्र भवति यत्रावाच्यकथनं भविष्यति।

सर्वैर्देवैः कमलचरणयुगलं यस्य नमस्कृतम्। नीललोहितस्तु शिवोऽस्ति। स एव भवतो महादेवः हे वीरनरसिंहदेव! शिवो भवद्भ्यः कल्याणकारिणीलक्ष्मीं प्रददातु।

अत्र नीललोहितो योऽतिप्रसिद्धस्तस्य संज्ञाया विशेषणविशेष्यभावेन कथनमनुचितम्। यतो द्वयोर्विरोधो भवति। संज्ञायाः संज्ञितत्वेनैव विशेषणत्वमुचितम्। न तु स्वगतत्वेन।

---

आपका त्याग कालमेघस्वरूप है। यश कौमुदी रूप में है। वीरता कुन्ती के पुत्र अर्जुन समान है। वेदानध्याय पर्व हैं। कान्ति कामदेव शरीर सदृश है। अहंकार भाव रुद्रावलोक है। इसमें रूपक के निर्वाह होने से अलंकार प्रक्रमभङ्ग नहीं है। यहाँ प्रकृति, प्रत्यय, पर्याय आदि का विषयभङ्ग है। अर्थ भेद होने पर भी एक रस जो है, उसकी प्रतीति भ्रष्ट होती है। इस प्रकार कविगण शब्द भेद का आदर नहीं करते हैं।

अवाच्य वचन दोष वहाँ माना जायगा, जहाँ अवाच्य कथन होता है। सभी देवता से नमस्कृत चरण कमल है, नीललोहित शंकर भगवान को कहते हैं। वह ही आपके महादेव हैं। हे वीरनरसिंहदेव! शंकर आपको कल्याणकारी लक्ष्मी प्रदान करे।

यहाँ नीललोहित जो प्रसिद्ध हैं, उसकी संज्ञा के विशेषण विशेष्यभाव से कहा जाना अनुचित है। क्योंकि दोनों में विरोध है। संज्ञा के संज्ञिगतत्व से ही विशेषणत्व उचित है। न कि स्वगतत्व से।

---

3—Another blemish is called (Avācyavacana;

किं चायमभिधानानुकारः । स पुनरुभयप्रकारः शाब्दार्थत्वभेदात् । तत्र शाब्दो यत्रेतिनावच्छेदः क्रियते । यथात्रैव 'यं नीललोहित' इति स्फुटमामनन्ति इति पाठे। आर्थो यत्रेतिना नावेच्छदः । यथात्रैव 'यं नीललोहितममी स्फुटमामनन्ति इति पाठे । प्रकृते तावदमिधानं नीललोहितइतिन तु नील पूर्वोलोहित इति । अतोऽभिधानेतरानुकरणस्यावाच्यस्य वचनं दोषः ।

---

तर्हि किञ्चाभिधाननुकरणीयत्वम् । शाब्दत्वार्थत्वभेदेन स द्विविधः । यत्रावच्छेदो नास्ति तत्र शाब्दः । यथैहैव—यं नीललोहितः इति स्पष्टरूपेणामनन्ति । आर्थस्तत्र भवति यत्रावच्छेदो नास्ति । यथात्रैव । यं नीललोहितमिति पाठे स्पष्टरूपेण मन्यते । प्रकृते तदा नीललोहित इति कथनं तु साधु भवति । किन्तु नीलपूर्वो लोहित इति प्रयोगो नोचितः । अत एवाभिधानेऽन्यस्यानुकरणस्यावाच्यवचनं भविष्यति । तत्र दोषो भवति ।

---

तो और क्या अभिधान अनुकरणीय है ? शाब्दत्व आर्थत्व भेद से वह पुनः दो प्रकार का होगा। जहाँ अवच्छेद नहीं हैं; वहाँ शब्द सम्बन्धी है । जैसे यहाँ ही 'यं नीललोहित' में स्पष्ट रूप से मानते हैं । अर्थ सम्बन्धी वहाँ है; जहाँ इति से अवच्छेद नहीं है । जैसे यहाँ ही, 'यं नीललोहितम्' पाठ में स्पष्ट रूप से मानते हैं। प्रकृत में तत्र नीललोहित ऐसा कथन तो ठीक है । परन्तु नीलपूर्वोंलोहित इस प्रकार का प्रयोग ठीक नहीं है। अर्थात् समुचित नहीं है। इसलिए अभिधान करने में दूसरे के अनुकरण का अवाच्य वचन दोष होगा ।

---

i. e, saying what should have not been said. For example, (Neel Lohita) in a compound means the God (śiva), but to say that all people worship the God (Lohita) Prefixed by the word (Neel) leads to (Avācyavacana) blemish, because (Neela) and (Lohita) being contradictory to each other can not make out any sense, if they are separated.

Now this prefixed by (Neela) should not have been said to yield, the sense of ( Neela Lohịta ) because it fails to give the same meaning as is given by the compound words (Neelalohita).

चमत्कारं गौरीसहचरतनुस्पर्धि न कथं,
विधत्ते भूयांसं भुवि तव कलिङ्गेश्वरयशः ।
यदन्तः कालिन्दीतटरुहतमालद्युतिनभः,
सुधाभानुक्रोडस्थितहरिणकेलिं कलयति ॥४५॥

अत्र तनुतटरुहस्थितपदान्यवाच्यानि । तस्मात् परिस्पर्धिकालिन्दी परिसरक्रोडीकृतेतिपठनीयम् ।

कारणाधारसम्बन्धैर्व्यभिचारो न दृश्यते ।
यत्र तस्य प्रयोगे स्यादवाच्यवचनं यथा ॥४६॥ यथा—
हृदा हृष्यति जानाति ध्यायत्यध्येतिखिद्यते ।
विलोकयति नेत्रेण श्रवणेन शृणोति च ॥
चित्रं चेतसि चिन्तेर्ष्याहर्षेच्छाक्रोधविस्मयाः ।
मनसि प्रमदोत्साहभयज्वरमदात्ययाः ॥४७॥

---

शिवदेहस्पर्धि कथं न चमत्कारम् । कलिङ्गनरेशस्य यशः पृथिव्यामत्यधिकम् । यत्यशः यमुनातटस्य तमालवृक्षाणां कान्तिसदृशं गगनपर्यन्तं विस्तृतम् । तव यशः चन्द्रस्य क्रोडेऽवस्थितहरिणस्य सौन्दर्यमाप्नोति ।

अत्र तनुतटरुहस्थितपदान्यवाच्यानि । अत एव परिस्पर्धिकालिन्दीपरिसरे क्रोडेस्थितपदं पठनीयम् । कारणस्याधारसम्बन्धेन व्यभिचारो न दृश्यते । यत्र तु तस्य प्रयोगो भवति तत्रावाच्यवचनं दोषो भविष्यति । उदाहरणमिह—

हृदयेन हर्षः, ज्ञानं, ध्यानमध्ययनम् । विलोकनं नेत्रेण भवति । कर्णेन श्रवणं संभावितम् । अहो चित्रम् । चित्ते चिन्तेर्ष्याहर्षेच्छाक्रोधविस्मयविषयाः । मनसि प्रमादोत्साहभयज्वरमदादिविषयाश्च ।

---

शंकर की शरीर से स्पर्धा करते क्यों न हो ? कलिङ्गनरेश तुम्हारा यश पृथ्वी में अत्यधिक है, जो यश यमुना के तट के तमाल वृक्ष की कान्ति समान आकाश के अन्त तक है । तुम्हारी कीर्ति चन्द्रमा की गोद में स्थित हरिण के सौन्दर्य को प्राप्त करता है ।

इसमें तनुतटरुह स्थित पद अवाच्य हैं । इसलिए परिस्पर्धा कालिन्दी परिसर क्रोड में स्थित पद पठनीय है । कारणों के आधार पर सम्बन्धों से व्यभिचार नहीं दिखाई पड़ता है । जहाँ उसका प्रयोग हो, उसमें अवाच्य वचन जैसा दोष होगा । उदाहरणार्थ—

हृदय से प्रसन्न होता हैं, जानता है, ध्यान होता है । अध्ययन होता है । खिन्न होता है । नेत्र से देखता है । कान से सुनता है । विचित्र बात है । चित्त में चिन्ता ईर्ष्या, हर्ष, इच्छा क्रोध तथा विस्मय विषय हैं । मन में प्रमाद, भय, ज्वर, मद आदि उत्पन्न होते हैं ।

दिक्कुक्षिंभरिभिः कठोरकरभीकर्णप्रभाभासुरै,
श्चित्रं वीरनृसिंह भूप तुरगोत्कीर्णैः परागोत्करैः ।
त्वत्सेनाविजयोत्सवव्यतिकरे व्याप्तं वियन्मण्डलं,
हम्मीरक्षितिपालचेतसिपरं मालिन्यमुन्मीलितम् ।।४८।।

अत्र तुरगखुरोत्कीर्णैरिति नोक्तम् । उत्किरणस्य खुरकरणत्वे व्यभिचाराभावात् ।

दारिद्र्यस्य दयालुत्वं नृसिंह नृप किं स्तुवे ।
यन्मत्वापि निजं नाशमस्याभिस्त्वामदर्शयत् ।।४९।।

अत्र दृशेः परस्मैपदे प्रयोज्यकर्तुः कर्मत्वविधानादस्माभिरित्यस्यावाच्यस्य वचनं दोषः । मां 'भवन्तमदर्शयत्' इति पठनीयम् । अस्मिन् पुनः पाठे किं स्तुवइत्येकत्वेनात्मानं निर्दिश्यास्माभिरति बहुत्वेन निर्देशाद्वचनक्रमभङ्गोऽपि नास्ति ।

यद्वाच्यस्यावचनं वाच्यावचनं तदुच्यते चतुरैः ।।५०।।

निजचरणसविधिनिपतनपरमपि पुर एव वीक्ष्य हम्मीरम् ।
राजन् नृसिंह समरे तिष्ठति तूष्णीमसौ खङ्गः ।।५१।

---

हे वीर नरसिंह ! दिक्षु व्याप्तकरिण्याः कर्णप्रभया प्रकाशितोऽयम् । अहो आश्चर्यम् । अश्वैरुत्कीर्णैर्धूलिभिस्तव सेनाया विजयोत्सवव्यतिकरे समस्तोऽयमाकाश आच्छादितः । हम्मीरराज्ञः मनसि मलिनतामुन्मीलयति ।

इहाश्वोत्कीर्णकथनं न । उत्किरणस्य खुरकरणत्वे व्यभिचाराभावात् । हे नरसिंह नरेश ! दरिद्रतायाः दयार्द्रत्वं कथं स्तुत्यम् । निजं विनाशं मत्वापि मां भवन्तमदर्शयत् । अत्र दृशेः परस्मैपदे प्रयोगं कृत्वा कर्तुः कर्मत्वविधानेनास्माभिरित्यस्यावाच्यस्य वचनं दोषोऽस्ति । ( मां भवन्तमदर्शयत् ) इतिपठनीयम् । पुनः पाठेऽस्मिन् किं स्तुवेइत्येकत्वेनात्मानं निर्दिश्यास्माभिरिति बहुत्वेन निर्देशाद्वचनप्रक्रमभङ्गोऽपि नास्ति ।।

वाच्यावचनं दोषस्तत्र भविष्यति यत्र वाच्यस्यावचनं भवति । निजपदसमीपे पतन्तमपि पुरत एव हम्मीरं दृष्ट्वा हे नरसिंह नरेश । युद्धस्थले खड्गोऽयं शान्तः ।

---

दिशाओं में व्याप्त कठोर हथिनी के कान की कान्ति से प्रकाशित आश्चर्य है । हे वीर नरसिंह नरेश घोड़ों से उठे परागधूलि से तुम्हारी सेना के विजयोत्सव का सम्बन्ध सारा आकाश में छाया है । हम्मीर राजा के मन में मलिनता प्रकट होती है ।

इसमें घोड़ों की खुरो से उत्कीर्ण नहीं कहना है । उत्किरण के खुर करणत्व में व्यभिचार का अभाव है । हे नरसिंह नरेश ! दरिद्रता की दयालुता की क्या स्तुति करें, जिसे अपने यश को मान कर भी हमारे द्वारा आप का दर्शन किया गया ।

यहाँ (दृश्) को परस्मै पद में प्रयोग कर कर्ता के कर्मत्व विधान से (अस्माभिः) इसमें अवाच्य वचन दोष है । 'मां भवन्तमदर्शयत्' यह पाठ होना चाहिए । पुनः

इह निजेत्यनेन नृसिंहनृपतिसम्बन्धे चरणयोरभिमते खड्गसम्बन्धप्रतीतिरित्येतन्न वाच्यम् । अभवन्मतयोगमितीदं मतान्तरे प्रसिद्धम् । तवेति समुचितः पाठः । अन्यस्यालङ्कारस्य विषयेऽलङ्कारान्तरोपनिबन्धो यत्र तत्रापि वाच्यावचनमेव ॥

दोषोऽर्थपौनरुक्त्यं प्ररूढमभिधीयते बहुधा ॥५२॥

यथावभासनं तथैवार्थस्य विश्रान्तिः प्ररूढत्वम् । शब्दपौनरुक्त्यस्य न दोषत्वम् । तस्यानुप्रासाद्यलङ्कारत्वेनाङ्गीकारात् ! बहुधा प्रकृत्यादिविषयत्वात् । अत्र प्रकृति विषयत्वं यथा—

---

अत्र निजत्यनेन पाठेन नरसिंहनरेशस्य सम्बन्धे चरणयुगलयोः पतनमभिमतमिति खड्गसम्बन्धे मौनत्वप्रतीत्यवस्थायामेतन्न वाच्यम् । अभवन्मतयोगदोषोऽयं कथ्यते । अन्येषां मतेऽपि प्रसिद्धम् । तवेति समुचितः पाठः । अपरस्यालङ्कारस्य विषयेऽलङ्कारान्तरस्योपनिबन्धनं यत्र तत्रापि वाच्यावचनमेव भवति ।

अर्थपौनरुक्त्यदोषः प्रायेण प्ररुढ़त्वं कथनीयम् । यथावभासनं तथैवार्थस्य विश्रान्तिः प्ररुढत्वम् । शब्दपौनरुक्त्यस्य न दोषत्वम् । अनुप्रासाद्यलङ्कारत्वेन स्वीकारात् । अनेकधा प्रकृत्यादिविषयत्वात् । इह प्रकृतिविषयत्वं यथा—

---

इस पाठ में 'किं स्तुवे' इस एक पद से ही अपने को निर्दिष्ट कर (अस्माभिः) इसमें बहुवचन निर्देश से वचन प्रक्रमभङ्ग भी नहीं होता है ।

चतुरों द्वारा वाच्यावचत दोष वह होता है, जहाँ वाच्य का अवचन हो । अपने पैर के समीप गिरते हुए भी आगे हम्मीर को देखकर हे नरसिंह नरेश ! युद्ध में :'यह तलवार'' शान्त है ।

इसमें 'निज' इस पाठ से नृसिंह नरेश के सम्बन्ध में दोनों चरणों पर गिरना अभिमत होने पर खड्ग के सम्बन्ध में मौनता की प्रतीति में यह वाक्य नहीं है। यह अभवन्मत दोष है । ऐसा दूसरों के मत में प्रसिद्ध हैं । तव' यह समुचित पाठ है। अन्य अलङ्कार के विषय में दूसरे अलङ्कार का निबन्धन जहाँ हैं; वहाँ भी वाच्यावचन दोष ही है ।

अर्थपौनरुक्त्य दोष प्रायः प्ररुढत्व दोष कहा जाता है, जैसे भासित हो, वैसे ही अर्थ की विश्रान्ति प्ररुढत्व दोष होता है । शब्द पौनरुक्त्य दोष नहीं है । अनुप्रास आदि अलङ्कार से उसे स्वीकार किया जाता है । बहुधा प्रकृति आदि विषय से दोष होते हैं । प्रकृति विषयक दोष का उदाहरण देखें ।

---

He sees with his eyes, hears with his ears and thinks with his mind, enjoys pleasure with his heart. Here seeing is possible only with the eyes, thinking with the mind and expcriencing pleasure with the heart. Here no special sense is sought to be

करटविलुठद्दानस्रोतस्विनी सुरभीकृत,
त्रिभुवनपुट प्रेङ्खत् पुष्पन्धध्वनिडिण्डिमः ।
समयकुतुकं दृष्टः पौरैः कलिङ्गपुरन्दर.
प्रथयतितरां कस्यानन्दं न ते गजतागणः ।।५३।।

अत्र गजतेति समूहार्थायाः प्रकृतेर्गणस्य च पौनरुक्त्यम् । 'करिणां गणः' इति पाठः परिणमयितव्यः । प्रत्ययविषयं यथा—

अर्द्धभङ्गमुपगूढवल्लभं, विभ्रदर्धमपि भस्मभासुरम् ।
एक एव सुहृदिन्दुशेखरो, रागिणामपि विरागिणामपि ।।५४।।

अत्र विरागिणामिति मत्वर्थीयस्य पौनरुक्त्यम् । बहुब्रीहिणैव तदर्थावगतेः ।

---

गजस्य गण्डस्थले स्रवत्दानरूपधारासंयुक्तनद्या सुगन्धितेषु त्रिपु लोकेषु भ्रमन्तोः भ्रमराः । तेषां ध्वनिनापूर्णतां प्राप्नुवन् गजतागणोऽयम् । कस्यानन्दं न वर्द्धयति ? हे नरसिंह नरेश ! पौरैः सभयं कुतुकं दृष्टम् ।

अत्र गजतेति समूहार्थायाः प्रकृतेर्गणस्य च पौनरुक्त्यं, 'करिणां गणः' इति न्याय्यम् । प्रप्यय विषयस्योदाहरणमिह—

एक एव चन्द्रशेखरः रागयुक्तानां विरागयुक्तानामपि मित्रम् । अर्द्धाङ्गं तस्य प्रियेण च संयुक्तम् । अर्द्धञ्च भस्मभासुरम् ।

इह विरागिणामिति मत्वर्थीयाद्वहुव्रीहिरेव वरमितरथाप्रक्रियागौरवापत्तेः ।

---

हाथी के गण्डस्थल पर बहती हुई मद रूपी धारावाली नदी से सुगन्धित तीनों लोकों में घूमते हुए भौंरों की ध्वनि से पूर्ण यह गजतागण किसके आनन्द को नहीं बढ़ाते हैं । हे नरसिंह नरेश ! पुरवासियों द्वारा भय से खिलवाड़ देखा गया ।

इसमें 'गजता' समूह अर्थसम्बन्धी प्रकृतिगण की पुनरुक्तता है । 'करिणां गणः' यह पाठ होना चाहिए । प्रत्यय विषयक उदाहरण—

एक ही चन्द्रशेखर रागियों के भी विरागियों के भी मित्र हैं । आधा अङ्ग से प्रिय में आलिंगन है । आधा अङ्ग भस्म से रञ्जित है ।

इसमें विरागियों के भी मत्वर्थीय प्रत्यय की पुनरुक्तता है । बहुब्रीहि समास करने से ही उसके अर्थ का ज्ञान होता है ।

---

added as in the example (I have seen with my own eyes, ) If the organs of sense that are too well known as instruments of communication without resulting in special meaning then the mention of such organs of sense is also redundant. Such cases are also of ( Avācyavacana ) blemiśh.

4. ( Vācyāvacana ) blemish ommission of something worthy

कर्मधारयगर्भितान्मत्वर्थीयाद्बहुव्रीहिरेव, वस्तुतस्तत्प्रक्रियागौरवापत्तेः। भूपनिन्दार्थानामप्यस्त्यर्थानुयायित्वान्न पौनरुक्त्यपरिहारः शक्यक्रियः। उभयविषयं यथा—

दुर्वारैस्ते यशोभिः सकलमपि मम ध्वान्तमान्तमेतत्,
तत् किं कुर्यामिदानीमिति तव गदितुं श्रीनृसिंहक्षितीन्द्र।
लोकालोकेनपाथोधरनिवहनिभाः प्रेषिताः पश्य भान्ति।
प्राप्ताः प्रत्यन्तपृथ्वीभृत इव गजताद्वारदेशोपकण्ठम् ॥७५॥

अत्र समूहार्थायाः प्रकृतेर्बहुवचनस्य च पौनरुक्त्यम्। 'प्राप्ताः' प्रत्यन्तयला इव मदकरिणः इति पाठः परणमयितव्यः। पदपौनरुक्त्यं यथा—

---

भूपनिन्दार्थानामप्यस्त्यर्थानुयायित्वान्न पौनरुक्त्यपरिहारः प्रकृतिप्रत्ययोश्च विषयं यथा—

तव दुर्वारैर्यशोभिः, सम्पूर्णान्धकारं किं दूरं स्यात्। किं करणीयम्। सम्प्रति तव कथनायास्ति; हे नरसिंह नरेश ! लोकालोकपर्वतेन प्रेषितपर्वतसमूहान् पश्य। एते शोभिताः। परितस्तु हस्तिनः द्वारसमीपं सम्प्राप्ताः।

अत्र समूहार्थायाः प्रकतेर्बहुवचनस्य च पुनरुक्तता। 'प्राप्ता' प्रत्यन्तशैला इव मदकरिणः इतिपाठो न्यायः। पौनरुक्त्यस्योदाहरणमिह—

---

कर्म धारय से युक्त मत्वर्थीय प्रत्यय से वहुव्रीहि ही श्रेष्ठ है। जो दूसरी प्रकार की प्रक्रिया के गौरव की आपत्ति विषय में सम्वद्ध है। भूप निन्दा अर्थों के भी अर्थानुयायी होने से पौनरुक्त्य दोष का परिहार होने में समर्थता है। प्रकृति प्रत्यय दोनों विषयों का उदाहरण—

तुम्हारे दुर्वार यशों द्वारा सम्पूर्ण मेरा अन्धकार अज्ञान क्या दूर होगा ? तो क्या करना चाहिए। ऐसा समय तुम्हारे कहने के लिए है। हे नरसिंह नरेश ! लोकालोक पर्वत से प्रेषित पर्वत समूह देखो, शोभित हो रहे हैं। चारो तरफ हाथी के झुण्ड द्वारा के समीप प्राप्त हो गये हैं। यहाँ समूहार्थ प्रकृति के बहुबचन की पुनरुक्तता है। 'प्राप्ताः प्रत्यन्तशैला इव मदकरिणः' यह पाठ होना उचित है। पौनरुक्त्य का उदाहरण—

---

of being particularly stated leads to this blemish. For example; 'O king ! your sword is silent and inactive, because your enemy is bowing down at your feet.

If the word (your) before sword were omitted and replaced by some word like that and this devoid of the sense that it is related to you, the whole sentence will fail to show what is sought

देवस्यास्य चिराय मत्प्रभुकुलाराध्यस्यगौरीपते,
रेषा नैव कदाप्यनुग्रहकथालक्ष्मीधुरार्महति ।
इत्यालोच्य रुषेव केतकदलद्रोणीमियं निन्दति,
स्वैरं वीरनृसिंह देव भवतः कीर्तिर्जगज्जाङ्घिकी ॥५६॥

अत्रालोचनार्थस्य पौनरुक्त्यम् । इति शब्देनैव तदवगतेः । प्रत्युदाहणं यथा—

पलायनपरस्य मे नियतमन्तरायोमहा,
नियं भवति दुर्वहावसुमती भुजालम्बिनी ।
इतीव विरहय्यतामजनि जैत्रयात्रोत्सवे,
विरोधिनृपतिर्लघुस्तव नृसिंह पृथ्वीपते ॥५७॥

अत्रालोच्येति न कृतम् । यां क्रियां प्रत्यसाधारण्येन प्रसिद्धो यः कर्त्ता तस्योपादाने सा न वाच्या । अत एव—

---

चिरकालादारभ्य मत्प्रभुकुलाराध्यो देवः शंकरः । तस्य कदाप्यनुग्रहकथालक्ष्मीधुरामर्हति नैव । इति मत्वा कान्त्यैव केतकदलं निन्दति । स्वेच्छया हे वीर नरसिंह देव ! भवतः कीर्तिर्जगति राजते ।

पलायनपरस्य मे विघ्नसंयुक्तो महान् निश्चयः । इयं दुर्वहापृथ्वीभुजदुर्वारिण जेया । इति विरहितो जेतुं तां यात्रोत्सवेऽभवत् । हे नरसिंह नरेश ! ते शत्रवः क्षुद्राः । इहालोच्येति न कृतम् । यां क्रियां प्रत्यसाधारणतया प्रसिद्धो यः कर्ता तस्योपादाने सा न वाच्या । अतः—

---

बहुत दिनों से मेरे प्रभुकुल के आराध्य देव शङ्कर की यह अनुग्रह कथा लक्ष्मी के भार को कदापि नहीं सहन करती है । ऐसा विचार कर केतकी के समूह की निन्दा यह करती है । स्वेच्छा से हे वीर नरसिंह देव ! आप का यश जगत में प्रसिद्ध है । इसमें आलोचना अर्थ की पुनरुक्तता है । इस शब्द से ही उनका ज्ञान होता है । प्रत्युदाहरण जैसे—

परमायत पर मेरा निश्चय बहुत विघ्नयुक्त है । यह बहुत कष्ट से बहन करने वाली भुजा से प्राप्त पृथ्वी है । ऐसा विरहित होकर उसे जीतने के लिए यात्रोत्सव में उत्पन्न किया । हे नरसिंह नरेश ! तुम्हारे शत्रु राजा क्षुद्र हैं । यहाँ आलोच्य ऐसा नहीं किया गया । जिस क्रिया के प्रति असाधारणता से प्रसिद्ध जो कर्ता है, उसके उपादान में वाच्य नहीं है । इसलिए —

---

to be propounded here, that is the cause and its effect and their propriety in the context, where the proper figure of speech has been placed by another figure of speech not befitting the subject described; there too this blemish occurs.

5—Repetition of meaning is called (Arthpaunrukta)

उत्कण्ठाभारताम्यत् कुवलयनयना मानसाम्भोजभानु,
श्चिन्तासंतापमीलत्कविकुलकुमुदव्यूहनक्षत्रनाथः ।
ईर्ष्यासंवर्धमानप्रतिनृपतिबलाम्भोधिकुम्भोद्भवश्च,
ख्यातः सर्वत्र योऽसौ जगति स जयति श्रीनृसिंहक्षितीन्द्रः ॥५८॥

इत्यत्र मानसाम्भोजादिषु विकासादिक्रिया नोपात्ता ।

वीराः प्राक् कति नात्र तैरहमसावित्थं न संवर्धिता,
न त्राता न च लालितेति भवतःप्रत्यायनं कुर्वती ।
त्वत्कीर्तिःकलहंसकम्बुरजनीजानिच्छलेनस्पृश-,
त्यम्भोजासनकंसशासनपुरारातीन् कलिङ्गेश्वरः ॥५९॥

अत्र शासनपदस्य पौनरुक्त्यम् । अरातिपदेनैवाभिमतार्थावगमात् । कंशशासन-श्चपुरारातिश्चेतिद्वन्दाश्रयणमिह नोचितम । उपायलाघवासम्भवात् । कंसपुरयोरराती-ति तत्पुरुषे पुनराश्रीयमाणेकतरोऽपि न विरोधः ।

---

उत्कण्ठाभारेण च संकुचितकमलनयनायिकानां मानसाम्भोजः राजानं दृष्ट्वा विकसति । यथा सूर्यं दृष्ट्वा कमलानि च विकसन्ति । चिन्तया जनितेन दुःखेन संकुचितकविसमूहकुमुदानां विकासार्थं राजाचन्द्र इव । वर्धमानेर्ष्यया शत्रुनरेशाणां समूहः । अगस्त्य इव राजासैन्यसागराय, अयं नरेशो जगति प्रसिद्धः सोऽयं नरसिंहनरेशो विजयते ।

इह मानसाम्भोजे विकासादिक्रिया न कथिता । प्रथमे कति वीराः ये तु न रक्षिताः, न पालिताः, न वर्धिताः, न च लालिताश्च नरसिंहभूपतिना । इति भवतो-विश्वासं कुर्वती त्वत्कीर्तिः कलहंस इव, शङ्खः इव रात्रौ च्छलरहितेन जनितेन संस्पर्शयति । इयं कीर्तिः ब्रह्मणः कलहंसस्य समानी, विष्णोः शंखस्य समाना,शिवस्य चन्द्र इव भाति । अत्र शासनपदस्य पुनरुक्तता । अरातिपदेनैवाभीष्टार्थज्ञानंभवति । कंसशासनपुरारातिद्वन्दसमाश्रयंणेनानौचित्यमस्ति । उपायलाघवस्यासंभावना नास्ति । 'कंसपुरयोरराति' इति द्वयोः तत्पुरुषसमासे पुनरप्याश्रितयोः एकस्याविरोधः ।

---

उत्कण्ठा के भार से सिकुड़े हुए कमल रूपी नयन वाली नायिकाओं के मानस राजा को देखकर खिल उठते हैं । जैसे कमल सूर्य द्वारा खिल जाता है । चिन्ता से उत्पन्न दुःख से संकुचित कवि समूह को विकसित करने वाले राजा चन्द्र स्वरूप हैं । बढ़ी हुई ईर्ष्या से युक्त शत्रु राजाओं के समूह के सागर के लिए राजा अगस्त्य के समान हैं । सभी जगह संसार में जो यह कलिंग नरेश प्रसिद्ध हैं, वह ऐसे श्री नरसिंह नरेश विजय को प्राप्त करें ।

इसमें यहाँ मानस कमल आदि में विकास आदि क्रिया नहीं कही गई ।

तत्रोपायलाघवसंभावात् प्रतीतिः प्रधानमिति सैवानुसरणीया। न लक्षणमात्रम्। प्रतीत्यर्थमेव लक्षणस्याश्रीयमाणत्वात्। 'अम्भोजासनकैटभारिगिरीशानेषाकलिङ्गेश्वर' इतिपाठेनायं दोषः। सर्वनामपरामर्शयोग्यस्यार्थस्य पुनः स्वशब्देनाभिधानं-कथितपदापरपर्यायं पुनरुक्तमेव मन्तव्यम्। इव शब्देन यत्रैकेनैव दीपकत्वात् कर्तृ-कर्मादीनामप्युपमानोपमेयभावः प्रतीयते तत्र द्वितीयस्येव शब्दस्य प्रयोगो न योग्यः। पदपौनरुक्त्यप्रसङ्गात्।

विशेष्यस्याभिधाने तु सामान्योक्तिर्न युज्यते।
यथामेरुगिरिः श्वासमरुच्चन्दनपादपः ॥६०॥
और्वीवह्निर्मणिमुक्ता शेषोऽहिः पुष्पमम्बुजम्।
वसन्तर्तुः शरत्कालः कल्पान्त समयादिन ॥६१॥

---

तत्रोपायलाघवस्यासम्भावनायाः प्रतीत्यर्थं एव प्राधान्यं भवति तदेवानुसरणीयं न लक्षणमात्रम्। प्रतीत्यर्थस्यैव लक्षणाश्रयणात्। अम्भोजासनकैटभारिगिरीशानेषा कलिङ्गेश्वर इति पाठेनायं दोषः। सर्वनामपरामर्शयोग्यस्यार्थस्य पुनः स्वशब्देना-भिधानं कथितं पदापरपर्यायं पुनरुक्तमेव मन्तव्यम्। इव शब्देन न यत्रैकेनैव दीपक-त्वाद् कर्तृकर्मादीनप्युपमानोपमेयभावः प्रतीयते तत्र द्वितीयस्येव शब्दस्य प्रयोगो नोचितः पदपुनरुक्त्यत्वप्रसङ्गकारणात्।

विशेष्याभिधाने तु सामान्योक्तिर्नौचिता। यथा मेरुगिरिः श्वासमरुत् चन्दन-पादपः। और्वीवह्निर्मणिमुक्ताशेषोऽहिः पुष्पमम्बुजम्। वसन्तर्तुः शरत् कालः कल्पान्त समयादि च।

---

पहले वीर गण कौन ऐसे हैं, जिनकी रक्षा नहीं हुई। जो इस प्रकार नहीं बढ़े। न पालित हुए। और जिनका लालन नहीं हुआ है। इस प्रकार आप में विश्वास करती तुमसे फैली कीर्ति सुन्दर हंस के, शंख, चन्द्र के समान रात्रि से उत्पन्न छल रहित होकर स्पर्श करती है। ब्रह्मा, विष्णु और शंकर को तुम्हारी कीर्ति भिन्न-भिन्न रूप में है। ब्रह्मा के यहाँ हंस, विष्णु के यहाँ शंख के समान शिव के यहाँ चन्द्रमा के समान है।

यहाँ शासन पद की पुनरुक्तता है। अराति पद से ही अभीष्ट अर्थ का ज्ञान होता है। और कंस शासन पुराराति इस द्वन्द्व के आश्रयण का यहाँ औचित्य नहीं है। उपाय लाघव की संभावना नहीं है। 'कंसपुरयोरराति' इन दोनों के तत्पुरुष समास होने पर पुनः आश्रित दोनों में से एक का विरोध नहीं है।

वहाँ उपाय लाघव की सम्भावना से प्रतीति अर्थ ही प्रधान है। वही अनु-सरणीय है। लक्षण मात्र नहीं, प्रतीति अर्थ के ही लक्षण के आश्रित होना कारण है। 'अम्मोजासनकैटभारिगिरीशानेषा कलिङ्गेश्वर 'इस पाठ में यह दोष नहीं है।

मदाम्भोऽश्रुजलं स्वेदसलिलं पचनादिषु ।
विधिर्व्यापार कर्मादि प्रयोज्यं न कदाचन ॥६२॥

प्रत्युदाहरणं यथा—

संगीतादिविचारवार्धितरणे सांयात्रिकः कस्य न,
श्लाघ्यो वीरकलिङ्ग पार्थिव भवान् भूलोकचिन्तामणिः ।
रेखालाञ्छितकैतवेन सुकृती पद्माभिधानो निधि,
साक्षाद्यस्य करे कुबेरनगरीसर्वस्वमुज्जृम्भते ॥६३॥

तत्र तरण व्यापार इति नोक्तम् । तरणस्य व्यापारे व्यभिचाराभावात् ।

इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकालीनाम्न्यलङ्कारशास्त्रे दोषनिरूपणं नाम षष्ठ उन्मेषः ॥

---

मदाम्भोऽश्रुजलं स्वेदसलिलपचनविध्यादौ पाकव्यापार भोजनकर्मादि कदापि न प्रयोज्यम् । प्रत्युदाहरणमत्र—

हे वीर कलिङ्गनरेश ! संगीतादिविचारवार्धितरणे सायांत्रिकः श्लाघ्यो भवति । भवान् पृथिव्यां चिन्तामणिः । रेखायुक्तः कैतवेन यशः कमलाभिधानो निधिः । साक्षात् यस्य हस्ते कुबेरनगरी सर्वस्वमुज्जृम्भते ।

अत्र तरणव्यापार इतिनोक्तम् । तरणस्य व्यापारे व्यभिचाराभावकारणात् ।

एकावलीसरलाख्याटीकायां षष्ठोऽध्यायः ।

---

सर्वनाम परामर्श योग्य अर्थ का पुनः स्वशब्द से अभिधान कथित पद दूसरे पर्याय की पुनरुक्तता ही मानना है । इव शब्द से जहाँ एक ही दीपकत्व के कारण कर्ता कर्म आदि का भी उपमान, उपमेय भाव प्रतीत होता है, वहाँ द्वितीय इव शब्द का प्रयोग करना उचित नहीं है । पद की पुनरुक्तता का प्रसंग होता है । जो इसका कारण होता है । विशेष के अभिधान होने पर तो सामान्योक्ति नहीं युक्ति युक्त होती है, जैसे मेरुगिरि, श्वासमरुत्, तथा चन्दन पादप ।

और्वी के साथ वह्नि; मणि के साथ मुक्ता, शेष के साथ अहि, पुष्प के साथ अम्बुज, वसन्त के साथ ऋतु, शरत् के साथ काल, कल्पान्त के साथ समय आदि ।

मद के साथ अम्भ, अश्रु के साथ जल, स्वेद के साथ सलिल, पचन विधि आदि में पाक व्यापार आदि भोजन कर्म आदि कभी प्रयुक्त नहीं होने चाहिए । उदाहरण देखें । हे वीर कलिङ्गनरेश ! संगीत आदि विचार बढ़ाने में, तरण में सायांत्रिक प्रयोग प्रशंसनीय नहीं है । आप पृथ्वी के चिन्तामणि समान हैं । रेखायुक्त खिलवाड़ से यश कमल अभिधान निधि हैं । साक्षात् जिसके हाथ में कुबेर नगरी सर्वस्व निछावर करती है । यहाँ तरण व्यापार यह नहीं कहा गया है । तरण के व्यापार में व्यभिचाराभाव होना कारण है ।

यह श्रीमान् महामाहेश्वर कवि विद्याधर कृत एकावली नामक अलङ्कार शास्त्र ग्रन्थ में दोष निरूपण प्रसंग का छठां अध्याय समाप्त हुआ ।

For example, (Gajatāgaṇah) where the word (Gajatā) means multitude of elephants and the word (Gaṇah) also means a multitude, Thus this compound word will mean a multitude of the multitude of the elephants. Here the sense of multitude has been unnecessarily repeated. This is a type of repetition of the sense arising out of the base words employed in a compound or in a sentence. This may also occur where a suffix has been unnecassarily used. For example, the word (virāgī) with the suffix, because the word (virāg itself means freedom from attachments and this prefix also gives the same sense. Therefore the suffix leads to the repetition of the meaning already contained in the base word. This blemish is likely to occur where meaning contained in thc base word, has been repeated because of its number or gender. For example the word (gajatāḥ) in the plural number which is unnecessary, because the word (Gajatāh) as the base word contains in itself the ideal of the plural number; A plural of the plural is redundant.

In 'therefore having Considered so; (Iti) and (ālocya), therefore and 'having Considered' so have the some meaning. They should, therefore, not have been repeated. This is a case of (padapunaru-ktatā) Or employment of a superfluous word.

Further, the breath wind (swāsmarut). Meru mountain (Meru Parvata), sandal tree (Candana pādapa) and so forth are examples of unsnecessary repetition of words; because a particular has been mentioned by itself employing its genus; another word indicative of the genus is unnecessary. Breath by itself implies a type of wind, therefore (marut) which means wind need not have added to it, because it fails to add anything new to what the word breath has already signified.

Here Vidyādhara's treatment of poetic blemishes is very different from the one we find in Mammatās (Kāvya Prakāśa). It appears Mahimbhattā's treatment of poetic, blemishes which really is the best ever attempted by the learned scholars, has had a greater appeal to Vidyādhara's. Even the Order of blemishes on Ekāvali is similar to that found in (Vyaktiyiveka) of Mahimbhatta.

## अथ सप्तम उन्मेषः

**अथ दोषव्यावृत्यालङ्कारः कथ्यतेऽधुनास्माभिः ।**
**पुनरुक्तवदाभासो भवति प्रमुखावभासनं द्वेधा ॥१॥**

यद्यपि शब्दालङ्कारनिरूपणानन्तरमर्थालङ्कारनिरूपणमुचितं तथाप्यर्थपौनरुक्त्यस्यैव प्ररुढस्य दोषत्वेनाभिधानात् तद्विपर्ययस्यालङ्कारत्वदर्शनाय व्युत्क्रमेणात्र कथनमेतस्य । प्रमुख आपाततः प्रतिभासनं न पुनस्तत्रैव विश्रान्तमर्थैक्यम् । अन्यथापर्यायत्ववशाच्छब्दान्तरस्यार्थान्तिरवृतेरसंभवात् । तद्द्वेधा नामाख्यातगतत्वेन । क्रमेण यथा—

अथ सप्तमोऽध्यायः एकावलीसरलाटीकायाम् ।

दोषनिरूपणानन्तरमधुनास्माभिः शब्दावृत्यलंकारः कथ्यते । पुनरुक्तवदाभासोऽस्ति प्रमुखपुनरुक्त्यवभासनं द्वेधा ।

यद्यपि शब्दालंकारस्य निरूपणस्य पश्चादर्थालंकारस्य निरूपणमुचितम् । तथाप्यर्थपुनरुक्त्याभासनं भवति । अयं चालंकारः । अन्यथा पर्यायत्ववशात् शब्दान्तरस्यार्थान्तिरवृत्तेः संभावना नास्ति । नामाख्यातगतभेदेनायमलंकारो द्विविधो भवति । क्रमेण यथा —

अब सातवें अध्याय का आरम्भ होता है ।

दोष निरूपण के अनन्तर अब हम शब्द आवृत्ति से युक्त अलंकार का निरूपण करते हैं । पुनरुक्तवदाभास प्रमुख पुनरुक्ति अवभासित होने से दो प्रकार का अलंकार होता है ।

यद्यपि शब्दालंकार निरूपित करने के बाद अर्थालंकार का निरूपण उचित है, तथापि अर्थ पुनरुक्ति के आभास के विपर्यास से शब्दालंकार का आधान होता है । जहाँ पुनरुक्त न होने पर भी अर्थ पूर्णतः पुनरुक्त आभासित होता है; वहाँ पुनरुक्तवदाभास नामक अलंकार होता है । अन्यथा पर्यायत्ववशात् शब्दान्तर के अर्थान्तर वृत्ति की संभावना नहीं होती । नाम और आख्यात गत भेद से यह पुनरुक्तवदाभास दो प्रकार का होता है । क्रमशः जैसे

### Chapter VII

The seventh Chapter deals with the figures of speech, because in the last chapter we have dealt with the blemishes of the repetition of meaning. It will be in fitness of things that we should begin such figures of speech as are connected with the repetition of the meanings. If this repetition of meanings were an end in it self, it is definitely a blemish; but if it were only apparent, it becomes figues of speech and is called (Punruktavadābhās) or the apparent repetition of meaning.

अभ्यस्ताशेषविद्यामरगुरुधिषणं विद्विषद्रक्तपान,
क्रीडानिस्त्रिंशखङ्गं विरचितवसुधाचक्ररक्षाविभूतिम् ।
किं चालोकप्रभावक्षपितबुधविपद्ध्वान्तमुद्गायति त्वां
तुङ्गे शृङ्गे सुमेरोः सुरयुवतिगणः श्रीनृसिंहक्षितीन्द्र ।।२।।

अत्र गुरुधिषणयोर्निस्त्रिंशखङ्गयो रक्षाविभूत्योरालोकप्रभयोर्नाम्नोः पुनरुक्तवदाभासनम् ।।

तान् निर्माति करोति हस्तितरिपून् युद्धेषु ते विक्रमान्,
यैर्लोकोभरते विभर्ति कुतुकं रामेऽपि प्रस्तुते ।
किं चाभ्यर्थनदुष्कृतानि शमयस्याकर्णयस्यैकदा,
यद्याकृष्टसुधारसं सुमनसां सूक्तं कलिङ्गेश्वरः ।।३।।

---

हे नरसिंह नरेश ! सुमेरोः शिखिरेषु देवांगनाः ते गुणगानं कुर्वन्ति । सम्पूर्णविद्याभ्यास संयुक्तोऽस्ति, भवान् गुरुः बृहस्पतिः । शत्रोः रक्तपानं कुर्वन् खड्गोऽयम् । निर्मितपृथिवीचक्रेण भवतो विभूतिः रक्षिता । किञ्च प्रकाशप्रभावेनाक्षिप्तबुधस्य बिपत्तेनशिः ।

अत्र गुरुधिषणयोः निस्त्रिंशखड्गयोः रक्षाविभूत्योरालोकप्रभयोर्नाम्नोः पुनरुक्तवदाभासनम् । हे कलिङ्गाधिपते ! निगृहितानूनरेशान् वशीकरोति । तान् च निर्माति । युद्धेपु ते पराक्रमोऽतुलनीयः । येन लोको भरते रामेऽपिन प्रस्तुते क्रीडाभरणं भवति । कदा प्रार्थनया दुष्कर्म । शान्तं श्रुत्वा सुमनसां सूक्तम् सुधारस-संयुक्तम् भवति । एकवारमाकर्षयति ।

---

हे श्री नरसिंह नरेश ! सुमेरु के ऊँचे शिखर पर देवताओं की स्त्रियाँ तुम्हारा गुणगान करती हैं । सम्पूर्ण विद्याओं का आभास आपको है । आप गुरु बृहस्पति हैं । शत्रु के रक्त को पान क्रीडा करती हुई आपकी तलवार है । निर्मित पृथ्वी के चक्र से आपके ऐश्वर्य की रक्षा है । और क्या ? प्रकाश के प्रभाव से फेंके गये देवता की विपत्ति का नाश हो जाता है ।

यहाँ गुरु धिषण दोनों के निस्त्रिंश खड्ग की रक्षा विभूति के प्रकाश की प्रभा से पुनरुक्तवदाभास अलंकार है ।

हे कलिङ्गाधिपति ! उन्हें निर्मित करते हैं । पकड़े गये शत्रुओं को वश में करते हैं । युद्धों में तुम्हारे पराक्रमों को क्या ? जिनके द्वारा लोक का भरण होता राम के प्रस्तुत न होने पर भी क्रीडा का आभरण होता है और किस प्रार्थना से दुष्कर्म हुए । शान्त हो सुनते एक बार आकर्षित करने वाले अमृत रस युक्त देवताओं के सूक्त हैं ।

---

For example (Ālokprabhāvakṣapit budhvipat) is a compound, in which it appears that the words (Āloka) and (Prabhā) used one after give another the same meaning; that is, light. But when the compound begins to yield its meaning we find that the word (Prabhā) has not been used here at all, the word really is (Prabhāva) which means effect and thus our first idea that two words (Āloka) and (Prabhā) giving the same meaning are superfluous,

अत्र निर्माति करोतीत्यादिक्रियोराख्यातयोः ।
पुनरुक्तवदाभासं कथयित्वार्थैकनिष्ठमपि ।
अथ शब्दालङ्कारा: प्रस्तूयन्ते त्रयोऽधुनास्माभिः ॥४॥

शब्दस्य पौनरुक्त्यं व्यञ्जनसमुदायमाश्रितं यस्मात् ।
स च्छेकानुप्रासः संख्यानियमे समुल्लसति ॥५॥

द्वयोर्द्वयोर्व्यञ्जनयोर्ययोः कयोश्चिदन्योन्यमसकृत् सादृश्यं संख्यानियमः । छेका विदग्धास्तैः प्रयुक्तोऽयमनुप्रास इत्यन्वर्थः ।

कलाकलापं दधदुज्वलोज्वलं, मुहुस्तमस्तोममपाकरोति यः ।
न कस्य हर्षं वसुधासुधाकरः; करोत्ययं वीर नृसिंहभूपतिः ॥६॥

अत्र निर्माति करोतीति द्वयोः आख्यातयोः । पुनरुक्तवदाभासमेकनिष्ठार्थं कथयित्वाधुनास्माभिः त्रयः शब्दालङ्कारा: प्रस्तूयन्ते ।

व्यञ्जनमात्रपौनरुक्त्ये संख्यानियमे च्छेकानुप्रासो भवति । द्वयोर्व्यञ्जनयोः परस्परं सादृश्येन वृत्त्यनुप्रासोऽस्ति । च्छेकस्यार्थो विदग्धः । तैः प्रयुक्तोऽयमनुप्रासोऽन्वर्थकोऽस्ति ।

पृथिव्याश्चन्द्रोऽयं नरसिंहः कस्य न हर्षं करोति । सुन्दरस्तु चन्द्ररश्मिः स्वच्छः । घनान्धकारं विनाशयति ।

इसमें 'निर्माति' 'करोति' आदि दोनों आख्यात में एक निष्ठ अर्थसहित भी पुनरुक्तवदाभास कहकर अब हम तीन शब्दालंकार प्रस्तुत करते हैं ।

व्यञ्जनमात्र की पुनरुक्तता होने पर संख्या नियम में छेकानुप्रास है । दो दो व्यञ्जनों के परस्पर बार बार सादृश्य होने पर वृत्यनुप्रास होता है । छेक का अर्थ विदग्ध है । उनके द्वारा प्रयुक्त यह अनुप्रास अन्वर्थक है ।

यह वीर नरसिंह जो पृथ्वी के चन्द्रमा हैं, किसको हर्षित नहीं करते हैं । चन्द्रकिरण सुन्दर होकर स्वच्छ है । बार बार घने अन्धकार को दूर करता है ।

proves wrong such sequences of the opparent and the real within two subsequent moments create a beauty of their own leading to this figure of speech.

2–Another figure of speech is called alliteration which arises from the repetition of the same Consonent where this repetition Occurs only Once and is limited to two identical letters only it is called (Chekānuprāsa). For example; (Kalākalāpam) here the letter (K) has been twice used and so has been the letter (l) where a letter has been used more than twice it is a case of(vritti) alliteration Provided that the letters chosen for repetition are in

संख्यानियमाभावे भवति पुनर्वृत्त्यनुप्रासः ।।७।।

केवलव्यञ्जनसादृश्यं सकृद्व्यञ्जनसादृश्यं त्र्यादीनां व्यञ्जनानामितरेतरसादृश्यं संख्यानियमाभावः । 'वृत्तिस्तु रसविषयो' व्यापारस्तत्समुचितवर्णरचनेह वृत्तिः । तदुपलक्षितोऽयमनुप्रास इत्यन्वर्थाभिख्योऽपि । क्रमेण यथा—

श्रीमन्नृसिंह नरनाथ कथं यशस्ते,
कृत्तारिकण्ठरुधिरारुणितात् कृपाणात् ।
कैलासकाशकरकाकुमुदेन्दुकुन्द,
मन्दारमौक्तिकमृणाल मनोज्ञमासीत् ।।८।।

युक्ता विपक्षेषु कृपा न कर्तुमेते विकुर्वन्ति हि कार्यकाले ।
इत्याहवे वीक्ष्य कलिङ्गनाथं नाथन्त्यमी प्राञ्जलयः सपत्नाः ।।९।।

---

संख्या नियमाभावे पुनर्वृत्त्यनुप्रासो भवति । केवलव्यञ्जनसादृश्ये संख्यानियमाभावे वृत्त्यनुप्रासः । 'वृत्तिस्तुरसविषयो व्यापारः' । समुचितवर्णरचनात्र वृत्तिः । तदुपलक्षितोऽयमनुप्रासोऽन्वर्थकः समकक्षोऽपि । क्रमशः उदाहरणम्—श्रीमन् नरसिंह नरेश ! तव यशः कथं ? शत्रुकण्ठकृत्तरक्तवर्णात् खड्गात् कैलाससदृशं करकसमानं स्वच्छं कुमुदमन्दारमुक्तामृणालसदृशं सुन्दरम् ? शत्रुषु कृपा नोचिता । यतः कार्यकालेऽमी विकुर्वन्ति । एतादृशं कलिङ्गनरेशं युद्धे विलोक्यामी शत्रवः करबद्धाः प्रार्थयन्ति ।

---

संख्या नियमाभाव होने पर पुनः वृत्त्यनुप्रास होता है । केवल व्यञ्जन का सादृश्य होने पर संख्या नियमाभाव वृत्त्यनुप्रासः होता है । वृत्ति तो रस विषयक व्यापार होता है । समुचित वर्ण रचना यहाँ वृत्ति है । उससे उपलक्षित यह अनुप्रास अन्वर्थ संज्ञक भी है । क्रमशः उदाहरण—

श्रीमान् नरसिंह नरेश तुम्हारा यश कैसा है ? काटे गये शत्रु के गले के रक्त की लालिमा से युक्त तलवार से तुम्हारा कैलास स्वच्छ बर्फ के समान, कुमुद के तुल्य, चन्द्रमा के सदृश, कुन्द पुष्प के समान मन्दार पुष्प के समान मोती मृणाल से सुन्दर यश हुआ । शत्रुओं पर कृपा करना उचित नहीं है । क्योंकि कार्यकाल में ये विकार उत्पन्न करते हैं । ऐसे कलिङ्ग नरेश को युद्ध में देखकर ये शत्रु हाथ जोड़कर प्रार्थना करते हैं ।

---

agreement with the sentiment sought to be suggested by the poet. For example, ( Kaiśāsa kāsakarakakumudendukunda); where the letter (k) has been used more than twice and is not opposed to the sentiment of devotion suggested by the poem.

जगति गजगतिर्नन्दतु श्रीनृसिंहः ।
इदमेव स्वरसहितं व्यञ्जनसमुदायमाश्रितं यमकम् ॥१०॥

अत्र क्वचिद्भिन्नार्थकत्वं क्वचिदनर्थकत्वं क्वचिदेकस्यानर्थकत्वमन्यस्य सार्थकत्वमिति संक्षेपतः प्रकारत्रयम् । क्रमेण यथा—

कलिङ्गनाथ यस्मात् त्वं प्रभवः सर्वसम्पदाम् ।
अतस्तव तुलां प्राप्तुं प्रभवः केऽपिनापरे ॥११॥

अत्र प्रभवः प्रभव इत्यभिहितयोर्भिन्नार्थकत्वम् ।

भाग्यसौभाग्यसौजन्यनिधिं नरहरिं स्तुमः ।
चतुरं चतुरम्भोधिमेखलावनिपालने ॥१२॥

---

जगति गजगतिर्नन्दतु श्रीनृसिंहः ।
स्वरसहितमिदमेव व्यञ्जनसमूहमाश्रितं यमकम् ।

इह कुत्रचिद् भिन्नार्थकत्वं क्वचिच्चाभिन्नार्थकत्वं कुत्रचिदेकस्यार्थत्वमपरस्य च सार्थकत्वमिति त्रयम् । क्रमेणोदाहरणानि—हे कलिङ्गनरेश ! त्वं सर्वसम्पत्तीनां प्रभवोऽसि । अतस्त्वां तुलयितुं कोऽपि नान्यः समर्थः प्रभवः ।

अत्र प्रभवयोर्द्वयोः शब्दयोः कथने भिन्नार्थकत्वमस्ति । चतुरम्भोधिमेखलायुक्तभूमिपालने निपुणभाग्यसौभाग्यसौजन्यनिधिस्वरूपस्य नरसिंहस्य स्तुतिं कुर्मः ।

---

जगत में गज के समान गति वाले श्री नृसिंह आनन्द को प्राप्त हों । यही स्वर सहित व्यञ्जनसमुदायाश्रितयमक होता है ।

इसमें कहीं भिन्नार्थकत्व कहीं अनर्थकता कहीं एक का अनर्थकत्व दूसरे का सार्थकत्व होता है । इस प्रकार संक्षेप में यमक तीन प्रकार का होता है । क्रमशः उदाहरण—

हे कलिङ्ग नरेश ! सभी सम्पत्तियों के तुम प्रभव हो । इसलिए तुलना प्राप्त करने में दूसरे कोई भी समर्थ नहीं हैं ।

यहाँ प्रभव प्रभव इन दोनों के कथन में भिन्नार्थकता है ।

चारो समुद्र मेखला युक्त पृथ्वी के पालन में निपुण, भाग्य, सौभाग्य सौजन्य के निधि स्वरूप नरसिंह की स्तुति करते हैं ।

---

3–The third figure is called (yamaka). In this figure a group of letters are repeated in the same sequence and wlth the same vowels following each letter. Each group of letters may or may not have a meaning of its own or may have a meaning only in parts of the group. For example, (Prabhavaḥ) and (Prabhavaḥ) are both a group of letters used twice. Here both the groups

अत्र भाग्यसौभाग्यसावित्यनयोरनर्थकत्वम् । प्रथमस्य चतुरमित्यस्यसार्थकत्वम-परस्यानर्थकत्वम् ।

प्रायशो यमके चित्रे रसपुष्टिर्न दृश्यते ।
दुष्करत्वादसाधुत्वमेकमेवात्रदूषणम् ॥ १३ ॥
रलयोर्डलयोस्तद्वल्लडयोर्बवयोरपि ।
नमयोर्णणयोश्चान्ते सविसर्गाविसर्गयोः ॥१४॥
सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम् ।
यमकं तु विधातव्यं कथंचिदपिन त्रिपात् ॥१५॥
वर्णानामथ पद्माद्याकृतिहेतुत्वमुच्यते चित्रम् ॥१६॥

कर्णशष्कुल्यवच्छिन्नाकाशसमवेतैः ककारादिभिरभेदेन ग्रहणाल्लिप्यक्षरेष्वप्ययं ककार इत्यैक्यप्रतीतेः शब्दालंकारत्वमत्रौपचारिकम् । कर्णिकाप्रमुखस्थानविशेष-श्लिष्टानां वर्णानां पुनः पुनरावृत्तिव्यावृत्तिभ्यामादानादक्षरसंकोचश्चित्रम् ।

---

अत्र भाग्यसौभाग्यसावित्यनयोरनर्थकता । प्रथमे चतुरे सार्थकता द्वितीये त्वनर्थ-कता । प्रायशो यमके वैचित्र्यवशात् चमत्कृतेः संभावनया रसापेक्षत्वं न भवति । इह एको दोषः दुष्करत्वादसाधुत्वं दोषः ।

रलयोः डलयोः, लढयोः ववयोः, नणयोः सविसर्गकविसर्गहीनयोश्चान्ते बिन्दु-सहितबिन्दुरहितयोः शब्दयोरभेदो भवति ।

यमकं तु त्रयमेव । साम्प्रतं वर्णानां पद्माद्याकृतिहेतुतां चित्रमिति । अर्थात् चित्रा-लंकारोऽस्ति कर्णकुहरगते समवेतरूपेण ककाराद्यभेदेन लिपिग्रहणेनाक्षरेष्वप्यस्य कका-रस्यैकतायां प्रतीतायां शब्दालंकारत्वस्यौपचारिकता । कर्णिकाप्रमुखस्थानविशेष-श्लिष्टानां वर्णानां पुनः पुनरावृत्तिव्यावृत्तिभ्यामादानादक्षरसंकोचश्चित्रमभिधीयते ।

---

यहाँ भाग्य सौभाग्य में यसौ इसकी अनर्थकता है । प्रथम चतुर को सार्थकता है, दूसरे की अनर्थकता है ।

प्रायः यमक में विचित्रता वश चमत्कार की संभावना होने से रसापेक्षा नहीं हैं । इसमें एक ही दोष है । दुष्करत्व के कारण होने से असाधुत्व दोष है ।

र, ल में ड, ल में उसी प्रकार ल, ड एवं ब व में भी, न, म में न, ण में तथा अन्त में विसर्गसहित एवं विसर्गहीन और विन्दु सहित एवं विन्दु रहित अर्थात् अनुस्वार सहित अथवा अनुस्वार रहित शब्दों में अभेद होता है ।

यमक तो तीन प्रकार का होता है ।

अब वर्णों के पद्म आदि हेतुता को चित्रालंकार कहते हैं । कर्णकुहर में पड़े समवेत रूप से ककार आदि के अभेद से लिपि ग्रहण करने से अक्षरों में भी ककार की एकता प्रतीति, शब्दालंकारत्व की औपचारिकता है । कर्णिका प्रमुख स्थान विशेषश्लिष्ट वर्णों के पुनः आवृत्ति के ग्रहण करने से अक्षरों के संकोच को चित्र कहते हैं ।

अत्र यद्यपि वन्धचित्रमाकारचित्राद्भिन्नं मन्यमानैरपि चिरन्तनैर्न किञ्चिद्भेदकमुक्तं तथापीश्वरकर्तृकत्वे सत्यपि यदेककर्तृकतया प्रसिद्धं तत् पद्मशैलादिकमाकारचित्रम् । यत्तुद्विकर्तृकं हलमुसलमुरजगोमूत्रिकाचापचक्रादि तद्वन्धचित्रमित्यनयोर्भेदः कल्पयितुं शक्य एवास्माभिः । तथापि न कल्पितः । आकारचित्र इवेह वन्धचित्रेऽपि वर्णानामाकारोल्लासकत्वात् पद्मादिरुपनयाक्षराणांलिख्यमानत्वेन चित्रसादृश्याच्चित्रमिदमुच्यते । अहो येन क्रमेण गता वर्णपङ्क्तिस्तेनैव क्रमेण प्रत्यागतेत्याश्चर्यकारित्वाद्वा चित्रमित्यन्वर्थबलाद्वर्णानामाकारनुल्लासकत्वेनाव्याप्तावपिगतप्रत्यागतार्थभ्रमसर्वतोभद्रधेनुप्रभृतिगतिचित्रमत्र संगृहीतम् ।

---

इह यद्यपि वन्धचित्रमाकारचित्राद्भिन्नम् । तत्रापि प्राचीनैः भिन्नत्वं नोक्तम् । ईश्वरकृतित्वेऽप्येककर्तृकत्वेनप्रसिद्धपद्मशैलाद्याकारचित्रम् । यत्र द्विकर्तृकं हलमुसलमुरजगोमूत्रिकाचापचक्रादिवन्धचित्रं तत् । अनयोर्भेदः । कल्पनायाः सामर्थ्यं यद्यस्माभिः कथितम् । परन्तु न कल्पितम् । आकारचित्रसमानमिहापि वन्धचित्रमेव वर्णानामाकारोल्लासेन पद्मादिरूपतयाक्षराणा लेखनेन चित्रमिव चित्रालंकारो भवति । अहो येन क्रमेण वर्णपङ्क्तिः क्रियते, तेनैव क्रमेणागतवर्णचमत्कारित्वाद्वा चित्रमित्यन्वर्थकबलेन चित्रालंकारोऽक्षराणामाकारस्यानुल्लासकत्वेनाव्याप्त्यौ गतप्रत्यागतार्थभ्रमसर्वतोभद्रधेन्वादिगतिचित्रमत्र संगृहीतम् ।

---

इसमें यद्यपि वन्ध चित्र आकार चित्र से भिन्न है । तथापि प्राचीनों द्वारा कोई भेद नहीं माना गया है । ईश्वर कृतित्व होने पर भी एक कर्तृकत्व से प्रसिद्ध पद्म, शैल आदि आकार चित्र है । जहाँ दो कर्तृक हो तो वह हल मुसल, मुरज; गोमूत्रिका चाप चक्र आदि वन्ध चित्र है । इनमें यह भेद है । इस कल्पना का सामर्थ्य हममें है । परन्तु कल्पित नहीं है । आकार चित्र के समान यहाँ वन्ध चित्र में भी वर्णों के आकारोल्लास से पद्म आदि रूपता से अक्षरों के लिखने से चित्र के समान होने पर चित्रालंकार होता है । अहो ! जिस क्रम से वर्णपंङ्क्ति हैं, उसी क्रम से आये वर्ण आश्चर्यित करने वाला चित्रालंकार होता है । इस अन्वर्थक बल से अक्षरों के आकार के अनुल्लास से व्याप्ति न होने पर भी गत प्रत्यागत अर्थ भ्रम से सर्वतो भद्र धेनु आदि गति चित्र संगृहींत है ।

---

though apparently identical have different meaning. The first of these means breeding ground and is in singular number, where as the second means ( able enough) and has been used in the plural number. There is an example ( Bhāgyasaubhāgya ) where (Bhāgya) and (Bhāgya) has been repeated, The first (Bhāgya) has a meaning of Its own i- e. good luck, where as second (Bhāgya)

अभिनवपदपदार्थपर्यालोचनेन मन्दबुद्धीनां चित्तो ज्ञानस्य त्राणाद्वाचित्रमित्यन्वर्थमहिम्ना निष्कण्ठयनिरोष्ठयनिस्तालव्यादिस्थानचित्रं च स्वीकृतम् । एतच्च काव्ये गडूभूतमिति नेह प्रतीयते । यत् पुनः स्वरविरहित व्यञ्जनमात्रसादृश्यप्रयुक्तं वर्णचित्रमपरैरभ्यधायि तदस्मिन् दर्शने वृत्यनुप्रास एव । यथा—

कलङ्किकङ्ककाकोलकुले कलकलाकुले ।
कङ्केलिकलिकालोलकिंकाकोकिलकाकली ॥१७॥

---

नूतनपदपदार्थपर्यालोचनेन मन्दबुद्धीनां चित्तो ज्ञानस्यरक्षणेन चित्रालंकारोऽस्ति । अनेनान्वर्थमहिम्ना निष्कण्ठचनिरोष्ठयनिस्तालव्यादिस्थानचित्रमपि स्वीकृतम् । इह काव्ये दुर्गन्धत्वम् । अत्र तु विस्तारो भवति पुनः स्वररहितं व्यञ्जनमात्रसदृशं प्रयुक्तं तत् वर्णचित्रम् । अन्यैरभिहिततद्दर्शनेऽस्मिन् वृत्यनुप्रास एव यथा—

कोलाहलेन कुले व्याप्तकृष्णपक्षसंयुक्तमहोपखगस्य काकानां च समूहे कोकिललताविशेषकलिकाष्वभिलाषयुक्तकाकली किं चित्रम् ।

---

अभिनव पद के पदार्थ के पर्यालोचन से मन्द बुद्धि वालों के चित्त ज्ञान की रक्षा से चित्रालंकार है। इस अन्वर्थ महिमा से निष्कण्ठय, निरोष्ठच तथा निस्तालव्य आदि स्थान चित्र भी स्वीकृत है। यह काव्य दुर्गन्ध युक्त है। यहाँ विस्तार नहीं है। जो पुनः स्वर रहित व्यञ्जन मात्र का सादृश्य प्रयुक्त होता है। तो वर्ण चित्र है। दूसरों द्वारा कहा जाने वाला उसी दृष्टि में वृत्यनुप्रास ही है। जैसे—

कोलाहल से कुल में जो दुष्ट कोलाहल से व्याप्त काले पक्ष वाले महोप पक्षी के और कौओं के समूह में कोकिल रूप और लता विशेष की कलिकाओं में अभिलाषा युक्त काकली क्या ही सुन्दर है।

---

being a part of word (Saubhāgya) has no meaning of its own. If we Join ( Bhāgyasaubhāgya saujanyanidhim ) in a compound two (yasau) apparently repeated here have no meaning of their own. However, vidyādhara is opposed to the use of figures of speech (Yamaka) and ( citra ), because both of them more often then serve no purpose in pointing of enhancing the effect of the sentiment ought to be suggested.

4–The other figure of speech called (citra) or pictorial figure of speech arises out of arrangement of letters in such a manner that they can be set to form outlines of things like lotus, a sword a drum and so forth. For example; (kalankikankakākol kulekalakalākule), (kankelikalikālol kim kākokil kākalī), Here the letters

स्वरचित्रं तु बन्धशैथिल्यकारितया दोषएवेति नालंकारतया स्वीकृतम्। यदाह-राजा—

उरुगुं द्युगुरुं युत्सु बुबुधुस्तुष्टुवुः पुरु।
लुलुवुः पुपुषुर्मुत्सु मुमुहुस्तु मुहुर्मुहुः ॥१८॥

शब्दार्थपौनरुक्त्यं प्ररुढमभिधीयते दोषः ॥१९॥

अस्यार्थपौनरुक्त्येनैव गतार्थत्वादत्राभिधानं शब्दार्थपौनरुक्त्यलक्षणतृतीयकक्ष्यागतालङ्कारनिरूपणैकप्रयोजनम्।

तात्पर्यभेदयुक्तं लाटानुप्रास इत्यदः कथितम् ॥२०॥

तात्पर्यमन्यपरत्वं तदेव भिद्यते न शब्दार्थस्वरूपम्। नायमनन्वयः।

---

स्वरचित्रं तु बन्धशिथिलतायाः दोषं एव। नालंकारत्वेनाङ्गीकृतम्। यथाह राजाभोजः (सरस्वतीकण्ठाभरणे) राजानं नरसिंहं विलोक्य, समस्तैः इन्द्रो मन्यते। श्रुतिभिः स्तुतयः कृताः। शत्रवः लुलिताः, मोदोजातः, मुहुर्मुहुर्मुग्धत्वं संजायते।

अस्यार्थपुनरुक्ततयैव गतार्थत्वेनात्राभिधानम्। शब्दार्थपौनरुक्त्यलक्षणं तृतीयेऽलंकारनिरुपणस्यैकप्रयोजनम्।

तात्पर्यभेदयुक्तं लाटानुप्रासः। पूर्वमेवाभिहितम्।

तात्पर्यं यदि तद्भिन्नत्वेऽन्यपरत्वे सति शब्दस्वरूपं नास्ति। नायमनन्वयः।

---

स्वरचित्र तो बन्ध शैथिल्य के कारण दोष ही है। यह अलंकारता में स्वीकार नहीं होता है। जैसे—( भोजराज ने कहा है। ) सरस्वती कण्ठाभरण में—राजा नरसिंह को देखकर इन्द्र समान सभी लोग उन्हें जान गए। श्रुतियां स्तुति करने लगी। शत्रु कटने लगे। मोद होने पर पुष्टि को प्राप्त हुए। और बार-बार मुग्धत्व को प्राप्त हुए।

इसके अर्थ पुनरुक्तत्व से ही गतार्थता वशात् यहाँ अभिधान किया गया है। शब्दार्थपुनरुक्तता लक्षण तीसरी कक्षागत अलंकारनिरूपण का एक प्रयोजन है।

तात्पर्य भेदयुक्त लाटानुप्रास है। यह कहा गया है। तात्पर्य से अन्य परक हो तो वही भिन्न होते हुए शब्दार्थ स्वरूप नहीं है। यह अनन्वय नहीं है।

---

arranged in a certain order will present the outlines of lotus leaves but this figure of speech according to vidyādhara is really a type of alliteration and as already pointed out by him should better be never employed because it brings about no embellishment either of the sound or of the sense.

पौनरुक्त्यस्य तात्पर्यमात्रभिन्नस्यात्र प्रयोजकत्वात् । अनन्वये चार्थमात्रगतयुगपदुपमानोपमेयभावस्योपयुक्तत्वात् । शब्दैक्यस्य पुनरौचितीवशेन प्रसङ्गसङ्गतत्वात् । तस्माद्भिन्नविषयत्वमनयोः ।

प्रतिभटकान्ताकुचतटमकरीलुण्टाकचापटङ्कारः ।
वीरनृसिंह इवाजौ वीरनृसिंहश्चिरं जयति ॥२१॥

इत्यादावेकवाचकानुप्रवेशलक्षणः संकरः स्यात् । उदाहरणं तु—

---

पुनरुक्ततायाः तात्पर्यमात्रभेदस्येह लक्ष्यत्वात् । अनन्वये चार्थमात्रगतोभयोपमानोपमेयभावस्यौचित्यात् । अत एव भेदविषयत्वमनयोः ।

शत्रुवधूस्तनाग्रभागोपरि मकरी चित्रिता । चापध्वनिर्भवति । वीरनृसिंह इव रणे वीरनृसिंहोऽतिवेगेन विजयते ।

इत्यस्मिनेकवाचकानुप्रवेशलक्षणः संकरो भवेत् । यथा—

---

पौनरुक्त्य के तात्पर्य मात्र भिन्न का यहाँ प्रयोजन है और अनन्वय में अर्थमात्र गत दोनों उपमान उपमेय भाव की उपयुक्तता है । शब्द एकता की पुनः औचित्य प्रसङ्गता साथ है । इन दोनों में भिन्न विषयता है ।

शत्रु वधू के स्तन के अग्रभाग पर मकरी चित्रित है । धनुष की ध्वनि होती है । वीर नरसिंह के समान वीर नरसिंह युद्ध में अति वेग से विजयी हों ।

इसमें एक वाचकानुप्रवेश लक्षण युक्त संकर अलंकार है । उदाहरण देखें ।

---

5–If identical words with identical meanings but with different emphasis were used in a line. this will be a case of (Lātānuprās) Lāta-alliteration.

The illustration is. ( lotuses ) become ( lotuses ) only when, their petals open up in the sunlight. Here the word lotus has been repeated in the same meaning is lotus flower in general and the second lotus meaning lotus flowers rendered a special charge because of sunlight. This alliteration has been borrowed from Alankārsarvaswa of Ruyyaka, in fact the entire treatment of figures of speech arises out of words.

**ताला जाअन्ति गुणा जाला दे सहिय एहि घेप्पन्ति ।**

**इह किरणाणुगहिआ इहोन्ति कमलाइ कमलाइ ॥२२॥**

अत्र प्रथमः कमलशब्दो वस्तुमात्राभिधायी । द्वितीयस्तुसौरभसौकुमार्यकान्तिमत्वसंभावितकान्तावदनोपमानत्वादिधर्मरूपार्थ इत्यस्त्येव तात्पर्यभेदः ।

**पञ्चैतेऽलंकारा निर्णीताः पौनरुक्त्यकक्ष्यायाम् ॥२३॥**

इति श्रीमतो महामाहेश्वरस्य विद्याधरस्य कवेः कृतावेकावलीनाम्न्यलंकारशास्त्रे शब्दालंकारनिरूपणं नाम सप्तम उन्मेषः ।

---

गुणास्तदैव गुणाः जायन्ते सदा तान् सहृदयाः स्वांशे विचारयन्ति न त्वर्धम् । भेदं जानन्ति तानि कमलानि सन्ति यानि कमलानि वस्तुतः सूर्यकिरणेन विकसन्ति । सुगन्धितानि जातानि च ।

इह प्रथमः कमलशब्दः वस्तुमात्रं दधाति । द्वितीयस्तु सुगन्धसुकुमारत्वं कान्तित्वं संभावितकान्तावदनाद्युपमानत्वाच्च धर्मरूपार्थमित्यस्ति तात्पर्यभेदः ।

पौनरुक्त्यक्ष्यायां पञ्चैते शब्दालंकाराः कथिताः,

एकावलीसरलाटीकायां सप्तमोऽध्यायः

---

'गुण तो तभी गुण हैं, जब उन्हें सहृदय अपने में आधा न करें । उनका मर्म समझें । वे ही कमल वस्तुतः कमल हैं, जिन्हें सूर्य किरण की कृपा प्राप्त है ।'

इसमें प्रथम कमल शब्द वस्तुमात्र अभिधान करने वाला है । दूसरा कमल सुगन्ध, सुकुमारता, कान्तियुक्तता, संभावित कान्ता वदन आदि उपमान धर्म रूपार्थ है । यह तात्पर्य भेद है ।

पुनरुक्तता की श्रेणी में ये पाँच अलंकार वर्णित हुए । इस प्रकार श्रीमान् महामाहेश्वर विद्याधर कवि द्वारा प्रणीत 'एकावली' नामक अलंकार शास्त्र ग्रन्थ में शब्दालंकार निरूपण नामक सातवाँ अध्याय समाप्त होता है ।



# अथाष्टम उन्मेषः

अर्थालङ्करणानि प्रकटीकुर्मोऽधुना नु तत्रापि ।
ब्रूमः प्रथमं भेदाभेदप्राधान्यतस्तावत् ॥१॥
विलसति सति साधर्म्ये स्यादुपमानोपमेययोरुपमा ।
द्विधाम्यधायि कविभिः पूर्णा लुप्ता विभेदेन ॥२॥

उपमेतिलक्ष्यनिर्देशः । शेषस्तु लक्षणम् । समानो धर्मो ययोस्ते सधर्मणी अर्थादुपमानोपमेये इन्दुवदनादिके तयोर्भावः साधर्म्यं कविसमयप्रसिद्धं कान्तिमत्वादि न तु वस्तुत्वप्रमेयत्वादिग्राह्यम् । अत एवोपमानोपमेययोरुपादानमिह कविसमय बहिर्भूतोपमानोपमेयनिरसने पर्यवसितम् । इतरथा कुमुदमिव मुखं कारणमिव कार्यमित्यादावाप्युपमा स्यात् । कार्य कारणयो; साधर्म्यमेवकुतस्त्यमिति चेन्न । कारणगुणप्रक्रमेण कार्ये गुणारम्भ इत्यनयोरपि साधर्म्यस्य संभवास्पदत्वात् ।

---

अथाष्टमोऽध्याय एकावलीसरलाटीकायाम् ।

साम्प्रतं त्वर्थालंकरणं कथ्यते । तत्र भेदाभेदप्रधानतया पूर्वं कथ्यते । उपमानोपमेययोः सादृश्यस्य सुशोभने सति भवत्युपमालङ्कारः । कविभिरियमुपमा द्वेधा कथिता । पूर्णालुप्ताभेदेन द्विधा भवति ।

उपमेति लक्ष्यनिर्देशः । शेषस्तु लक्षणम् । द्वयोः समानयोः धर्मयोः समानधर्मी । अर्थादुपमानोपमेययोश्चन्द्रमुखादौ तयोर्भावः । समानं धर्म कविप्रसिद्धं कान्तिमत्वादि ग्राह्यं न तु वस्तुप्रमेयत्वादिग्राह्यम् । अत एवोपमानोपमेययोरुपादानमत्र कविसमयप्रसिद्धमुपमानोपमेयनिरसने पर्यवसितम् । अन्यथा कमलमिव मुखं कारणमिव कार्यमित्यादौ स्यादुपमा । कार्यकारणयोः साधर्म्यमेव कुतः । इति चेन्न कारणगुणक्रमेण कार्ये गुणारम्भः इत्यनयोः साधर्म्यस्य संभावना भवति ।

---

अब आठवाँ अध्याय प्रारम्भ होता है ।

इस समय तो अर्थालंकार का विवरण प्रस्तुत किया जाता है । इसमें भेदाभेद प्रधानता के कारण पहले इसे कहेंगे ।

उपमान एवं उपमेय के सादृश्य के सुशोभन होने पर उपमालंकार होता है । यह उपमा कवियों द्वारा दो प्रकार की कही गई । पूर्णा लुप्ता भेद से उपमा दो प्रकार की होती है । उपमा ऐसा लक्ष्य निर्देश है । शेष तो लक्षण है । दो समान धर्मों में समानधर्मी अर्थात् उपमान, उपमेय में चन्द्रमुख आदि में उन दोनों में भाव है । समान धर्म कवि प्रसिद्ध कान्तिमत्वादि से ग्राह्य है । न तो वस्तुप्रमेयत्व आदि ग्राह्य है । इसलिए उपमान उपमेय दोनों का उपादान यहाँ कवि प्रसिद्ध उपमान उपमेय के निरसन में पर्यवसित है । दूसरे प्रकार की उपमा कुमुद के सदृश मुख कारण के समान कार्य में उपमा हो । कार्य कारण दोनों में साधर्म्य ही कहाँ से होगा ? यह कहना ठीक नहीं है । कारण गुण के क्रम से कार्य में गुण का आरम्भ न दोनों से भी साधर्म्य की संभावना होती है ।

ननु भेदाभेदप्राधान्यवचनमिह न समीचीनमिति चेदुच्यते । तन्न चतुरचेतसां विचारधुरमधिरोहति । साधर्म्ये सति प्रकारत्रयस्य संभवात् । तथा हि क्वचिद् भेद प्राधान्यं दृष्टं यथा व्यतिरेके । क्वचिद् भेद प्राधान्यं यथा रूपके । क्वचित् पुनरुभयप्राधान्यं यथास्यामेव । तच्चेदत्र नोपादीयेत तदा व्यतिरेकरूपकयोरपि विषयमियमाक्रामेत् । साधर्म्यं तु गुण क्रियारूपमनुगतमिह भवेदेकेनैव श्लिष्टेनाश्लिष्टेन वा शब्देनोपादानमर्हति ।

---

भेदाभेदप्राधान्यवचनमत्र न समीचीनं खलु । तन्न चतुरचेतसां विचारेऽर्हत्यौचित्यम् । साधर्म्ये सति संभावितोपमायाः त्रयो भेदाः । तथा क्वचिद्भेद प्राधान्यं यथा व्यतिरेकेऽलङ्कारे । कुत्रचिदभेदप्रधानता यथा रूपकालङ्कारे । क्वचिच्च पुनः द्वयोः प्रधानता यथास्यामेव । यद्यत्र नोपादीयेत् तदा व्यतिरेकरूपकयोरपि विषयमियमाक्रामति । साधर्म्यं तु गुणक्रियारूपम् । यदिहैकेनैव श्लिष्टेनाश्लिष्टेन वा शब्देनोपादानं भवति ।

---

निश्चय ही भेद अभेद प्राधान्य की बात यहाँ समीचीन नहीं है । यदि कहा जाय तो उचित नहीं । वह चतुर चित्त वालों के भी विचार में उचित नहीं है । साधर्म्य होने पर तीन प्रकार की उपमा होती है । वैसे कहीं भेद की प्रधानता देखी गई । जैसे व्यतिरेकालंकार में । कहीं अभेद की प्रधानता है, जैसे रूपकालङ्कार में । कहीं भेद और अभेद की प्रधानता है, जैसे इसी में । यदि वह यहाँ न हो तो व्यतिरेक रूपक दोनों में भी विषय का उल्लंघन हो । साधर्म्य तो गुण क्रिया रूप है । जो यहाँ एक ही से श्लिष्ट अथवा अश्लिष्ट शब्द से उपादान होने योग्य है ।

---

Chapter VIII

Figures based on sense. The first and foremost among them is simile. In this figure of speech similarity is sought between two dissimilar objects on the basis of some common attributes fit for poetic description. For example, the comparison between the face of a woman and the moon is established on the ground of some common qualities between them, Through this comparison the woman's face aquires additional significance and so does the moon also, The object of comparison and the object compared with are so obvious that it does require any aid from the Nyāya Philosophy to establish its validity.

Such as the moon; the lotus, the ocean, the mountain etc. are fixed up by the usage long current in poetic schools. For example

श्लिष्टशब्दोपादानेऽप्यत्र न श्लेषः । तस्य धर्मरूपतयाङ्गत्वात् । श्लिष्टशब्दोपात्तयोर्वस्तुतो भिन्नयोरेव धर्मयोरिहैकरूपतावगतिः भेदे सत्यभेद इत्येवं रूपातिशयोक्तिमहिम्नेति श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणीतेयमुपमेति मन्तव्यम् ।

---

श्लिष्टशब्दस्योपादानेऽपि नेह श्लेषः । तस्य धर्मरूपत्वेनाङ्गत्वकारणात् । एकरूपत्वं भवति । श्लिष्टशब्दोपात्तयोः निम्नधर्मयोरेव । भेदेसत्यभेदोऽयमेवं रूपातिशयोक्तिमहिम्ना श्लेषप्रतिभोत्थितातिशयोक्त्यनुप्राणितेयमित्युपमा मन्तव्या ।

---

श्लिष्ट शब्द के उपादान में भी यहाँ श्लेष नहीं है । उसकी धर्मरूपता से अङ्गत्व कारण है । श्लिष्ट शब्द उपात्त वस्तु दो भिन्न धर्म में ही एक रूपता जानी जाती है । भेद होने पर अभेद इस प्रकार रूपातिशयोक्ति की महिमा से यह श्लेष प्रतिभा से उत्थापित अतिशयोक्ति से अनुप्राणित होता है, जिसे उपमा मानना चाहिये ।

---

if the eye is to be compared with any flower that can be the lotus only and the nightlily (Kumudini).

Though the lotus and the (Kumudini) are so similar in shape that the eye can be compared to any of the two, but the Indian poetic tradition accepts only the lotus as the standard of comparison.

Even though cause and effect are by nature similar but their similarity is not acceptable to Indian poetic tradition. The other point to be noted is that the two objects compared should be essentially different in point of genus, time and place etc. and should also be one in point of quality action etc. and it is this that differentiates simile or (upamā) from (Vyatirek) and metaphor, because (vyatirek) seeks to propound both. similarity here can be described either by words having double meaning or words having no double meanlng, Even though words having double meanings are possible of employment in the simile, It does not mean that the simile and pun are one and the same; because simile is a functioning agent having different functions to perform; whereas pun is just one of the functions of simile; so that pun always remains a subordinate factor of simile.

उपमानोपमेयसाधारणधर्मोपमावाचकानामुपादाने भवन्त्येषा पूर्णा स्यात् । एषामुपमादीनामन्यतमस्य द्वयोस्त्रयाणां वा लोपे भवन्ती लुप्तेति योगोऽप्यनयोः संभवति । पूर्णा द्विविधा श्रौती आर्थी चेति । इवादयस्तु यत्पराः शब्दास्तस्यैवोपमानत्वमिति यद्यप्युपमानमेव विशिषन्ति तथापि श्रुतेर्महिम्ना षष्ठीवत् सम्बन्धं द्योतयन्तीति तत्सद्भावेनान्वितार्था श्रौती । तेन तुल्यमित्यादावुपमेय एव तत्तुल्यमस्येत्युपमान एव इदं च तच्च तुल्यमित्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिः साम्यपर्यालोचनया तुल्यताप्रतीतिरिति तत्र साधर्म्यस्यार्थत्वात् ।

---

उपमानोपमेययोः साधारणधर्मोपमावाचकशब्दस्योपादाने पूर्णोपमा भविष्यति । एतेषामुपमादीनामेकस्य द्वयोस्त्रयाणां वा लोपे सति भवति । लुप्तोपमा पूर्णोपमा द्विधा श्रौती चार्थी । इवादि शब्दः यस्यानन्तरं तस्यैवोपमानत्वं भवति । यद्यप्युपमानस्यैव विशिष्टता तथापि श्रुतिमहिम्ना षष्ठीसम्बन्धेन द्योत्यते, एवं सद्भावेनान्वितार्था श्रौत्युपमा । तेन तुल्यमित्यादावुपमेय एव । तत्तुल्यमित्यस्त्युपमान एव । तच्चतुल्यमिति द्वयोरपि तुल्यादिशब्दानां विश्रान्तिः । तुल्यतायाः पर्यालोचनेन तुल्यतायाः प्रतीतिरियं तत्र साधर्म्यस्य सार्थकं कारणम् ।

---

उपमान, उपमेय के साधारण धर्म उपमा वाचक शब्द के उपादान में यह पूर्णोपमा होगी । इन उपमा आदि के एक, दो अथवा तीन के लोप होने पर लुप्तोपमा दोनों की संभावना होती है । पूर्णा उपमा दो प्रकार की श्रौती एवं आर्थी है । इव आदि जिसके बाद हो, उसका ही उपमानत्व है । यद्यपि उपमान की ही विशिष्टता है, तथापि श्रुति महिमा से षष्ठी सम्बन्ध द्योतित होता है । इस प्रकार के सद्भाव से अन्वितार्थ श्रौती उपमा है । तेन तुल्यं आदि में उपमेय ही तत्तुल्यम् इस प्रकार उपमान ही यह इसका है और तच्च तुल्यम् दोनों में भी तुल्यादि शब्दों की विश्रांति है । तुल्यता की पर्यालोचना से तुल्यता की यह प्रतीति है, वहाँ साधर्म्य का सार्थक कारण है ।

---

Where all the four (upameya) the object compared, (upmāna) the standard of comparison, the quality or action common to both (Dharma) and the word describing similarity like (Iva) have all been employed, it is called (Luptomā) partial simile, some words like (Iva) directly describes similarity.

While others like (Tulya) indirectly describes similarity. Thus full simile may be of two types (shrautī) or direct simile and (Ārthī) or implied simile. Each of these two may occur in a whole sentence or in a compound or in a (Tadhit) suffix, so that it anc

तुल्यसदृशसनाभिसन्निभसंकाशनीकाशसहचरसोदरादिपदोपादाने सार्थकाभिधानेयमार्थी। एवमियं श्रौती चार्थी चेति द्विविधापि पूर्णा वाक्ये समासे तद्धिते च भवन्ती न षट् प्रकारमतिक्रामति। क्रमेण यथा—

महीमण्डलमन्दार नरसिंह नरेश्वर।
यशः पीताम्बरं भाति तव विष्णोर्वपुर्यथा ॥३॥

इयं वाक्ये श्रौती पूर्णा। यथाशब्देन समं समासस्याभावात्।

कृपाणस्तव विध्वस्तविश्वामित्र मनोरथः।
नरसिंह धरानाथ वशिष्ठ इव राजते ॥४॥

इयं समासे श्रौतीपूर्णा। इवशब्देन समं समासस्य संभवात्।

---

तुल्यसदृशसनाभिसन्निभसंकाशनीकाशसहचरसोदरादिपदोपादाने सार्थकाभिधानेयमार्थी। एवमियं श्रौतीचार्थीचेति द्विविधापि पूर्णा। वाक्ये समासे तद्धिते च भवन्ति षट् प्रकाराः। क्रमशः यथा—

पृथ्वीमण्डले मन्दारसदृशो नरेशो, नरसिंहनरेन्द्र ते यशः विष्णोरिव भासितम्। यथा तस्य शरीरम्।

वाक्ये श्रौतीपूर्णोपामेयं यथाशब्देन सह समासाभावकारणात्।

हे पृथ्वीनाथ नरसिंह! भवान् वशिष्ठ इव शोभते। भवतः खड्गो विश्वस्यशत्रूणां मनोरथान् खण्डितवान्। यथा वशिष्ठो विश्वामित्रस्य जयमनोरथान् विध्वंसितवान्। इयं समासे श्रौती पूर्णोपमा। इव शब्देन सह समाससंभावनाकारणात्।

---

तुल्य, सदृश, सनाभि, सन्निभ, संकाश, नीकाश, सहचर सोदरादि पद के उपादान में सार्थकता के अभियान मे आर्थी उपमा है। इस प्रकार यह श्रौती और आर्थी दो प्रकार की भी पूर्णा उपमा वाक्य, समास और तद्धित में होती है और किसी प्रकार छः भेद से अधिक नहीं है। क्रमशः उदाहरण—

पृथ्वी मण्डल के नरेश मन्दार सदृश नरसिंह तुम्हारा यश विष्णु के समान भासित है। जैसे विष्णु का शरीर भासित है।

यह वाक्य में श्रौती पूर्णा उपमा हुई। यथा शब्द से समासाभाव कारण है।

हे नरसिंह नरेश्वर! आप वशिष्ठ के समान सुशोभित हैं। आपकी तलवार ने विश्व के शत्रुओं के मनोरथ नष्ट कर दिये हैं। जैसे वशिष्ठ ने विश्वामित्र के मनोरथ को ध्वस्त कर दिया था।

यह समास में श्रौती पूर्णोपमा है। इव शब्द के साथ समास की संभावना कारण है।

---

be subdivided into six classes. For example, O king ! your fame is like the body of (Viṣṇu), because both are (Pitāmbara).

Here the word ( Pitāmbara ) in the Case of your fame means pervading the entire expanse, whereas in case of ( viṣṇu's ) body, it means yellow robes adorning the body of ( Viṣṇu ).

वाहिनीश्वरता लक्ष्मीशालिता भूरिसत्त्वता ।
अकूपारवदाभाति नृसिंहनृपते तव ॥५॥

इयं श्रौती पूर्णा तद्धिते । अकूपारस्येवाकूपारवदिति सम्बन्ध इवार्थे वतेर्विहितत्वात् ।

नृसिंह भूप भवतःकराय श्लाघते न कः ।
दानवारिस्थितिर्यत्र भाति सागरवत् सदा ॥६॥

इयमपि श्रौती पूर्णा तद्धिते । सागरवदित्यधिकरण इवार्थे वतेर्विधानात् ।

हेलयैव विनिर्धूततारापतियशस्तव ।
सदृशं भाति रामेण नरसिंहनरेश्वर ॥७॥

---

हे नरसिंह नरेश ! तव सेना गम्भीरसमुद्र इव प्रभुता लक्ष्मीवता बहुपराक्रमशालिता संयुक्ता सुशोभिता ।

तद्धिते चेयं श्रौती पूर्णोपमास्ति । अकूपारस्येवाकूपारमिति सम्बन्ध इवार्थे वतेर्विधानात् ।

हे नरसिंह नरेश ! ते करं को न प्रशंसति । सर्वदा समुद्र इव गाम्भीर्यं भवतो दानवीरस्य । स्थितिरियम् ।

इयमपि तद्धिते श्रौती पूर्णोपमा । सागर इव सागरवदिति द्वयोःवतेर्विहितत्वात् । यथा रामेण हतो बाली तारापतिर्हेलयैव, तथैव हे नरसिंह भवतो यशः राम इवानायासेन सुशोभितम् ।

---

हे नरसिंह नरेश ! तुम्हारी सेना प्रभुता, लक्ष्मीवत्ता बहुपराक्रमशीलता अथाह सागर की भाँति सुशोभित है ।

यह श्रौती पूर्णोपमा तद्धित में है । अकूपार के सदृश अकूपारवत् का सम्बन्ध इव के अर्थ में वत् के कथन से होता है ।

हे नरसिंह नरेश ! आपके (कर) हाथ की कौन प्रशंसा नहीं करता है । अर्थात् सभी करते हैं । सर्वदा सागर के समान गंभीर आप जैसे दानवीर की स्थिति है ।

यह भी श्रौती पूर्णोपमा तद्धित में हुई । सागर इव सागरवत् इन दोनों में वत् का विधान हुआ है ।

जैसे तारा के पति बाली को राम ने कौतुक वशात् मारा था । वैसे ही नरसिंह नरेश ! आपका यश अनायास ही सुशोभित है ।

---

The two have been compared with the help of the word (yathā) just as which is possible of use only in a sentence.

Therefore it is a full direct simile depending upon a sentence O king ! your sword has destroyed the desire of the enemies of

इयमार्थी पूर्णा वाक्ये ।

नरसिंहमहीपाल समस्तोऽपि रिपुस्तव ।
पारावारसमानत्वं दधाति स्वपदच्युतः ।।८।।

इयमार्थी पूर्णा समासे । पारावारसमानत्वमिति समासस्य विद्यमानत्वात् ।

अयं ते यशोराशिरुच्चैरावणजित्त्वरः ।
इह रामवदाभाति नरसिंह महीपते ।।९।।

अत्र रामेण तुल्यं वर्तत इति तुल्यार्थे वतेर्विधानादियमार्थी पूर्णा तद्धिते दर्शिता। एवमियं षोढा । लुप्तापि द्वेधाश्रौती चार्थी चेति । तत्र धर्मानुपादाने श्रौती लुप्ता वाक्ये समासे चेति द्वेधा । तद्धिते त्वेषा न संभवति । इवार्थे संभवतोऽपि धर्मानुपादाने वतेरसंभवात् ।

---

इयं वाक्ये आर्थी पूर्णोपमा भवति ।

नरसिंह धरानाथ ! सर्वे तव शत्रवः स्थानच्युताः पारावार इव स्थिताः ।

इयमार्थी पूर्णोपमा समासे । पारावारसमानत्वमिति समासस्य वर्तमानत्वात् ।

हे नरसिंह राजन् । भवतः कीर्तिरियं रामवत् राजते । यथा स उच्चैरावणं जितवान् । अत्र रामेण तुल्यं विद्यते । इते तुल्यार्थे वतेर्विहितत्वादियमार्थी पूर्णोपमा तद्धिते प्रदर्शिता । एवमियं षोढा लुप्तोपमापि द्वेधा श्रौती चार्थी । तत्र धर्मानुपादाने श्रौती लुप्ता वाक्ये समासे च द्वेधा । तद्धिते त्वेषा न भवति । इवार्थे संभवतोऽपि धर्मानुपादाने वतेरसंभवात् ।

---

यह आर्थी पूर्णा उपमा वाक्य में है ।

नरसिंह नरेश ! तुम्हारे सभी शत्रु अपने स्थान से भ्रष्ट होकर पारावार के समान स्थित हैं ।

यह आर्थी पूर्णा उपमा समास में है । पारावार समानत्व में समास विद्यमान है । हे नरसिंह राजन् ! आप की यह कीर्ति राशि यहाँ राम के समान सुशोभित हैं । जैसे उन्होंने रावण को जीत लिया और आप की कीर्ति ने ऐरावत को ।

यहाँ राम के समान स्थित है । इस तुल्यार्थ में वत् के विधान आदि आर्थी पूर्णा उपमा तद्धित में देखी गई । इस प्रकार छः भेद है । लुप्तोपमा भी श्रौती आर्थी दो होती है । वहाँ वाचक धर्म के अनुपादान में श्रौती लुप्तोपमा वाक्य में और समास में दो प्रकार की होती है । तद्धित में यह संभव नहीं है । इस अर्थ में संभवतः धर्म के अनुपादान में वत् की संभावना नहीं है ।

---

the world, as has (vasiṣtha) destroyed the desire of the sage (viswāmitra), Here the similarity has been described with the help of (Iva) so that it is a case of full direct simile depending upon a compound, (Vasistha Iva) is a compound word.

कल्पवादेरिवार्थे विधानाभावाच्च ॥ आर्थी तु वाक्ये समासे तद्धिते च १.वर्त्ती त्रिधा भवति तेनेयं पञ्चधा । क्रमेण यथा—

खड्गो यथोरगपतिस्तव कौमुदीव, कीर्तिर्युगान्ततपनेन समः प्रतापः ।
वाक्यं पचेलिमरसालफलानुकारि, बाहुस्तु वीर नरसिंह सुमेरुवत्प ॥१८॥

अत्र खड्गो यथोरगपतिरित्यादौ क्रूरत्वादेर्धर्मस्यानुपात्तत्वादियं लुप्ता पञ्चप्रकाराप्येकस्मिन्नेव श्लोके दर्शिता । उपमानानुपादाने वाक्ये यथा—

---

कल्पवादेरिवार्थे विहिताभावात् च । आर्थी तु वाक्ये समासे तद्धिते च भवति त्रिधा, तेनेयं पञ्चधा । क्रमेणोदाहरणानि—

हे वीर नरसिंह ! तव यशः कौमुदीव स्वच्छं, खड्गश्च गरुड़सदृशः । युगान्तप्रलयसूर्य इव तव प्रतापः । वाक्यानि च पक्वमधुराम्रफलानि बाहुः सुमेरुसदृशः । अत्र खड्गो यथा गरुडादौ क्रूरत्वादिधर्मे भवति । अनुपादाने सति लुप्तोपमा पञ्चधापि वाक्ये प्रदर्शितैव । उपमानस्यानुपादाने वाक्ये श्रौती लुप्तोपमा या; क्रमेणोदाहरणानि ।

---

कल्पवाद इव के अर्थ में विधान का अभाव है । आर्थी लुप्ता उपमा, वाक्य, समास और तद्धित में तीन प्रकार की होती है । इससे यह पाँच प्रकार की हुई । क्रमशः उदाहरण—

हे वीर नरसिंह ! तुम्हारी कीर्ति कौमुदी के समान स्वच्छ तलवार गरुड़ के समान, युगान्त के प्रलय सूर्य के समान तुम्हारा प्रताप वाक्य पके मीठे आम के फल के समान औंर भुजाएँ सुमेरु के समान हैं । इसमें तलवार जैसे गरुड़ आदि में क्रूरता इत्यादि धर्म के न कहने से यह लुप्तोपमा पाँच प्रकार की एक ही वाक्य में दिखाई गई । उपमान से वाक्य में श्रौती लुप्तोपमा का उदाहरण देखें ।

---

(O king ! your armies, your prowess, your prosperity and your valour are fathomless as the ocean.)

Here the word (sāgarvat) ends in a (Tadhita) suffix. (O king your fame excelling the moon (Tārāpati) is like Rāma, who has banquished (Bāli) the hasband of (Tārā) (Tārāpati).

This is a case of implied full simile depending upon a sentence because similarity has been described here with the help of the word ( sadriśa.) which fails to yield its meaning except in a sentence and the word ( sadriśa ) describes similarity by implication.

( O King ! your enemies; divested of their glamourous position are similar to the Ocean).

साहित्यार्णवकर्णधारकरुणपीयूषपाथोनिधे,
विद्वच्चातकवारिवाहकमलापर्यङ्कपङ्केरुह ।
त्वां केनोपमिमीमहे त्रिजगति प्राप्तप्रकर्षैर्गुणै,
स्तुल्यते नरसिंहपार्थिव वयं कुत्रापि न प्राप्नुमः ॥११॥

अत्र तुल्यशब्दोपादानादार्थी वाक्ये । तुल्यशब्देन समासकारणात् । त्वतुल्यमिति पाठे त्वेपैव समासे भवति । अत्रोपमानस्य सत्तायाः संभाव्यमानत्वादनन्वयालङ्कारो न शङ्कनीयः । अत्र न प्राप्नुम इत्यनेनोपमानस्याप्राप्तिरुक्ता न त्वभावः । वाचकानुपादाने यथा—

---

हे नरसिंह नरेश ! वयं क्वचिदपि नेदृशं प्राप्स्यामः त्रिषु लोकेषु यो विश्रुतः वरगुणैः संयुक्तः तव तुल्यं भवति । अतः तवोपमा केन देया । साहित्यार्णवे कर्णधारः करुणामृतसागरो विद्वान् । चातकेभ्यो घन इव कमलापर्यङ्कस्य कमलसदृशो भवान् ।

अत्र तुल्यशब्दस्योपादानेनार्थी वाक्यगतोपमाभवत् । तुल्यशब्देन न समासः तत्तुल्यमितिपाठे तु समासे भवति । इहोपमानस्य सत्तायाः संभावनयानन्वयालंकारस्य न शङ्का कर्तव्या । अत्र न प्राप्नुमः । एतद्द्वारेणोपमानस्याप्राप्तिः, अभावो नास्ति । वाचकानुपादाने सति यथा—

---

हे नरसिंह नरेश ! हम कहीं भी ऐसा नहीं पाते हैं, जो तीनों लोकों में उच्च गुणों से युक्त तुम्हारे समान हों । अतः तुम्हारी उपमा किससे दी जाय ? साहित्य सागर के कर्णधार, करुणामृत सागर, विद्वान्, चातकों के घन, कमलापर्यङ्क कमल सदृश आप हैं ।

यहाँ तुल्य शब्द के उपादान से आर्थी वाक्यगत उपमा हुई । तुल्य शब्द से समास नहीं हुआ है । त्वत्तुल्यं इस पाठ में तो यही समास में होता है । यहाँ उपमान की सत्ता की संभावना से अनन्वय अलंकार की शङ्का नहीं करनी चाहिए । यहाँ (न प्राप्नुमः) इसके द्वारा उपमान की अप्राप्ति कही गई । अभाव तो नहीं है । वाचक के अनुपादान में उदाहरण जैसे—

---

Here the word ( Pārāwārsamānatwam ) a compound has been employed to describe similarity. It is, therefore, a case of implied full simile depending upon a compound because (Pārāwārsamānatwam) describes similarity by implication.

( O king ! the totality of your fame is similar to Rāma because Rāma has banquished (Rāvana) and your fame has cxcelled the elephant (Airāvata) in point of whiteness,

समसमयसमुद्यद्द्वादशादित्यशङ्का, चकितजगदसोढप्रौढतापेप्रतापे ।
शिशिरयितुमशेषं गाङ्गवंशावतंस, प्रभवति तव कीर्तिर्दुग्धवीचीसमीची ।।१२।।

अत्र दुग्धवीचीसमीचीव्यापिनीति वाचकलोपः । यथा वा—

पृथुलकुचभारमुत्कटमदनं तरलाक्षमाकुलश्वसनम् ।
अन्तःपुरीयति वनं यवनावनिवल्लभो नृसिंहनृप ।।१३।।

अत्रान्तःपुरमिवाचरतीति वाचकलोपः ।

तव वीर कलिङ्गेश कृपाणः पन्नगायते ।
पानक्रीडासु यस्याजौ रिपुकीर्तिः पयायते ।।१४।।

अत्र पन्नग इवाचरति पय इवाचरतीति वाचकलोपः । यथा वा —

पश्यन्नवघनदर्शं तव वीर नृसिंह निस्त्रिंशम् ।
खङ्गः सङ्गरसीमनि संचरति मरालसंचारम् ।।१५।।

अत्र नवघनमिव दृष्ट्वा मराल इव संचरतीति वाचकलोपः । द्विलोपे यथा—

---

समसामयिकोद्यतद्वादशसूर्यशङ्कयाश्चर्यित संसारसूर्यताप इव नरसिंहस्य पराक्रमोऽसहनीयोऽस्ति ।

इमं पूर्णरूपेण शीतलयितुं गांगवंशावतंसनरसिंह तव यशो दुग्धप्रवाह इव । अत्र दुग्धवीचीसमीची व्यापिनीति वाचकलोपः । उदाहरणमत्र—

हे नरसिंह नरेश ! यवननरेशवधूः वनेऽन्तःपुरमिव प्रविशति । उत्तुंगकुचभारं वहति । कामदेवातिमदसंयुक्ता । श्वासप्रश्वासो जायते । दयापात्रत्वं जायते । अत्रान्तःपुरमिवाचरतीति वाचकलोपः ।

वीरकलिङ्गाधिपतेः खड्गोऽयं सर्प इव । रणे शत्रूणां यशो रक्तपानं करोति ।

अत्र पन्नग इव आचरतीति, पय इवाचरतीति द्वयोरपि वाचकलोपोऽस्ति । उदाहरणम्—

हे वीर नरसिंह ! ते खड्गः नूतनजलधर इव दर्शनीयोऽस्ति । युद्धसीमनि मराल इव सञ्चरति खङ्गः ।

अत्र नवघनमिव दृष्ट्वा मराल इव संचरतीति वाचकलोपो भवति । उपमानधर्मयोर्लोपे यथा –

---

सम सामयिक उद्यत बारह सूर्य शङ्का से आश्चर्य हुए संसार को सूर्य ताप के समान नरसिंह का पराक्रम असहनीय है। इसे पूर्णरूप से ठण्डा करने के लिए गाङ्गवंश में श्रेष्ठ नरसिंह तुम्हारा यश दूध की लहर के समान समर्थ है ।

यहाँ 'दुग्धवीचीसमीचीव्यापिनी' में वाचक लोप है । उदाहरण—हे नरसिंह नरेश ! यवन राजा की वधू वन में अन्तःपुर के समान प्रवेश करती है । भारी स्तन का भार है । काम से अत्यन्त मदयुक्त है । दयायुक्त श्वासप्रश्वास उत्पन्न होता है । इसमें 'अन्तःपुरमिवाचरति' वाचकलोप है ।

तुलामालम्बते यस्य नृसिंह नृपते भवान् ।
न व्यलोकि न चाश्रावि स कश्चन महीतले ॥१६॥

अत्र यस्येत्युपमानस्य शौर्यादिधर्मस्य च लोपः । त्रिलोपे यथा ।

समालोक्यालेख्यस्थितमपि मृगाक्ष्यः फणभृतं,
प्रकम्पन्ते धैर्यं त्वदरितरुणीनां त्वनुपमम् ।
यदेतास्त्वद्धाट्यामधिरजनि यान्त्यः फणभृतां,
फणारत्नं हस्तैः पिदधति दृढं वीर विपिने ॥१७॥

अत्र मृगस्याक्षिणी इव आयते अक्षिणां ता मृगाक्ष्य इत्युपमानवाचकधर्माणां लोपः । इयं च क्वचिद्वस्तुप्रतिवस्तुभावेन भवति । यथा—

परार्घ्यमणिकेयूरस्तव वीर भुजार्गलः ।
धत्ते फणामणिश्लाध्यां फणिनामीशितुः श्रियम् ॥१८॥

---

हे वीर नरसिंह नरेश ! भवानीदृशोऽस्ति । यस्य न्यायः तुलामालम्बते । भूतले न दर्शनीयः । एतादृशश्च पुरुषो न श्रवणीयः । कोऽप्यस्ति पृथ्वीतले ।

अत्र यस्येत्युपमानस्य शौर्यादिधर्मस्य लोपः । उपमानवाचकधर्माणां लोपेऽन्यदुदाहरणम् । चित्रितं सर्पं दृष्ट्वा मृगनयनीस्त्रियः धैर्यं न रक्षन्ति । त्वत्शत्रुवधूनां तु वार्ता विचित्रा । इमास्त्वत् पृथग्भूताः गच्छन्त्यः घाटीं प्रति शोभिताः । सर्पफणारत्नं पिदधति । हे वीर नरसिंह तास्तु वने विकसितप्रकाशमपि पिदधति ।

अत्र मृगस्याक्षिणीवायतेऽक्षिणी यासां ताः मृगाक्ष्य इत्युपमानवाचकधर्माणां लोपोऽस्ति । अत्रेयं च कुत्रापि वस्तुप्रतिवस्तुभावेन भवति । उदाहरणमिह—

हे वीर ! तव भुजार्गलारूपा पीतमणेः रचितकेयूरः सर्पस्य वरमणि प्रभवं च प्राप्नोति ।

---

वीर कलिङ्गाधिपति की तलवार सर्प समान है । जिसको रण में शत्रु का यश रक्तपान रूप में पिलाया जाता है ।

इसमें 'पन्नग इवाचरति' 'पय इवाचरति' दोनों में वाचक लोप है । अथवा दूसरा उदाहरण—

हे वीर नरसिंह ! तुम्हारी तलवार नवीन बादल के समान दृष्टिगत होती है । युद्ध की सीमा में हंस की चाल से चलती है ।

यहाँ 'नवघनमिव' देखकर 'मराल इव संचरति' में वाचक लोप है । उपमान धर्म दोनों के लोप होने का उदाहरण—

हे नरसिंह नरेश ! आप ऐसे हैं, जिसका न्याय तराजू का आलम्बन करता है । ऐसा नरेश न देखा न सुना । ऐसा कोई पृथ्वीतल में है ।

यहाँ जिस उपमान के शौर्य आदि धर्म का लोप है । उपमान, वाचक, धर्म तीनों के लोप होने पर उदाहरण देखें ।

अत्र परार्घ्यत्वं श्लाघ्यत्वं चेत्येक एव धर्मः कथितपदस्य दुष्टत्वाभिधानात् पर्याय-शब्देनोपनिबद्धः। एकस्यैव धर्मस्य वारद्वयमुपादानं वस्तुप्रतिवस्तुभावः। क्वचित् पुनर्विम्बप्रतिविम्बभावेन यथा—

वक्षस्थली तव नृसिंह धराधिनाथ,
विन्यस्त निस्तलतरङ्गिततारहारा।
वामीकरक्षितिधरस्य तटीव भाति,
मन्दाकिनी सलिलवेणिविटङ्कितश्रीः ॥१९॥

अत्र विन्यस्तनिस्तलतरङ्गिततारहारत्वं मन्दाकिनीसलिलवेणिबिटङ्कितश्रीत्वं च वस्तुतो भिन्नावेव धर्मावभिन्नतयातिशयोक्त्याध्यवसितौ साधारण्यं भजतः। भिन्न-योरेब धर्मयोर्द्विरुपादानं विम्बप्रतिबिम्बभावः।

यत्रोपमानगतानेकधर्मसम्बन्ध उपमेयस्याभिधातुमभिमतस्तत्र साधारणमुपमा-वाचकं पदं वाच्यमेव कर्तव्यं न तु धर्माभिधायि पदोपादानेन प्रतीयमानम्। यथा—

---

इह परार्घ्यत्वश्लाघ्यत्वयोरेक एव धर्मः। कथितपदस्य दुष्टत्वाभिधानेन पर्याय-शब्देनोपनिबद्धः। एकस्यैव धर्मस्य वारद्वयमुपादानं वस्तुप्रतिवस्तुभावं दृढीकरोति। क्वचिद् विम्बप्रतिविम्बभावेन पुनः सम्भाव्यते। उदाहरणम्—

हे नृसिंह पृथ्वीनाथ! तव वक्षस्थली निश्चलतरङ्गिततारहारा सुमेरुपर्वतस्य तटीव विभाति। मन्दाकिनो जलवेणिविटङ्कितश्रीः शोभते।

अत्र विन्यस्तनिस्तलतरङ्गिततारहारत्वे, मन्दाकिनी सलिलवेणिविटङ्कितश्रीत्वे च वस्तुतो भिन्न, एव धर्मः। अभिन्नतयातिशयोक्त्यलङ्कारो भवति। साधारण्येन द्वयोर्भिन्नयोर्धर्मयोरुपादानं विम्बप्रतिविम्बभावः। यत्रोपमानगतानेकधर्मसम्बन्धः उपमेयस्याभिधानमभिमतम्। तत्र साधारणमुपमावाचकपदं वाच्यमेव न तु धर्मा-भिधानपदोपादानेन प्रयीयमानम्। उदाहरणम्—

---

मृग समान नेत्रों वाली स्त्रियाँ स्थित चित्रित सर्प को देखकर धैर्य खो बैठती हैं। तुम्हसे तो शत्रु की स्त्रियों की विचित्र बात है। जो वे तुमसे पृथक् होकर घाटी में जाती हुई शोभित हुईं। सर्पों के फणारत्न को हाथों से ढकती हैं। हे वीर नरसिंह! वे वन में हुए दृढ़ प्रकाश को ढकती हैं।

यहाँ मृग के नेत्रों के समान दीर्घ नेत्र जिन स्त्रियों के हैं, वे मृगाक्षी हैं। उप-मान, बाचक, धर्म का लोप है। यह कहीं वस्तु प्रतिवस्तु भाव से होता है। जैसे—

हे वीर! तुम्हारी भुजा अर्गला रूप पीतमणि के वने विजायठ है। सर्प की श्रेष्ठमणि और सर्पों की शोभा को प्राप्त करते हैं।

यहाँ परार्घ्यत्व श्लाघ्यत्व एक ही धर्म है। कथित पद के दुष्टत्व अभिधान से पर्याय शब्द से उपनिबद्ध है। एक ही धर्म के दो बार उपादान होने से वस्तुप्रति वस्तु भाव हुआ। कहीं बिम्ब प्रति बिम्ब भाव की पुनः संभावना होती है। जैसे—

हे पृथ्वीपति नरसिंह ! तुम्हारी वक्षस्थली निश्चल लहराते तारहार हैं, जो ऐसे सुमेरु पर्वत की तटी की तरह है और मन्दाकिनी के जल से छूटी वेणी की शोभा के सदृश है।

यहाँ 'विन्यस्तनिस्तलतारतरङ्गिततारहारत्व' में एवं 'मन्दाकिनी सलिलवेणि-विटङ्कितश्रीत्व' में वस्तुतः भिन्न ही धर्म है, जो अभिन्नतया अतिशयोक्ति अलंकार है। यह साधारण रूप से है। भिन्न ही धर्म के दोनों के उपादान विम्व प्रति विम्ब भाव है।

जहाँ उपमानगत अनेक धर्मों का सम्बन्ध है। उपमेय का अभिधान है, वहाँ साधारण उपमावाचक पदवाच्य होना चाहिए न तो धर्म अभिधान पद उपादान में प्रतीति हो। जैसे—

---

This is the case of full implied simile depending upon a ( Tadhita ) suffix, because here the suffix ( Vat ) has been used which implies similarity and is a ( Tadhita ) suffix. This is full simile of six types.

Partial simile can also be either a direction or an implied-one; if it be a case of omission of quality or action common to two similar objects. Direct Partial simile can depend upon either a sentence or a compound. Implied Partial simile can depend upon a sentence, a compound and also upon a ( Tādhita ) compound. This simile can, therefore, be subdivided into five classes. For example, "all your enemies divested of their positions are like the ocean.

Your sword is like the serpent king, your fame like the moonlight, your prowess like the sun; arising in the time of the destruction of all the world,"

Your speech is like the juicy mango fruits and your armies like the ( sumeru ) mountain. Here all the five types of partial simile have been illustrated in one single word. It is a case of partial simile, because the common quality with the help of which similarity could be established has been omitted.

The words ( Yathā, Iva, Sanābhi, sannibh ) the compound ( Phalānukāri ) and the (Tadhita) compound (Kalpah) have been employed here just as they were in case of full simile.

कलिङ्गक्ष्मापाल त्रिदशतटिनीवीचितुलिते,
यशः पूरे दूरात् तव जगदिदं पूरितवति ।
समुन्मीलत्कालागरुबहलधूमप्रणयिनी,
स्तमस्तोमस्ताम्यन् विशति कवरीः पक्ष्मलदृशाम् ॥२०॥

अत्र त्रिदशतटिनीवीचिवद् व्यापकत्वमपि यशःपूरस्याभितमतो वीचितुलित इत्युक्तं न तु वीचिधवल इति । धवल इत्युक्ते धवलत्वसहचरितधर्मान्तरमपि प्रतीयत इति चेन्न । अति प्रसङ्गात् । यत्र शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यमहिम्नैवोपमाप्रतीतिस्तत्र वाच्या न कार्या पौनरुक्त्यप्रसङ्गात् । यथोदाहृतं प्राक् ।

हिरण्यकशिपुक्षेत्रदानदर्शितविस्मयः ।
न कस्य श्लाघनीयोऽसि नरसिंह जगत्पते ॥२१॥

---

हे कलिङ्गनाथ नरसिंह ! तव यशः गङ्गातरङ्गसदृशं दूराद् जगति पूर्णम् । अत एव धवलत्वे सति प्रविशत्यन्धकारसमूहः कालागरुबहलधूमे तत्सदृशेषु केशेषु मृगाक्षीणां सुन्दरीणाम् ।

अत्र त्रिदशतटिनीवीचिवत् व्यापकत्वमपि यशोऽभिमतम् । अतो वीचितुलितेन वीचिधवलत्वम् । धवल इत्युक्ते धवलत्वेन सहचरितधर्मान्तरं प्रतीयते । इति तु न कथनीयम् । अति प्रसङ्गात् । यत्र शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यमहत्त्वयैवोपमाप्रतीतिस्तत्र न वाच्या कार्या पुनरुक्ततायाः प्रसङ्गात् । प्रागेवोदाहृतम् ।

नरसिंह जगत्पते ! नरेश कस्य न प्रशंसनीयोऽस्ति । हिरण्यक्षेत्रदाने विस्मयो दर्शितः अर्थात् हिरण्यकशिपु शरीरखण्डनेन दर्शितविस्मयः नृसिंहभगवान् कस्य न श्लाघनीयः ।

---

हे कलिङ्गाधिपति नरसिंह ! दूर से ही गंगा जी के तरङ्ग के समान तुम्हारा यश समूह जगत में पूर्ण होने से मृगनयनी के केश में अन्धकार का समूह चलता हुआ उड़े हुए कालागरु के धुएं समान केशों में अन्धकार प्रवेश करता है ।

इसमें त्रिदशतटिनी विचिवत् व्यापकत्व भी यश की बृद्धि से अभिमत है । अतः वीचितुलित पर न वीचिधवलत्व है ! धवल कहने पर धवलत्व से सहचरित दूसरे धर्म की प्रतीति होती है । ऐसा कहना ठीक नहीं । अतिप्रसङ्गता कारण है ।

जहाँ शब्दशक्तिमूलानुरणनरुप व्यङ्ग्यकी महिमा से ही उपमा प्रतीत हो, वहाँ वाच्य नहीं कहना चाहिए । पौनरुक्त्य दोष वहाँ कारण है । इसका उदाहरण पहले ही कह दिया गया है । हे जगत्पति नरसिंह राजन् ! किसके प्रशंसा के पात्र तुम नहीं हो ? स्वर्ण क्षेत्र के विषयक दान में आश्चर्य देखा गया । अर्थात् हिरण्यकशिपु के शरीर के खण्डन से दर्शित विस्मय वाले नरसिंह भगवान् किसे प्रशंसनीय नहीं हैं ।

यद्युभयोः पर्यायात् स्यादुपमानोपमेयत्वम् ।
सन्निहितवाक्यभेदे सत्युपमेयोपमा द्विविधा ॥२२॥

अत्रोपमेयस्योपमानत्वकरणमुपमानान्तरनिरसनैकप्रयोजनम् । द्विविधा धर्मस्य वस्तुप्रतिवस्तुतया निर्देशे साधारण्ये चेति । क्रमेण यथा—

लोचनमधुकरमधुरं मधुकरलोचनमनोहरं भवतः ।
कमलमिवाननमाननमिव कमलं भाति वीरनरसिंह ॥२३॥

अत्रैकस्मिन् वाक्ये तावदाननमुपमेयम् । तत्र च लोचनं संभवति न मधुकरः । ततो लोचनं मधुकर इव लोचनमधुकरः । कमले तु लोचनासंभवाल्लोचनमिव मधुकरः लोचनमधुकरस्तेन मधुरमित्युपमासमासः ।

---

उपमानोपमेययोः उपमेयमुद्दीश्योपमानस्य विधानं यदि तत्रोपमेयोपमा द्विधा । इहोपमेयस्योपमानत्वं कर्तुमन्यतरस्योपमानस्य निरसनैकहेतुः । वस्तुप्रतिवस्तुतया निर्देशे साधारणतो धर्मस्य द्विविधोपमेयोपमा भवति । क्रमेणोदाहरणानि—हे वीर नरसिंह ! भवतो मुखं कमलमिव । मुखमिव कमलम् । नेत्रं मधुकर इव सुन्दरं मधुकरनेत्रमिव मनोहरम् ।

अत्रैकवाक्ये तु मुखमुपमेयम् । तत्र च नेत्रस्य मधुकरं भवितुं न संभवम् । तदनन्तरं नेत्रमधुकर इव । कमले तु नेत्रस्य संभावनया नेत्रमिव मधुकरनेत्रं मधुकर इव मधुरं नास्ति । अत्रोपमासमासः ।

---

उपमान, उपमेय दोनों में यदि उपमेय को उद्देश्य कर उपमान का विधान किया जाता है, वहाँ उपमेयोपमा दो प्रकार की होती है ।

यहाँ उपमेय को उपमान करना दूसरे उपमान का निरसन एक प्रयोजन है । दो धर्म के वस्तु प्रतिवस्तु भाव के निर्देश में साधारणतः यह उपमेयोपमा अलंकार दो प्रकार का होता है । क्रमशः उदाहरण—

हे वीर नरसिंह ! आप का कमल के समान मुख और मुख के समान कमल है । नेत्र मधुकर के समान मधुर तथा मधुकर नेत्र के समान सुन्दर है ।

यहाँ एक वाक्य में मुख उपमेय है और उसमें नेत्र का मधुकर होना संभावित नहीं है । इसके बाद लोचन मधुकर के समान है । कमल में तो नेत्र की संभावना न होने से लोचन के समान मधुकर लोचन मधुकर उससे मधुर नहीं है । इसमें उपमा समास है ।

---

This treatment of simile is based on the kāvya Prakāśa of Mammaṭa and not on the Alankārsarvaswa of Ruyyaka: who brushes aside these classifications as useless, because they fail to add anything to the beauty brought about by simile.

अपरत्र तु कमलमुपमेयम् । तत्र मधुकरः संभवति न तु लोचनम् । ततो मधुकरो लोचनमिव मधुकरलोचनम् । आनने तु मधुकरासंभवान्मधुकर इव लोचनं मधुकरलोचनं तेन मनोहरमित्यत्राप्युपमासमास एव । ततश्चार्थभेदादिह धर्मभेद इति चेन्न । भेदे सत्यभेद इत्येवंरूपातिशयोक्तिमहिम्ना भिन्नस्यापि धर्मस्यैकरूपताध्यवसायः । एकस्यैव धर्मस्य वारद्वयमुपादानं वस्तुप्रतिवस्तुभावः । द्विरुपादाने च निमित्तं सम्बन्धिभेदः । सम्बन्धिभेदश्च वाक्यभेदात् ।

---

अन्यत् कमलमुपमेयम् । तत्र मधुकरस्य संभावना नेत्रस्य न । तदा मधुकरनेत्रमिव मधुकरनेत्रं भवति । मुखे तु मधुकरस्यासंभावनया मधुकर इव नेत्रं मधुकरनेत्रं मनोहरं भवति । अत्राप्युपमासमास एव । तत्पश्चादर्थभेदेनेह धर्मभेदः । इति न कथनीयम् । भेदे सत्यभेदः । एवं रूपातिशयोक्तिमहिम्ना भिन्नधर्माणामेकरूपतायाः अध्यवसायः । एकधर्मस्य द्विवारमुपादानं वस्तुप्रतिवस्तुभावः । द्विरुपादाने च हेतुसम्बन्धिभेदः वाक्यभेदात् सम्बन्धिभेदश्च भवति ।

---

दूसरा तो कमल उपमेय है । वहाँ मधुकर संभावित है, लोचन नहीं । तब मधुकर लोचन के समान मधुकर लोचन है । मुख में तो मधुकर की संभावना न होने से मधुकर के समान नेत्र मधुकर लोचन उससे सुन्दर है । इसमें भी उपमा समास ही है । तत्पश्चात् अर्थ भेद से यहाँ धर्मभेद है । यह उचित नहीं । भेद होने पर अभेद है । इस प्रकार रूपातिशयोक्ति की महिमा से भिन्न धर्म की भी एकरूपता का अध्यावसाय है । एक धर्म का दो बार उपादान होना वस्तुप्रतिवस्तुभाव है । दो के उपादान में हेतु सम्बन्धी भेद होता है और सम्बन्ध भेद वाक्यभेद से होता है ।

---

These are the cases of expressed simile, simile can also be suggested particularly in cases of ( śabdaśaktimūldhwani ) because one of the functions of this suggestion is to suggest simile so that there is no scope for an expressed simile.

In this context though Vidyādhara provides an illustration of his own what he seeks to prove is the existence of suggested simile in cases like ( śabdaśaktimūldhwani ), simile is suggested by matter or simile is suggested by another figure of speech. In the case of this type of simile too he is in full agreement with Mammaṭa.

2 — Upameyopamā—This is a figure of speech of the simile family with the only difference that the standard of Comparison and the object Compared interchanged their position by turns i.e. the object of Comparison in the first simile becomes the standard

वीर नरसिंह विभाति क्षितिमण्डलभारभरणहेमाद्रे ।
मन्दाकिनीव भवतः कीर्तिर्मन्दाकिनी च कीर्तिरिव ।।२४।।

अत्र विमलत्वादिरूपः साधारणो धर्मः प्रतीयत एवेतिधर्मसाधारण्यम् ।।

अनुगतिरूपमङ्गानामेकस्मिन्नेव जायते वाक्ये ।
यद्येकस्य तदानीमन्वर्थोऽनन्वयः कथितः ।।२५।।

उपमाङ्गानामित्युपमानोपमेयोपमावाचकसाधारणधर्माणाम् । एकस्य तूपमानोपमेयत्वादिविरुद्धधर्मसम्बन्धः सदृशान्तरनिषेधध्वननाय । अत एवास्यान्यसम्बन्धवन्ध्यत्वादन्वर्थत्वम् । यथा—

प्रतिभटकान्ताकुचतटमकरी लुण्टाकचापटङ्कारः ।
वीर नृसिंह इवाजौ वीर नृसिंहश्चिरं जयति ।।२६।।

---

पृथ्वी मण्डलभारभरणसुमेरुः वीरनरसिंहः सुशोभितः । मन्दाकिनीव ते यशो विभाति । यशः इव मन्दाकिनी ।

अत्र स्वच्छतादिरूपः साधारणो धर्मः प्रतीयते यो धर्मः साधारणतयाख्यातः । अनन्वयालङ्कारो भवति यद्येकस्य तदेवान्यस्यान्वर्थो भवति ।

एवमेकस्मिन्अङ्गानामनुगतित्वमन्यमन्यस्मिन्नेव जायते, उपमाङ्गानामत्रोपमानोपमेयोपमाचकसधारणधर्माणाम् । एकस्य तूपमानोपमेयत्वादिविरुद्धधर्मसम्बन्धः सादृश्यान्तरनिषेधध्वननाय भवति । अत एवास्यान्यसम्बन्धवन्ध्यत्वादन्वर्थम् । यथा—

शत्रुवधूस्तनाग्रभागोपरि मकरी चित्रिता । चापध्वनिश्च जायते । वीर नृसिंह इव युद्धे वीरनृसिंहश्चिरं विजयते । अर्थात् सो नमस्यः ।

---

सुमेरु पृथ्वी मण्डल के भारभरण में वीर नरसिंह सुशोभित हैं । मन्दाकिनी के समान आपकी कीर्ति है और कीर्ति के समान मन्दाकिनी है ।

यहाँ स्वच्छतादिरूप साधारण धर्म प्रतीत होता है, जो साधारण धर्मता से युक्त है । जो एक का वही दूसरे का अन्वर्थ हो और एक में ही अङ्गों की अनुगति दूसरे में उत्पन्न हो, तो अनन्वयालंकार होता है ।

उपमा अङ्गों के ये उपमान, उपमेय, उपमावाचक साधारण धर्मों के होते हैं । एक का तो उपमानोपमेयत्वादि विरुद्ध धर्म का सम्बन्ध दूसरे के सादृश्य में निषेध ध्वनित करने के लिए होता है । इसलिए इसका दूसरे के साथ सम्बन्ध के कारण अन्वर्थ होता है । जैसे—शत्रु वधू के स्तन के अग्रभाग पर मकरी चित्रित है । धनुष की ध्वनि होती है । वीर नरसिंह के समान युद्ध में वीर नरसिंह बहुत दिन तक उत्कर्ष को प्राप्त हों । अर्थात् वे नमस्य हैं ।

---

of Comparison in the second simile, so that the object of Comparison in the first simile becomes the standard of Comparison in the second simile.

अत्रोपमेयस्योपमानत्वं क्रियमाणमुपमानमेव नास्त्यस्येति किमपि लोकोत्तरवस्तु व्यनक्ति ।।

सदृशं सदृशानुभवाद्यत्र स्मर्यत तत् स्मरणम् ।।२७।।

नेदमनुमानम् । सदृशमनुभूय सदृशमेव स्मर्यत इति नियमाभावात् । सदृशदर्शनेन विसदृशस्यापि स्मरणसंभवात् । यत्र तु सदृशं दृष्ट्वा सदृशमेव स्मर्यते तत्र स्मरणालङ्कारः । यथा—

त्वत्प्रत्यर्थी गिरिचरगजस्याङ्के दत्तदृष्टि,
स्तस्मिंस्तस्मिन् स्मरति मधुरं तत्तदङ्गं प्रियायाः ।
कुम्भाभोगे गुरुकुचतटं दन्तयोर्गण्डलक्ष्मी,
मूरूहस्ते गतिषु च गतिं श्रीनृसिंहक्षितीन्द्र ।।२८।।

---

अत्रोपमेयस्योपमानत्वं कर्तुमुपमान एव नास्ति । अस्यापि लोकोत्तरं रूपं वस्तु द्योत्यते । सदृशं वस्तु दृष्ट्वा सदृशं वस्तु यदा मनसि जागर्ति, तत्र स्मरणालङ्कारो भवति ।

अनुमानमिह नास्ति । सदृशमनुभूय सदृशमेव स्मरति । अत्र नियमाभावो हेतुः सदृशं वस्तु दृष्ट्वा भिन्नमेव स्मरणं संभवम् । यत्र सदृशं वस्तु दृष्ट्वा सदृशमेवानुभवति तत्र स्मरणालङ्कारोऽस्ति । यथा—हे पृथ्वीनाथ नरसिंह ! तव शत्रवः यदा पराजिताः ते वनं गताः । तत्र वन्यगजं दृष्ट्वा स्वप्रियायाः स्मरणं ते कृतवन्तः । गण्डस्थले महत् स्तनतटं स्मरन्ति । हस्तिदन्तं दृष्ट्वा स्वप्रियायाः कपोललक्ष्मीं स्मरन्ति । शुण्डादण्डं चावलोक्योरू स्मरन्ति ।

---

यहाँ उपमेय का उपमानत्व कर उपमान नहीं; इसमें भी कुछ लोकोत्तर वस्तु की व्यञ्जना है । जहाँ समान वस्तु अथवा व्यक्ति को देखकर समान वस्तु अथवा व्यक्ति की स्मृति जागृत हो वहाँ स्मरणालंकार है ।

यह अनुमान नहीं है । सदृश वस्तु का अनुभव कर सदृश का ही स्मरण करता है । इसमें नियमाभाव हेतु है । समान वस्तु देखने से असमान का स्मरण संभावित है । जहाँ सदृश वस्तु देखकर सदृश का ही स्मरण हो; वह स्मरणालंकार होता है । जैसे—

हे पृथ्वीपति नरसिंह ! तुम्हारे शत्रु गण जब तुमसे हार कर वन में चले गए । तब जंगली हाथी के ऊपर दृष्टि डाली तो प्रिया के उन उन सुन्दर अङ्गों का स्मरण करते रहे । गण्डस्थली में महान् कुच तट का स्मरण करते रहे । हाथी के दाँतों को देखकर अपनी प्रिया कपोल लक्ष्मी का स्मरण और शुण्डादण्ड को देखकर जंघे का स्मरण किया करते थे ।

अत्र कुम्भाभोगाद्यनुभवात् पीनस्तनतटादेः सदृशस्यैव स्मरणमुपनिबद्धम्। सादृश्येतरकारणाङ्कुरिता तु स्मृतिर्नास्यालङ्कारस्य गोचरः ॥

**अहो स रणदुन्दुभिः क्व नु गतं तदा तैर्बल,**
**महो स पुरविप्लवः क्व खलु सा कुरङ्गेक्षणा।**
**अहो तदपि दुर्दिनं क्व नु गतः कुमारो भवे,**
**दिति भ्रमति ते रिपुगिरिवनं कलिङ्गेश्वर ॥२९॥**

अत्राहो इति वागारम्भानुभावेन सूचिता सैन्यवियोगादिजनिता स्मृतिर्व्यभिचारिभाव एव ॥

**सम्प्रति कतिचिदभेदप्राधान्येऽलंकृतीर्ब्रूमः ॥३०॥**
**प्रथमं निरूपयामस्तत्राप्यारोपगर्भितास्तावत्।**
**तद्रूपकमारोपे यत्रापह्नूयते न तद्विषयः ॥३१॥**

---

इह कुम्भाभोगाद्यनुभवात् स्थूलस्तनाग्रभागस्य सदृशस्यैव स्मरणमुपनिबद्धम्। सादृश्यान्यतरकारणाङ्कुरिता तु स्मृतिर्नास्त्यलंकारस्यैव गोचरत्वम्।

हे उत्कल नरेश! ते शत्रुः पर्वतवने विचरत्येवम्। अरे स रणदुन्दुभिः कुत्र? तदा तैर्बलैः वलं क्व? अरे स पुरविप्लवः क्व। क्व हि सा मृगनयनी! अहो तदपिदुर्दिनम्। क्व खलु कुमारः?

इहाहो इति वचनस्यारम्भानुभावेन सूचिता सेनावियोगप्रादुर्भूता स्मृतिः व्यभिचारिभावस्य। अधुना कतिपयानलंकारान् कथयिष्यामः। यत्राभेदप्राधान्यम्। प्रथमे रूपकालंकारोऽस्ति यत्रारोपगर्भितः। आरोपोऽत्र नापह्नूयते। विषयस्य निगीर्णमानेऽपह्नुतिः।

---

यहाँ कुम्भाभोग आदि के अनुभव से स्थूल स्तन के अग्रभाग के सदृश का ही स्मरण से उपनिबद्धता है। दूसरी समानता का कारण अङ्कुरित नही है। यह तो इस अलंकार के स्मृति का गोचर नहीं है।

हे उत्कल नरेश! तुम्हारा शत्रु इस प्रकार पर्वत के वन में घूमता है। अरे वह रण, उसकी दुन्दुभी ध्वनि कहाँ? तब उस समय उन बलों द्वारा वल कहाँ गया? अरे वह पुरविप्लव है। निश्चित ही मृगनयनी कहाँ हैं? अरे तिसपर भी दुर्दिन है। निश्चय ही कहाँ कुमार हैं।

इसमें अहो वाणी के आरम्भ के अनुभाव से सूचित सेना सम्बन्धी वियोग आदि से उत्पन्न स्मृति व्यभिचारी भाव ही है।

अब कई अभेद प्रधानता वाले अलंकारों को कहते हैं। इसमें पहले रूपकालंकार है। जहाँ आरोप गर्भित हो आरोप जहाँ न छिपाया जाय। विषय छिपने पर अपह्नुति कहा जाता है।

For example, the face is like the moon and the moon is like the face. The object of the inter change of position between the object and the standard of Comparison is to suggest that both the moon and the face are not Comparable to any third object and thus their incomparability is sought to be proved.

The common quality between the object compared may either be stated in the same words or indifferent words to avoid repetition on this score, it can be divided into two classes. The example of the first has already been given, of the second type the example will be your eyes are as attractive as the bees and the bees are also as captivating as your eyes.

Here the words captivating and attracting have similar meaning which has been described into two sets of words to avoid repetition.

3–Ananvaya—Where the standard of comparison and the object compared are identical. it is figure of speech called (Ananvaya).

O King Narsingh ! You are like yourself while engaged in a (battle).

The object of so saying i. e. Comparing yourself to yourself is to indicate that you are unique and nothing in the world can stand Comparison with you. This, therefore, is a way of describing the uniqueness, of a person, or a thing or a place. When a person is Compared to himself, Comparison becomes meaningless; because Comparison essentially means two different objects; which Can by no means be identical. This type of Comparison is recognised only to denote that the person is in all manners parless.

4—(smaraṇam) When one object reminds other object owing to similarity; it is a case of this figure of speech, Indian scholars take recollection to be due to three causes.

1—Association 2. Similarity 3. Predestination due to (Karuṇe) forces of the Previous lives. Out of these, when a recollection

अत्राभेदप्राधान्याभिधानाद्वस्तुतोऽस्त्येव भेदः। अत एवोपमा प्रतीयते। भेदाभेदप्रयुक्तस्य साधर्म्यस्यैतां प्रतिप्रयोजकत्वात्। अभेदप्रयुक्तं साधर्म्यं रूपकं प्रतिप्रयोजकम्। विषयस्यापह्नूयमानत्वे त्वपह्नुतिरभिधास्यते। यदा तु विषयी विषयं रूपयति रूपवन्तं करोति तदान्वर्थाभिधानं रूपकम्। इदं तु निरवयवं सावयवं परम्परितं चेति प्रथमं त्रिधा। तत्राद्यं केवलं मालया चेति द्विधा। द्वितीयमपि समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विधा। तृतीयं तु श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधम्। तत्तु प्रत्येकं केवलं मालया चेति चतुर्विधम्। तदेवमिह भेदाष्टकमेवोटङ्कितम्। व्यस्तसमस्तत्वादिकथने वैचित्र्याभावात्। तत्रावयवतो निष्क्रान्तं निरवयव केवलं यथा।

---

अत्राभेदप्रधानतायाः अभिधानेन वस्तुतो भेद एवास्ति। अत एवोपमायाः प्रतीतिः। भेदाभेदप्रयुक्तसाधर्म्यं प्रतिप्रयोजनम्। अभेदप्रयुक्तसाधर्म्यं रूपकं प्रतिप्रयोजनम्। विषयस्य निगीर्णमानापह्नुतिः। यदा विषयी विषयं निरूपयति। तदा रूपवन्तमन्वर्थाभिधानं रूपकं, रूपकं निरवयवं सावयवं परम्परितं चेति त्रिधा। निरवयवं केवलं मालाभेदेन द्विधा। सावयवं तु समस्तवस्तु विषयमेकदेशविवर्ति चेति द्विधा। परम्परितं तु श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधं प्रत्येकं। केवलं मालाभेदेन चतुर्विधम्। इह भेदाष्टकम्। व्यस्तसमस्तरूपकत्वादिकथने वैचित्र्याभावकारणात्। तत्रावयवतो निष्क्रान्तं निरवयवं केवलं यथा।

---

इसमें अभेद की प्रधानता के अभिधान से वस्तुतः भेद होता ही है। इसलिए उपमा की प्रतीति होती है। भेद अभेद प्रयुक्त साधर्म्य इनके प्रति प्रयोजन है। विषय का छिपाना तो अपह्नुति अलंकार कहा जायगा। जब विषयी विषय का निरूपण करता है, तो ऐसे रूपवान् के उसके अन्वर्थ ही रूपकालंकार होगा। यह रूपक निरवयव, सावयव परम्परित भेद से तीन प्रकार का है। उसमें प्रथम निरवयव का केवल, मालारूपक दो भेद होगा। दूसरा सावयव भी समस्त वस्तु विषय एक देशविवर्ति दो प्रकार का होता है। वह प्रत्येक केवल एवं मालारूपक भेद से चार प्रकार का होता है। इस प्रकार उसका आठ भेद हुआ। व्यस्त समस्त आदि के कथन में विचित्रता के अभाव से वहाँ अवयव से निकला निरवयव केवल रूपक का उदाहरण है।

---

is due to one of these Causes and not to any other, then alone this figure of speech is possible; for where recollection is due to association it is a Case of ( smritisancāribhāva ) and not the (smaraṇam); figure of speech. For example; If the lotus reminds the person of some one's face, it will be a case of (smaraṇam)

हेमाद्रेः कन्दरायां रतिरमणरणाटोपविच्छिन्नहार
व्यस्तं मुक्ताफलानां तमसि तत इतः स्तोममन्वेषयन्त्याः।
कस्याश्चित् स्वस्तरुण्या निकटनिजप्राणनाथोपगीता
कीर्तिर्ज्योत्स्ना त्वदीया क्षणमकृत मुदं श्रीनृसिंह क्षितीन्द्र ॥३२॥

इदं निरवयवं केवलमेकवारमेव निरूपणात् ! निरवयवं मालया यथा।

कलानामालम्बः कुसुमविशिखस्य प्रतिकृतिः
क्षितेः क्षेमं लक्ष्म्याः शरणमरणिः क्षात्रमहसः।
विलासो भारत्याः सुकृतपरिपाकः प्रणयिनां,
खलूरी सौख्यानां जयति नरसिंहक्षितिपतिः ॥३३॥

इदं निरवयवं मालया। एकस्यानेकधा निरूपणात्। समस्तानि वस्तूनि विषयो यस्यति समस्तवस्तुविषयं सावयवं यथा—

---

हे पृथ्वीनाथ नरसिंह ! सुमेरुपर्वतस्य कन्दरायां रतिरमणरणे विन्यस्तहारमुक्ताफलानामन्धकारेऽन्वेषयन्त्याः कस्याः स्त्रियः निकटगतनिजपतिसहचरोपगीताकीर्तिज्र्योत्स्ना क्षणमकृतमुदाम्।

इदं निरवयवं केवलमेकवारमेव निरूपितम्। निरवयवं मालारूपकस्योदाहरणम्।

क्षमानाथ नरसिंह कलनामाधारः। अर्थात् चतुषष्ठिकलाभिज्ञः कामडेवानुरूपः। पृथिव्यै कल्याणकारिण्याः लक्ष्म्याः शरणम्। क्षात्रतेजसोऽणिः। सरस्वत्याः विलासः प्रणयिनां पुण्यफलम्। सौभाग्यनिकषा। एवं भूतो नरसिंह नरेशो विजयते।

इदं निरवयवं मालारूपकम्। एकस्यानेकवारं निरूपणम्। समस्तवस्तु विषयो यस्येति समस्तवस्तुविषयं सावयवम्। उदाहरणमिह—

---

हे क्षितिपति नरसिंह ! सुमेरु की कन्दरा में रति में रमण करनेवाली रण में टूटे हार से मोतियों के फलों को अन्धकार में अन्वेषण करती हुई किसी स्त्री के निकट अपने पति के साथ गाई जाती हुई तुम्हारी कीर्ति रूपी प्रकाश क्षण भर के लिए प्रसन्न कर दिया। यह निरवयव केवल एक ही वार निरूपित है। निरवयव माला रूपक का उदाहरण—पृथ्वीपति नरसिंह कलाओं के आधार हैं। अर्थात् ६४ कलाओं के ज्ञाता हैं। कामदेव के अनुरूप हैं। पृथ्वी के लिए कल्याणकारी लक्ष्मी की शरण हैं। क्षत्रीय सम्बन्धी तेज के अरणि रूप हैं। सरस्वती के विलास हैं। प्रणयी के पुष्पफल हैं। सौभाग्य की कसौटी हैं। इस प्रकार नरसिंह नरेश विजयी होते हैं।

यह निरवयव मालारूपक है। एक का अनेक बार निरूपण है। समस्तवस्तु विषय जिसका हो, ऐसा समस्त वस्तु विषय सावयवरूपक है। जैसे—

यत्र द्वीपस्तुषारक्षितिभृदुडुगणो मौक्तिकानां निकायः,
शैवालं व्योम शङ्खः कुमुदकुलगुरुर्धाम सान्ध्यं प्रवालः ।
यूथं दिक्कुञ्जराणां करिमकरकुलं किं च कृष्णः कृपाण—
स्त्वत्कीर्तिक्षीरवार्धिः स जयति श्रीनृसिंहक्षितीन्द्र ।।३४।।

इदं सावयवं । वार्ध्यवयवानामपि द्वीपादीनां रूपणात् । एकदेशेविशेषेण वर्तत इत्येकदेशविवर्ति सावयवं यत्रैकं रूपकं कृतं सदकृतमपि रूपकान्तरं सामर्थ्यादिगमयति यथा—

भुवः केलीतल्पं जयति नरसिंह क्षितिभुजो,
भुजः शौर्यक्रीडाडमरसमरारम्भलटहः ।
नवप्रयोलाभप्रमुदितसमस्ताम्बरचरी,
विकीर्णैर्मन्दारैर्विततमुपहारं भजति यः ।।३५।।

---

यत्र गजः तुषारपर्वतराजः । तारागणः मौक्तिकानां समूहः । शैवालाकाश-शङ्खकुमुदकुलगुरुर्धाम सान्ध्यं प्रवालः । दिग्गजाः करिमकराः किं च : कृष्णः खड्गः सर्वे च हे श्रीनरसिंह पृथ्वीनाथ ! ते यशांसि, क्षीरसागर इव । स सर्गेत्कृष्टः । सावयवमिदम् । वार्ध्यवयवानामपि हस्तीनां निरूपणकारणात् । एकदेशविवर्तिसावयवं रूपकं कथ्यते, यत्रैकरूपकं न भवन्नपि रूपकेतरं सामर्थ्यबलेनावगम्यते । उदाहरण-मत्र ।

नरसिंहराज्ञः बाहुः पृथ्वीविलासशय्यां विजयते । बाहुः पराक्रमस्य क्रीडाऽम्बरे रणारम्भे विलासदोऽस्ति । एतादृशो बाहुः नूतनप्रेयोलाभेनाकाशे प्रमुदितैः सर्वैः खगैः विकीर्णैर्मन्दारपुष्पैः विस्तृतमुपहारं प्राप्नोति ।

---

जहाँ गज तुषारपर्वतराज समान है । तारागण मोतियों का समूह । शेवार, आकाश, शंख, कुमुदों का समूह, गुरुधाम सन्ध्या मूंगा है । दिग्गजों का समूह हाथी, घड़ियाल का समूह है । और क्या ? तलवार काली है । नरसिंह नरेश ! तुम्हारा यश क्षीर सागर है । ऐसे वह नरसिंह संसार में विजयी होते हैं । अर्थात् सर्वोत्कृष्ट हैं ।

यह सावयव है । वार्धि अवयव के भी हाथियों के निरूपण का कारण है । एकदेशविवर्ति सावयव रूपक कहते हैं । जहाँ एक रूपक हुआ; ऐसा न होता हुआ भी दूसरा रूपक सामर्थ्यबल से जाना जाता है । उदाहरण—

नरसिंह राजा की पृथ्वी विलासशय्या को जीतती है और भुजा पराक्रम की क्रीडारूपी आडम्बर जो है, उस रण के आरम्भ में विलास देनेवाली हैं, ऐसी भुजा नवीन प्रेमीजनों के लाभ से प्रमुदित आकाश में घूमनेवाली पक्षियों से बिखेरे गये मन्दार पुष्प से विस्तृत उपहार को प्राप्त करती हैं ।

इह दोष्णः केलीतल्पत्वेन रूपणाद्भुवो नायिकात्वेन रूपणं गम्यते। परम्परा जातास्येति परम्परितं श्लिष्टशब्दनिबन्धनं केवलं यथा।

किं वर्ण्यसे वीरकलिङ्ग भूप, विलासिनीमानसराजहंस।
भवन्ति यत्कान्तिसुधापयोधेः, पयो मनुष्या नलकूबराद्याः ॥३६॥

अत्र वीरनरसिंहभूपस्य राजहंसत्वेन रूपणं मनसः सरस्त्वेन रूपणं प्रतिनिमितम्। तच्च मानसमेव मानसमिति श्लिष्टेनैव शब्देन कृतमिति श्लिष्टशब्दनिबन्धनं परम्परितमिदम्। केवलमेकवारमेव रूपणात्।

अत्र बाहोः केलीतल्पत्वेन पृथिव्याः नायिकात्वेन निरूपणं गम्यते। परम्पराजातास्येतिपरम्परितं श्लिष्टशब्दनिबन्धनं केवलरूपकं यथा–वीर कलिङ्गनरेश! राजहंसः विलासिनीमानससरोवरे, तस्य किं वर्णनीयम्। क्षीरः कान्तिसुधासागरस्य। जलं मनुष्या नलकूबराद्याः॥

इह वीर नरसिंह नृपतेः राजहंसत्वेन निरूपणं मनसः सरोवरत्वेन निरूपणं प्रति निमित्तम्। तच्च मानसमेव मानसमिति श्लिष्टेनैव शब्देन कृतमिति श्लिष्ट-शब्दनिबन्धनं परम्परितम्। केवलमेकवारमेव निरूपणात्।

---

इसमें भुजा के केलीतल्पत्व से पृथ्वी की नायिका रूप से निरूपण जाना जाता है। परम्परा जात होने से परम्परित श्लिष्ट शब्द निबन्धन केवल रूपक का उदाहरण है। जैसे––वीर कलिङ्गनरेश जो विलासिनी के मानस सरोवर में राजहंस हैं; उनका क्या वर्णन किया जाय? जो कान्तिरूपी सुधासागर है। उसके जो मनुष्य नलकूबर आदि हैं, उसके जल रूप हैं।

इसमें वीर नरसिंह राजा राजहंस रूप निरूपित हैं। मानसरोवर रूप से कहा गया और मानस सरोवर में श्लेष से ही शब्द श्लेष है। इस शब्द श्लेष निबन्धन रूप से परम्परित है। केवल एक बार निरूपण है।

---

figure of speech, Because a face might be similar with lotus flower; but if a token or something else like a handkerchief reminds one of his beloved, it will not be a case of this figure of speech, because the handkerchief bears no similarity to a beloved person. Vidyādhara has the credit of selecting the most appealing standa rds of comparison causing recollection.

5–Metaphor–It is a figure of speech based on identity. Hyperbole, (utprekṣā)etc. also imply identity but metaphor is distintly a superimposition of one upon the other as the means to identity, where as hyperbole and other figures do not attain that nature one case of superimposition arises, when we say (this is not a face, but the moon itself). Here the moon has been superimposed on the face by means of negation.

This we call (Apanhuti) figure of concealment and not metaphor. Because the moon has been superimposed on the face without negation in (this face Is moon itself), It will be a case of metaphor. Metaphor can be divided into nonorganic, Organic and interdependent Nonorganic can be further subdivided into case of single superimposition, a group of superimpositions, noninterdependent. Organic superimposition may be of two types. 1—Where all the parts of standard of comparison have been superimposed on all the parts of the objəct Compared. 2—The other typc in this class is possible when all the parts are superimposed though there too the superimposition is implied 3—The third class is further subdivided into cases of one superimposition causing the other, either with a double meaning or without a double meaning and each one of these is again subdivided into cases of only one pair of causative and caused superimpositions or a group of such pairs of suprimpositions. Thus the total number of subdivisions amounts to eight,

In all these cases comparison through nonverbal is always implied. Here Vidyādhara has followed the tradition of his predecessors like Mammaṭa and Ruyyaka and not of Sobhākar who accepts metaphor even in cases where the effect has been superimposed on the cause.

श्लिष्टशब्दनिबन्धनं परम्परितं मालया यथा—

रविः पद्मोल्लासे कुवलयविकासे हिमकरः,
क्षमाभृत् पक्षालीदलनपरिहासे हरिहयः ।
अशाम्यद्दानाम्भः प्रसरणविलासे करिपतिर्न,
केषामासेव्यः स भवति कलिङ्गेश्वरः भवान् ॥३७॥

अत्र राज्ञो रवित्वादिरूपणं पद्मायाः उल्लास एव पद्मस्योल्लास इत्यादिरूपण-कारणम् । अश्लिष्टशब्दनिबन्धनं परम्परितकेवलं यथा—

वीर नरसिंह भूप प्रतिभट विषधरगुरुत्मता भवता,
एष कमलासहायश्चित्रं हृदयेन धार्यते भगवान् ॥३८॥

---

श्लिष्टशब्दनिबन्धनं परम्परितं मालारूपकं यथा ।

कमलोल्लासने सूर्यः कुवलयविकासे हिमकरः राजा शत्रून् विनाशयति । परिहासे च हरिहयः । अर्थात् लक्ष्म्युल्लासे सूर्यः । दाने करिपतिः यः सदा मदं श्रवति । सः कलिङ्गाधिपतिः केषां नासेव्यः । सर्वैरपि सः सेवनीयः । एतादृशः कलिङ्गाधिपतिः भवति ।

अत्र राजा रव्यादिना निरूपितः । कमललक्ष्मीविलासे कारणम् । अश्लिष्ट शब्द-निबन्धनं परम्परितं केवलं रूपकम् । उदाहरणं यथा—

हे वीर नरसिंह नरेश ! भवान् गरुडः सर्वशत्रून् भक्षयति विनाशयति च । एषः लक्ष्मीसहायः । विचित्रमिति । हृदयेन धार्यते भगवान् ।

---

श्लिष्टशब्दनिबन्धन परम्परित मालारूपक का उदाहरण—

सूर्य से कमल खिलता हैं । सफेद कमलिनी के विकास में चन्द्रमा कारण है । राजा शत्रुओं का विनाश करते हैं । परिहास में सूर्य के घोड़े रूपी, अर्थात् लक्ष्मी के उल्लास में सूर्य रूप हैं । दान नीर में करिपति रूप सदा मद बहाते हैं । वह कलिङ्ग नरेश किसके द्वारा सेवनीय नहीं है । अर्थात् सभी के द्वारा सेवन करने योग्य हैं । ऐसे कलिङ्ग नरेश हैं । यहाँ राजा को रवि आदि निरूपित किया गया है । जो कमल अथवा लक्ष्मी के उल्लास में कारण है । इस प्रकार निरूपण में कारण है । अश्लिष्ट शब्द का निबन्धन परम्परित केवल रूपक जैसे—

हे वीर नरसिंह नरेश ! आप जैसे गरुड़ द्वारा शत्रु रूपी सर्प खा लिए जाते हैं । यह लक्ष्मी (ऐश्वर्य) सहित है । विचित्रता है, जिसे भगवान् हृदय में धारण करते हैं ।

अत्र वीरनरसिंहस्य गरुत्मत्वरूपणहेतुकं प्रतिभटानां विषधरत्वरूपणमित्यश्लिष्टशब्दनिबन्धनमिदं केवलं सकृदेव निरूपणात् । अश्लिष्टशब्दनिबन्धनं मालया यथा—

यशस्त्रिदशवाहिनीहिमगिरिः प्रतापातप,
प्रथाप्रथमभूधरः प्रतिबलाब्धिमन्थाचलः ।
पराक्रममहामदद्विरदकेलि विन्ध्याश्चिरं,
गुणौघमणिरोहणो विजयते कलिङ्गेश्वरः ॥२९॥

इदमश्लिष्टशब्दनिबन्धनं मालया । अनेकशो रूपणात् । इदं तु वैधर्म्येणापि संभवति ॥ त्यागस्तावत् सुरतरुयश इत्यादि ॥ यत्र व्यस्तं रूपकं तत्र न विप्रतिपद्यामहे । यत्र समस्तं तत्रोपमारूपकयोः साधकबाधकप्रमाणसद्भाव एवान्यतरनिश्चयकारणम् । तत्रोपमायाः परिग्रहे साधकं यथा –

शरासनमिदं नमत्तव विलोक्य लोकोत्तरं,
पिनाकमिव दानवास्तुहिनरश्मिचूडामणेः ।
अमी रिपुमहीभृतो युधि कलिङ्गपृथ्वीपते,
सरत्नविरुदाङ्गदं तव नमन्ति पादाम्बुजम् ॥३०॥

---

अत्र वीर नरसिंहस्य गरुडत्वेन निरूपणेन शत्रुसर्परूपत्वमश्लिष्टशब्दनिबन्धनम् । इदं केवलं सकृदेव निरूपणात् । अश्लिष्टशब्दनिबन्धनं मालारूपकं यथा—

कलिङ्गाधिपतिः विजयते । यशः गङ्गायाः उत्पत्तिस्थानं हिमालय इव । पराक्रमसूर्यः प्रथमे सुमेरुः । सेना समुद्रमन्दराचल इव । पराक्रममहामदकरिक्रीडायां विन्ध्यक्षेत्रम् । चिरं गुणसमूहमणिजायमाने समर्थः ।

इहाश्लिष्टशब्दनिबन्धनं मालारूपकम् । अनेकप्रकारेण वर्णनात् । इदं वैधर्म्यभावेनापि संभवति । त्यागस्तावत् सुरतरुयश इत्यादि ।

यत्र रूपकं व्यस्तं तत्र नहि काचित् विप्रतिपत्तिः । यत्र रूपकं समस्तं तत्रोपमारूपकयोः साधकबाधकप्रमाणसद्भाव एवापरतरनिश्चयकारणम् । तत्रोपमायाः ग्रहणे साधकं यथा ।

शिवस्य लोकोत्तरं धनुरिव नरसिंहस्य शरासनमिदम् । दानवास्तव धनुः दृष्ट्वा नमन्ति । हे कलिङ्गाधिपते । युद्धेऽमी शत्रवः राजानः तव कमलचरणं रत्नविरुदाङ्गदसहितेन नमन्ति ।

---

इसमें वीर नरसिंह के गरुड़ होने के निरूपण से शत्रुओं के सर्वस्वरूपता अश्लिष्टशब्द निबन्धन है । यह केवल एक बार निरूपित है । अश्लिष्टशब्दनिबन्धनमालारूपक का उदाहरण—

इह रत्नविरुदाङ्गदसम्बन्धः पादे संभवतीत्युपमां प्रत्युनुगुणतां भजते । अम्बुजे तु न संभवतीति न रूपकं प्रत्यनुगुणता । बाधकं यथा ।

**शोषिताशेषदुर्वारवैरिस्त्रीजनमानसः ।**
**नृसिंह भूपते भाति प्रतापतपनस्तव ॥४१॥**

अत्र शोषिताशेषदुर्वारवैरिस्त्रीजनमानसत्वलक्षणसाधारणधर्मोपादानमेव प्रतापस्तपन इवेत्युपमायाः शङ्कामपाकरोति । "उपमितं व्याघ्रादिभिः" इत्यादिना सूत्रेण सामान्याप्रयोग एव तस्याः प्रादुर्भावात् । रूपकपरिग्रहे साधकं यथा—

**यस्यानिशं दिविषदश्चरणारविन्द, मुत्तंसयन्त्यमितभक्तिभरावनम्राः ।**
**देवः सुधाकरकिशोरकचारुचूडः, स श्रेयसेऽस्तु भवतो नरसिंह देव ॥४२**

अत्रोत्तंसनमरविन्देन क्रियते न पुनश्चरणेनेति रूपकपरिग्रहे उत्तंसनमेव साधकं प्रमाणम् ।

---

अत्र विरुदाङ्गदसम्बन्धः पादे संभवतीत्युपमां प्रत्यनुगुणतां भजति । अम्बुजे तु न संभावना भवतीति रूपकं प्रत्यनुगुणत्वमस्ति । बाधकप्रमाणं दर्शनीयम् ।

हे नरसिंह नरेश ! ते पराक्रमसूर्यः सुशोभितः । पराक्रमो दुर्वारशत्रूणां स्त्रीणां मानसं पूर्णरूपेण शोभितवान् । इह शोषिताशेषदुर्वारवैरिस्त्रीजनमानसत्वलक्षणसाधारणधर्मोपादानमेव पराक्रमसूर्य इवेत्युपमायाः शङ्कां दूरीकरोति । (उपमितं व्याघ्रादिभिः) इत्यादिना सूत्रेण सामान्याप्रयोग एव तस्याः उपमायाः उत्पत्तिहेतुत्वात् । रूपकग्रहणे साधकप्रमाणं दर्शनीयम् । यस्य चरणं कमलं निरन्तरं वन्दितम् । अत्यन्तभक्तिभावपूर्णविनम्राः प्रार्थयन्ति देवाः । बालचन्द्रः यस्य मस्तके सुशोभितः । एतादृशः स शिवः हे नरसिंह देव ! भवतः कल्याणाय भवतु । इहोत्तंसनमरविन्देन क्रियते न पुनश्चरणेन । रूपकग्रहणे उत्तंसनमेव साधकं प्रमाणम् ।

---

कलिङ्गाधिपति की विजय हो । यशरूपी गङ्गा के उत्पत्ति स्थान हिमालय के समान हैं । पराक्रम का सूर्य प्रथम सुमेरू रूप है । सेना समुद्र मन्दराचल है । पराक्रम महामद हाथी की क्रीड़ा में है । जो विन्ध्य क्षेत्र है । चिरकाल तक गुणों के समूह मणि उत्पन्न करने में समर्थ हैं ।

यह अश्लिष्ट शब्द निबन्धन माला रूपक है । अनेक प्रकार वर्णित हैं । यह वैधर्म्य भाव सेभी संभव है । ( त्यागस्तावत् सुरतरुयश ) इत्यादि ।

जहाँ व्यस्तरूपक है, वहाँ विप्रतिपत्ति नहीं है । जहाँ समस्त रूपक है, वहाँ उपमा एवं रूपक दोनों के साधक बाधक प्रमाण सद्भाव ही किसी एक के निश्चय करने में कारण होता है । वहाँ उपमा के ग्रहण में साधक का सद्भाव जैसे—शिवजी के लोकोत्तर पिनाक के समान नरसिंह का यह शरासन है । दानब इसे देखकर नमन करते हैं । हे कलिंगाधिपति ! युद्ध में ये शत्रु राजा तुम्हारे कमल चरणों में रत्न विरुदाङ्गद सहित नमन करते हैं ।

यथा वा—

**तल्पेषु कल्पद्रुमपल्लवानां, निषेदुषीभिः सुरसुन्दरीभिः ।**
**त्वत्कीर्तयो वीर कलिङ्गनाथ, मनःकुरङ्गं रजयन्ति गीताः ॥४३॥**

इह रञ्जेरनुषङ्गलोप एव रूपकं प्रत्यनुकूलतामालम्बते न तूपमाँ प्रति । तस्यैतां प्रति प्रतिकूलत्वात् । यदाह दुर्गसिंहः । रञ्जेर्मृगरमण इत्यनुषङ्गलोपः । यत्र पुनरन्यतरपरिग्रहे साधकबाधकप्रमाणविरहस्तत्र सन्देहसंकरः । यत्रारोपविषयं विनैव रूपणं क्रियते तत्र दोष एव यथा—

**एतत्तत् समरस्थलं कलयत् श्लाघ्यं कलिङ्गेशितुः,**
**सैन्यैर्यत्र पुनश्च पाण्डवचमू सरम्भसंभावनाः ।**
**दिक्कान्ताकुचकुम्भकेलिपुलकैर्वाणैः कृपाणैरपि,**
**कीडाकृष्टकरालकालरजनीचक्रैश्चिरं चक्रिरे ॥४४॥**

इहं कुचकुम्भविषयो नोपात्तः ।

यत्र त्वारोप्यमाणस्य विषयिण एकत्वेऽपि बहुत्वं तत्र न दोषः । विषयेषु प्रत्येकमारोपात् । यथा मुखेन्दव इति ॥

---

अथवान्यदुदाहरणम्

कल्पवृक्षपल्लवानां शय्यासु स्थिताभिः देवाङ्गनाभिः हे वीर कलिङ्गाधिपते ! तव कीर्तयो गीताः । गीताश्च चञ्चलहरिणमानसं मोदयन्ति ।

(रञ्जयन्तीतीह रञ्जेरनुषङ्गलोप एव रूपकं प्रत्यानुकूल्यं भजते, न तूपमां प्रति; अनुषंगलोप उपमांप्रति प्रातिकूल्यहेतुत्वात् । दुर्गसिंह आह—रञ्जेः मृगरमणः, अनेन वचनेनात्रानुनासिकलोपः । यत्र पुनरन्यतरस्य ग्रहणे साधकबाधकप्रमाणहीनत्वं तत्र सन्देहसंकरो भवति । यत्रारोपविषयं विना निरूपणं क्रियते तत्र दोष एव । उदाहरणम् ।

इदं तद् रणक्षेत्रम् । कलिङ्गनरेशस्य क्रीडा प्रशंसनीया । सेनाभिः यत्र पुनः पाण्डवचमूपराक्रमपूर्णयुद्धस्य संभावना व्यक्ता । अस्याः संभावनायाः हेतवः दिशावधूनां स्तनकुम्भक्रीडायां पुलकः प्रलंयकरवाणानां तथा खड्गानामपि क्रीडा ।

अत्र स्तनकुम्भविषयो न कथितः । यत्रारोप्यमाणविषयिणः एकत्वेऽपि बहुत्वं तत्र न दोषः । विषयेषु प्रत्येकमारोपणात् । यथा मुखेन्दव इति ।

---

इसमें रत्न विरुदाङ्गद का सम्बन्ध पाद में संभव है। इसलिए उपमा की अनुगुणता होती है । अम्बुज में तो इसकी (रत्नविरुदाङ्गद सम्बन्ध) की सम्भावना नहीं होती है। इस प्रकार रूपक के प्रति अनुगुणता नहीं है । बाधक प्रमाण देखें ।

हे नरसिंह नरेश ! तुम्हारा पराक्रम सूर्य सुशोभित है । इस पराक्रम ने दुर्वार शत्रुओं की स्त्री समुदाय के मानस को पूर्ण रूप से शोषित कर लिया है ।

**तं परिणामं द्विविधं कथयन्त्यारोप्ययाणरूपतया ।**
**परिणमति यत्र विषयः प्रस्तुतकार्योपयोगाय ॥४५॥**

एष न रूपकम् । आरोप्यमाणस्य प्रकृतोपरञ्जकत्वे रूपकस्य जागरूकत्वात् । यत्रारोपविषयः प्रकृतकार्यसिद्ध्यर्थमारोप्यमाणात्मतया परिणमति तत्र यथार्थाभिधानः परिणामः । समानाधिकरण्यवैयधिकरण्याभ्यां भवन्न द्वैविध्यमतिक्रामति । यथा—

**अमरनगरी सौधोत्सङ्गाधिरोहमहोत्सवव्यतिकरधुरा-**
**धौरेयाणामरातिमहीभुजाम् ।**
**मरकतमयीनिश्रेणिस्त्वत् कृपाणलता कवीन्,**
**कति न कुरुते श्लाघाव्यग्रान् कलिङ्गपुरन्दर ॥४६॥**

अत्रारोप्यमाणनिश्रेणिरूपतया परिणमन्तीकृपाणलताप्रकृतममरनगारीसौधोत्सङ्गाधिरोहणं कार्यं प्रत्युपयोगितां भजते ।

---

यत्रारोपविषयप्रकृतकार्यसिद्धययारोप्यमाणात्मत्वं कारणं परिणमति । तत्र परिणामालंकारः, परिणामालंकरो द्विविधः । रूपकं नेदम् । आरोप्यमाणस्य प्रकृतोपररञ्जकत्वे रूपकस्य जागरूकत्वं कारणम् । यत्रारोपविषयः प्रकृतकार्यसिद्धयारोप्यमाणस्यात्मत्वेन परिणमति तत्रार्थस्याभिधाने परिणामालंकारोऽस्ति । समानाधिकरण्यवैयधिकरण्यभेदाभ्यां द्वैविध्यमतिक्रामति न । उदाहरणमिह—

हे कलिङ्गपुरन्दर ! देवपुरीभवनक्रोडे महोत्सवे विघ्नस्वरूपा, श्रेष्ठशत्रुनरेशाणां मरकतमणिभिर्युक्ता त्वत्खड्गधारा कवीनां कुलं न व्याकुलयति ।

अत्रारोप्यमाणनिःश्रेणिरूपतया परिणमन्तीखड्गलता प्रकृतरूपा । अमरनगरी सौधोत्सङ्गाधिरोहणं कार्यं प्रत्युपयोगित्वम् ।

---

यहाँ शोषिताशेषदुर्वारवैरिस्त्रीजनमानसत्वलक्षणसाधारणधर्म का उपादान ही पराक्रम के सूर्य के समान होना इस उपमा की शंका का निवारण करता है ।

व्याघ्रादि से उपमित होना पदों को देखें । ( उपमितं व्याघ्रादिभिः ) इस सूत्र से सामान्य का प्रयोग नहीं होना ही उसके प्रादुर्भाव में हेतु है । रूपक परिग्रह में साधक रूपक उदाहरण देखें ।

जिसका चरण कमल निरन्तर वन्दित है । अत्यन्त भक्ति से पूर्ण विनम्र होकर जिसे देवता प्रार्थना करते हैं । बालरूप चन्द्रमा जिसके मस्तक पर शोभित है, ऐसे शिव आपके कल्याण के लिए हों । हे नरसिंह देव ! आप को वह शिव कल्याणकारी हों । इसमें 'उत्तंसनम्' अरविन्द से किया जाता है, न कि चरण से । रूपक परिग्रह में 'उत्तंसनम्' ही साधक प्रमाण है ।

अथवा दूसरा उदाहरण—

कल्प वृक्ष के पल्लवों की शय्या पर बैठी हुई देवों की स्त्रियों द्वारा हे वीर कलिङ्गाधिपति ! आप की कीर्ति गायी जाती है। जो गीत चञ्चलमृगरूपी मन को प्रसन्न कर रहे हैं।

इसमें 'रञ्ज' के अनुषंगलोप से ही रूपक के प्रति अनुकूलता है। उपमा के प्रति अनुकूलता नहीं है। अनुषंगलोप उपमा प्रतिकूलता में निमित्त है। दुर्ग ने कहा है—'रञ्जेर्मृगरमणः' इसके अनुसार यहाँ अनुनासिक का लोप है। जहाँ पुनः किसी एक के परिग्रह में साधक-बाधक प्रमाणहीनता हो वहाँ सन्देह संकर होता है। जहाँ आरोप विषय के विना ही निरूपण किया जाता है वहाँ दोष ही है। जैसे यह वह रण क्षेत्र है। कलिङ्ग नरेश की क्रीडा प्रशंसनीय है, और सेनाओं द्वारा जहाँ फिर से पाण्डवों की सेना के पराक्रम पूर्ण युद्ध की संभावना व्यक्त होती है। संभावना हेतु है। दिशा वधू के स्तन कुम्भ क्रीडा, पुलक प्रलयंकर वाणों की तथा तलवारों की भी क्रीडा कठिन काल रात्रि चक्रों से अत्यन्त आकृष्ट है।

इसमें कुचकुम्भ विषय नहीं कहा गया। आरोप्यमाण विषयी के एक समान होने पर भी बहुत्व जहाँ हो, वहाँ दोष नहीं है। विषयों में प्रत्येक पर आरोपण होता है। जैसे मुखेन्दव में जहाँ आरोप विषय प्रकृत कार्य सिद्धि हेतु आरोप्यमाणात्मत्व के कारण परिणत होता है, वहाँ परिणाम अलंकार होता है। परिणाम अलंकार दो प्रकार का होता है। यह रूपक नहीं है। आरोप्यमाण के प्रकृतोपरञ्जकत्व में रूपक की जागरूकता कारण है। जहाँ आरोप विषय है। प्रकृत कार्य सिद्धि के लिए आरोप्यमाण के आत्मत्व से परिणत होता है, वहाँ अर्थ का अभिधान परिणाम अलंकार है। समानाधिकरण्य वैयधिकरण्य दो होने के कारण दो से अधिक नहीं होता है। जैसे—हे कलिङ्गेन्द्र ! देवपुरी के भवन के गोद में हुए महोत्सव में विघ्नस्वरूप श्रेष्ठ शत्रु नरेशों के मरकतमणियों से युक्त तुमसे तलवार की धार कितने कवियों को प्रशंसा करने से व्याकुल नहीं बना देती हैं।

यहाँ आरोप्यमाण निःश्रेणिरूपता से परिणत होती हुई कृपाणलता प्रकृत है। 'अमरनगरी सौधोत्सङ्गाधिरोहण' कार्य के प्रति उपयोगिता है।

---

6—Pariṇāma—This is just like the metaphor, with the only difference that the standard of comparison apart from superimposition of its very special qualities and actions on the object of comparison shares some of its qualities and actions thereby proving its helpfulness to the justification of the independent position of the object of comparison. For example, "Your sword has

**राजन् नृसिंह भवतः समरोत्सवेषु, धूलिभिरन्धतमसं ग्पदि व्यधायि ।**
**निशिंत्रशकृत्तशिरसामरत्वभाजां स्वर्गाङ्गनासुरतकेलिषु शात्रवाणाम् ।।४७।।**

अत्रारोप्यमाणान्धतमसरूपतया परिणतानां धूलीनां प्रस्तुतसुरतोपयोगित्वम् ।

**किसलयति कविः प्रतिभावशतः प्रकृतार्थभित्तिकं यत्र ।**
**संशयमप्रकृतेऽर्थे सन्देहोऽयं समाख्यातः ।।४८।।**

यत्र सादृश्यदर्शनात् स्वप्रतिभावशेन वर्णनार्थं कविः सन्देहमुपनिबध्नाति तत्र प्रकृतस्य संदिह्यमानत्वादन्वर्थोऽयमलङ्कारः । न तु स्थाणुर्वा स्यात् पुरुषो वा स्यादितिवत् स्वरसप्रवृत्ते सन्देहे इत्याशयेनाभिहितं प्रतिभावशतः इति । यथा—

---

निःशस्त्रशिरखण्डितेऽमरत्वं प्राप्नुवन्तः शत्रवः स्वर्गवधूनां कामक्रीडायां व्यस्ताः हि नरसिंह नरेश ! भवतो युद्धोत्सवे धूलिभिरन्धकारत्वं कृतं शीघ्रम् ।

अत्रारोप्यमाणान्धतमसरूपतया परिणतानां धूलीनां प्रस्तुत सुरतोपयोगित्वम् । यत्र कविप्रतिभावशात् सादृश्यं दर्शनकारणेन सन्देहं करोति तत्र प्रकृतस्य सन्देहमानत्वेन सन्देहालङ्कारो भवति । यत्र सादृश्यदर्शनेन स्वं प्रतिभावशात् वर्णनाय कविः सन्देहं करोति तत्र प्रकृतस्य सन्दिह्यमानत्वादन्वर्थनामायमलङ्कारः सन्देहः । स्थाणुर्वा पुरुषो वा । अयं सन्देहः स्वरसप्रवृत्ते इत्याशयेन प्रतिभावशादभिहितः । उदाहरणमत्र—

---

निःशस्त्र शिर के काटे जाने पर अमरत्व स्वर्ग को प्राप्त कर भोग करनेवाले शत्रु के स्वर्ग वधूओं की काम क्रीड़ा में व्यस्त हे नरसिंह नरेश ! आपके युद्ध उत्सवों में धूलि से शीघ्र ही अन्धत्व तम बना दिया गया है ।

यहाँ आरोप्यमाण अन्धतारूप से परिणत धूलि का प्रस्तुत सुरत काम क्रीड़ा की उपयोगिता है । जहाँ कवि प्रतिभावशात् सादृश्य देखने के कारण सन्देह करता है, वहाँ प्रकृत के सन्देहमानत्व के कारण सन्देह अलंकार होता है । जहाँ सादृश्य देखने से अपनी प्रतिभा से वर्णन के लिए कवि सन्देह करता है । वहाँ प्रकृत को सन्देह करते हुए अन्वर्थक यह सन्देह अलंकार है । यह स्थाणु है अथवा पुरुष है ? इस प्रकार सन्देह है । स्वरस प्रकृत सन्देह होने पर इस प्रकार के आशय से प्रतिभावशात् ऐसा कहा गया है । जैसे—

---

taken the form of a stair case with the help of which your enemies can walk upto heavens."

Here the stair case has been superimposed on the sword and shares its actions or helping the enemies to get the height of heavens.

**कान्तः किं कैरविण्याः कलयति कमलोल्लासने नैष शक्ति,**
**नाथः किं वासराणामुदयति कुमुदे नैष लक्ष्मीं वितन्वन् ।**
**किं कृष्णो न द्विजानामधरयति पतिं भूयसोक्तेन किं वा,**
**ज्ञातः पश्चान्नृसिंह क्षितितलतिलक त्वं विचित्रैश्चरित्रैः ।।४९।।**

अत्र चन्द्रादिरूपतया संदिह्य ज्ञातस्त्वमिति निश्चयः कृत इति निश्चयान्तः सन्देहः । किं चैष निश्चयसाधककमलोल्लासनादिपदद्योतनीयव्यावर्तकांशगतश्लेषमूलाभेदाध्यवसायरूपातिशयोक्त्यनुप्राणीतोऽत्र वर्तत इत्यनयोरङ्गाङ्गिभावेन संकरः । भूयसोक्तेन किं वेति वाक्याभिहितेनाक्षेपालङ्कारेण सह संसृष्टिरपि तेन चाक्षेपालङ्कारेण निर्दिष्टेष्वन्येषु वा त्रिदशेष्वपि कोऽपि न तेऽस्ति तुल्य इति व्यतिरेको व्यज्यते ।

---

कुमुदिनीनां प्रियः चन्द्रः शोभते । किन्तु कमलविकासे न समर्थः । सूर्योदये किं कुमुदो विकसति । कुमुदं नायं विकासयति । विष्णुः गरुडमधिरोहति । द्विजानां पतिः किं तिरस्कृतः । अथवा किं हे नरसिंह नरेश ! भवान् तु विचित्रैश्चरित्रैः ज्ञातः पश्चात् ।

अत्र चन्द्रादिरूपतया सन्देहो ज्ञानं भवति । त्वयेति निश्चयः कृतः सन्देहालङ्कारः । किं चायं निश्चयसाधककमलोल्लासनादिपदद्योतनीयव्यावर्तकानां गतश्लेषमूलाभेदाध्यवसायरूपातिशयोक्तिरूपेणानुप्राणीतोऽत्र विद्यते । इत्यनयोरङ्गाङ्गिभावेन संकरः । पुनः किं कथनीयम् । अथवेतिवाक्याभिधानेनाक्षेपालंकारेण सह संसृष्टिरपि । तेन चाक्षेपालंकारेणापरेषु निर्दिष्टेषु वा त्रिदशेष्वपि कोऽपि न तेऽस्ति तुल्य इति व्यतिरेकालङ्कारोऽस्ति ।

---

कुमुदिनी का प्रिय चन्द्र क्या ही शोभा को पाता है । यह कमल खिलाने में समर्थ नहीं है । सूर्योदय क्या कुमुद को खिलाता है । यह कुमुद में लक्ष्मी का विस्तार नहीं करता हैं । विष्णु गरुड़ पर चढ़ते हैं । क्या यह तिरस्कृत होते हैं ? अथवा बहुत कहने से क्या ? हे नरसिंह नरेश ! तुम विचित्र चरित्रों द्वारा बाद में जाने जाते हो ?

यहाँ चन्द्रादिरूपता से सन्देह करके ज्ञान होता है । तुमने ऐसा निश्चय किया, ऐसा सन्देह अलंकार है । क्या यह निश्चय साधक कमलोल्लासनादि द्योतनीय व्यावर्त्तकांशगतश्लेष मूल अभेद अध्यवसाय रूप अतिशयोक्ति से अनुप्राणित यहाँ विद्यमान है । इन दोनों में अङ्गाङ्गि भाव संकर अलंकार हुआ । पुनः क्या कहा जाय ? अथवा यह इस वाक्य के कहने पर उस आक्षेपालंकार के साथ संसृष्टि अलंकार भी है । उस आक्षेपालंकार से निर्दिष्ट अन्य में भी अथवा त्रिदश में भी कोई समानता नहीं है । यह व्यतिरेकालंकार है ।

अयं च सन्देहः शुद्धोऽपि संभवति यत्र संशय एव पर्यवसानम् । क्वचिदारोप्यमाणानां भिन्नाश्रयत्वेऽपि दृश्यते । यथा—

किं निम्नेषु समीकृता वसुमती शैलाः किमुत्सारिताः,
किं प्रक्षालितमम्बरं धवलिताः किं वा वनश्रेणयः ।
अप्येताः कवलीकृताः किमु दिशः सर्वाः किमेकीकृताः,
कीर्त्या वीर नृसिंह भूप भवतः सप्तापि पाथोधयः ॥५०॥

अत्रारोप विषयभूतायां कीर्तावारोप्यमाणानि समीकरणादीनि वसुमती प्रभृतिभिन्नाश्रयगतत्वेनोपनिबद्धानि ॥

---

एष च सन्देहः शुद्धोऽपि संभवति यत्र संशय एव पर्यवसानम् । कुत्रारोप्यमाणानां वस्तूनामपि भिन्नाश्रयत्वेऽपि दृश्यते । उदाहरणमिह—

हे वीर नरसिंह नरेश ! ते यशसा सप्त द्विपावसुन्धरेयमधरीकृता कि ? किं पर्वतगणाः समुत्सारिताः ? अथवा यशसाकाशो धवलीकृतः ? अथवा वनसमूहः स्वच्छीकृतः ? एते सर्वेऽपि कवलीकृताः ? अथवा सर्वाः दिशः एकीकृताः ?

अत्रारोपविषयभूतायां कीर्तौ समीकृतादीन्यारोप्यमाणानि वसुन्धरादिभिन्नाश्रयणेनोपनिबद्धानि ।

---

यह सन्देह अलंकार शुद्ध भी संभावित है । जहाँ सन्देह ही में पर्यवसान है । कहीं आरोप्यमाण वस्तु की भी भिन्नता में प्रदर्शित होना संभव है । उदाहरणार्थ—

हे वीर नरसिंह नरेश ! आप की कीर्ति से सात सागरवाली यह पृथ्वी नीचे कर दी गई है । क्या पर्वत उड़ा दिए गए । अथवा यश से आकाश धुल गया है । अथवा वन के समूह धवल बना दिए गए । क्या ग्रासस्वरूप हो गए अथवा सारी दिशाएं धवलता से एक हो गई ?

यहाँ आरोप विषयभूत कीर्ति में आरोप्यमाण का समीकरण है । वसुमती आदि भिन्न आश्रयगतत्व से उपनिबद्ध हैं ।

---

7—Doubt—The underlying factor of this figure of speech is similarity which sometimes is so extraordinary that it leads to defective knowledge. For example, 'Two objects may be so similar that a cogniser fails to tell one from the other so that the cognition of object fails to be a piece of valid knowledge in terms of the logical systems of India. The well known example of logician in this connection is (sthāṇurvā Puruṣo vā) whether this is a man or the stump of tree.

वस्त्वन्तरप्रतीतिर्विलसति सादृश्यहेतुकायत्र ।
तं भ्रान्तिमन्तंमेतं ब्रुवतेऽलङ्कारपारदृश्वानः ।।५१।।

अतस्मिंस्तदिति प्रत्ययो भ्रान्तिः । सा विद्यते यस्मिन्निति भ्रान्तिमान् । नायं स्मरणम् । तत्तांशस्पर्शिज्ञानरूपतया स्मरणस्याङ्गीक्रियामाणत्वात् । नापि सन्देहः । विरोधस्फूर्तिपुरःसरतया परस्परविरुद्धकोटिद्वयनिविष्टज्ञानरूपत्वेन सन्देहस्याभ्युपगम्यमानत्वात् । न चैवमतिव्याप्तिः । प्रकृताप्रकृतत्वेन मिथो विरोधिनी जानामीत्यादिवाक्यस्यालङ्कारतया नाद्रियमाणत्वात् । इदन्तांशावच्छिन्नंज्ञान्नं हि भ्रान्तिमतो विषयः । यथा –

सुराङ्गनाभ्यो मलये त्वदीयं, श्रुत्वा यशो वीर नृसिंहभूप ।
जिह्वाश्चलान्युल्ललयन्ति दुग्धमृणाललोभादुभयोऽपि नागाः ।।५२।।

---

वस्तुनि वस्त्वन्यतरवस्तु प्रतीयते, सादृश्यहेतुवस्तुनि यत्रान्यत् वस्तु प्रतीयते तं भ्रान्तिमन्तमेनं ब्रुवते । तेन सादृश्यं भाति भ्रान्तिदशायां सा भ्रान्तिः वर्तते वा प्रतीयते । एवंविधा वर्तमानावस्था यत्र वर्ततेऽयं भ्रान्तिमान्, स्मरणालङ्कारो न भवत्ययं, तत्तांशेन स्पर्शिज्ञानरूपतया स्मरणस्याङ्गीकरणत्वात् । सन्देहालङ्कारोऽपि नास्ति विरोधः स्फुरणत्वादनयोः परस्परविरोधश्रेण्यां सन्निविष्टज्ञानेन सन्देहस्य निकटत्वात् । एवंविधातिव्याप्तिर्नास्ति । प्रकृताप्रकृतयोः, परस्परविरोधः । अस्मिन् वाक्येऽलङ्कारत्वं नाद्रियते । इदन्तांशावच्छिन्नं ज्ञानं हि भ्रान्तिमतो विषयः । उदाहरणार्थम्—देवाङ्गनाभिः गीयमानं तव यशः श्रुत्वा हे नरसिंह नरेश ! लालायुक्तौ सर्पगजौ । तौ तु क्रमेण दुग्धमृणाललोभेन भवताम् । तयोः जिह्वा लालायिता च ।

---

वस्तु में किसी दूसरे वस्तु की प्रतीति होती है । सादृश्य हेतु वस्तु में जहाँ अन्य वस्तु प्रतीत हो, उसे भ्रान्तिमान् अलंकार कहा जाता है । भ्रान्ति में वह वस्तु ऐसी नहीं है अथवा ऐसी है । इस प्रकार की प्रतीति ही है । इस प्रकार वह वर्तमान अवस्था जिससे हों, भ्रन्तिमान् है । यह स्मरण अलंकार नहीं है । इस अंश से स्पर्श करते हुए ज्ञान से स्मरण का अङ्गीकार करना कारण है । सन्देह अलंकार भी नहीं है । विरोध का स्फुरण होता है और दोनों में परस्पर विरोध कोटि में सन्निविष्ट ज्ञान से सन्देह के निकट होना कारण है । इस प्रकार अतिव्याप्ति नहीं है । इतना अंश अविच्छिन्न ज्ञान है जो भ्रान्तिमान् का विषय है । उदाहरणार्थ — देवताओं की स्त्रियों द्वारा गाया जाता हुआ तुम्हारे यश को सुनकर हे नरसिंह नरेश ! सर्प और हाथी में लाला उत्पन्न होते हैं, क्रमशः दुग्ध एवं मृणाल की लालच से सर्प एवं हाथी दोनों की जीभ लालायुक्त हो गई हैं ।

साद‍ृश्येतरकारणाङ्कुरिता च भ्रान्तिर्नास्यालङ्कारस्य गोचरः ।

कल्पान्तक्षुभ्यदम्भोभरतरलतरोदन्वदुत्तुङ्गरिङ्गत्,
कल्लोलश्रेणि हल्लीसकवलितमेव प्रेक्ष्यते क्षोणिचक्रम् ।
त्वत्खड्गोत्कृत्तवक्षः स्थलविवरवलत्प्राणवायुप्रयाण,
भ्राम्यच्चेतोभिराजौ प्रतिभटसुभटैः श्रीनृसिंह क्षितीन्द्र ॥५३॥

अत्र गाढतरमर्मप्रहारः कारणं भ्रान्तेः । सन्देहानन्तरं तु भ्रान्तिमतो निरूपणमसम्यग्ज्ञानत्वसाधर्म्येण ।

तत्तन्निमित्तभेदाभेदमनेकैरनेकधा यत्र ।
उल्लिख्यते स धीरैरुल्लेखः कथ्यतेऽन्वर्थः ॥५४॥

---

साद‍ृश्यापरकारणाङ्कुरिता भ्रान्तिश्चालङ्कारो न गोचरीभूतः ।

प्रलयकाले समुद्राः तरलतरैरुच्चैस्तरङ्गैः संचालिताः । युद्धे तव खड्गेन शत्रुवक्षःस्थलविवरयुक्ताः प्राणाः गताः । हे नरसिंह नरेश ! पृथ्वीयं दृष्टा । अस्यां मण्डलाकारेणात्यन्तोद्भ्रमन्तश्च कल्लोलं कुर्वन्तश्चारिप्राणाः दिवंगताः ।

इह प्रगाढ़मर्मप्रहारः कारणं भ्रान्तेः । सन्देहस्य पश्चात् तु भ्रान्तिमतो निरूपणमसम्यग्ज्ञानत्वसाधर्म्येण भवति ।

एकस्यानेकनिमित्तयोगेन विविधप्रकारेण निरूपितत्वेऽलङ्कारोऽस्त्युल्लेखः ।

---

दूसरी समानता के कारण भ्रान्ति इस अलंकार में दृष्टिगत नहीं है ।

प्रलयकाल में क्षोभित समुद्र के तरलतर ऊँची तरंगे होती हैं । कल्लोल करते मण्डलाकारनृत्य कर नष्ट होते के समान तुम्हारी तलवार से युद्ध में शत्रु के कटे वक्षःस्थल में विवर होते ही प्राणवायु चले जाते हैं। भ्रमित चित्त से शत्रु वीरों द्वारा हे नरसिंह नरेश ! यह पृथ्वी चक्र देखा जाता है । शत्रुगण दिवंगत होते हैं ।

यहाँ प्रगाढ़ मर्म प्रहार भ्रान्ति का कारण है । सन्देह के अनन्तर तो भ्रान्तिमान् का निरूपण असम्यक् ज्ञान सम्बन्धी साधर्म्य से होता है ।

एक के अनेक निमित्तों के योग के कारण विविध प्रकार से उल्लेखन उल्लेखालंकार है । एक ही अनेक प्रकार से निरूपित होने पर उल्लेख होता है ।

---

Poets, however, change this doubt into a figure of speech the only difference being that doubt is always ral, where as the figure of speech is based only on the similitude of a doubt and is one of the ways to establish similarity, between two objects. This can be of three types (1) Pure doubt—Where no deluion can be taken by the cogniser. (2) Where a decision is taken in the middle but dwindles into nothingness and doubt stands as it

अस्य न रूपके तावदन्तर्भावः। वस्तुनस्ताद्रूप्येऽस्य प्रगल्भमानत्वात् प्रकृतोपरञ्जकत्वमात्रेण रूपकस्य चरितार्थत्वात्। नापि भ्रान्तिमति। अतद्रूपस्य तद्रूपताप्रतिभासेऽप्यनेकधोल्लेखलक्षणं विच्छित्यन्तरमुररीकृत्यास्याप्रवर्तमानत्वात्। नाप्यभेदाध्यवसायरूपायामतिशयोक्तौ। एकस्यानेकप्रतिपत्तृकर्तृकत्वेनानेकधोट्टङ्कितत्वात्। सर्वथा रूपकादेर्विभक्त एवास्य विषयः। यदि पुनः क्वचन तत्प्रतिभासस्तदानीमपि न विरोधः कश्चन। रूपकादिना सहास्यैकवाचकानुप्रवेशलक्षणस्य संकरस्याभिमतत्वात्। तस्माद्यत्रैकस्यानेकधोल्लेखः क्रियते तत्रोल्लेखालङ्कारः।

---

रूपकेऽस्य न तदान्तर्भावः। वस्तुनस्तद्रूपतावां दाढ्र्येन कथनं प्रकृतयुपहितमात्रेण रूपकस्य चरितार्थता भवति। भ्रान्तिमानलङ्कारोऽपि न। अतद्रूपे तद्रूपस्य प्रतिभासत्वेऽप्यनेकविधस्योल्लेखनमुल्लेखालङ्कारस्य लक्षणम्। अस्य सौन्दर्यमङ्गीकृत्यास्मिन् प्रवृत्तिः। अभेदव्यवसायरूपातिशयक्तावपि न एकस्यानेकहेतुः कारणम्। सर्वथा रूपकादेः विभागोऽस्य विषयः। यदि पुनः प्रतिभासितं क्वचित्। तत्रापि न विरोधः। रूपकादिना सहास्यैकवाचकानुप्रवेशलक्षणस्य संकरालङ्काराभिहितत्वात्। तस्माद्यत्रैकस्यानेकधोल्लेखः तत्रोल्लेखालङ्कारो भवति।

---

इसका तब रूपक में अन्तर्भाव नहीं होता है। वस्तु की तद्रूपता में दृढ़तापूर्वक कहना प्रकृत में उपहित मात्र से रूपक की चरितार्थता है। भ्रान्तिमान् में भी नहीं है। अतद्रूप में तद्रूप के प्रतिभासत्व में भी अनेक प्रकार का उल्लेख का लक्षण होता है। इसकी स्वीकारोक्ति में उद्यत होना होता है। अभेद रूप अतिशयोक्ति में भी नहीं है। कारण एक में अनेक हेतु हैं। सर्वथा रूपक आदि का विभाग इसका विपय है। यदि पुनः प्रतिभासित हो तो उस समय भी कोई विरोध नहीं है। रूपक आदि के साथ इस एक वाचक अनुप्रवेशलक्षण का संकर अलंकार होता हैं। उससे जहाँ एक के अनेक प्रकार का उल्लेख होता है, वहाँ उल्लेख अलंकार होता है।

---

was in the beginning and (3) Where a deluion is reached at the end. vidyādhara's treatment of this figure moves along the lines of ( Kāvyaprakāś ) of Mammaṭa rather than along those of Alankārsarvaswa of Ruyyaka.

8—Delusion—When the similarity between the two objects is so much that the cogniser definitely takes one for the other, it is a case of this figure of speech. The difference between delusion as defined and illustrated in works of Indian logic and this figure of speech is that delusion arises only in the minds of

अनेकधोल्लेखनिमित्तं त्वनेकधर्मसम्वन्धः। तत्र रुच्यर्थित्वव्युत्पत्तयो यथायोगं प्रयोजिकाः। ततश्च यथासंभवं प्रवर्तमानरुच्यर्थित्वव्युत्पत्तिप्रयुक्तानेकधर्मसम्बन्धरूप-निमित्तवशादेकमनेकैरनेकधोल्लिख्यत इति यौगिकत्वमप्यस्य संभवति। यथा—

न भवसि कथंकारं श्लाघ्यः कलिङ्गपुरन्दर,
स्मर इति वरारोहाः साक्षान्मुकुन्द इतीन्दिरा।
सुरतरुरिति त्वां सेवन्ते निरन्तरमर्थिनो,
भरतमुनिरित्यार्यास्तौर्यत्रयीनिपुणा अपि ॥५५॥

अत्रैक एव कलिङ्गपुरन्दरस्तत्तत्सौन्दर्यादिगुणयोगात् स्मराद्यनेकरूपतया निरूपितः॥

कलयति विषयेऽपह्नवमारोप्यं यत्र भासते सुतरां।
आसुरपह्नुतिमेतां बन्धच्छायात्रयी चास्याः ॥५६॥

---

अनेकधोल्लेखनिमित्तेन त्वनेकधर्मसम्वन्धः। रूपनिमित्तवशादेकमनेकैरनेकधोल्लिख्यते। अत्रयौगिकत्वमपि संभावितम्। उदाहरणार्थम्—

हे कलिङ्गेन्द्र! त्वं कथं न श्लाघ्योऽसि। कामदेव इति वाराङ्गनाः साक्षात् विष्णु इति लक्ष्मीः, कल्पवृक्ष इति सदार्थिनो भवन्तः भवन्तं सेवन्ते। स्तवत्रयीगायन-निपुणाः आर्याः भरतमुनिरिति।

अत्रैक एव कलिङ्गेन्दोर्विभिन्नसौन्दर्यादिगुणैः स्मराद्यनेकरूपैः निरूपितः। विषयं विषयी यत्रापह्नुते यत्र विषयिनं विषयोऽपह्नुते। यत्रासत्यच्छलादिशब्दैर-पह्नवः निर्दिष्टोऽपह्नुत्यलङ्कारः त्रिविधः।

---

अनेक प्रकार के उल्लेख के निमित्त से तो अनेक धर्म सम्बन्ध होते हैं। वहाँ रुच्यार्थित्व यथा योग व्युत्पत्ति प्रयोजन स्वरूप हैं और उसके बाद जैसे संभावित प्रवर्तमान रुच्यार्थित्व व्युत्पत्ति प्रयुक्त अनेक प्रकार के धर्म सम्बन्ध रूप निमित्त वशात् एक अनेक द्वारा अनेक बार उल्लिखित होता है। यौगिकत्व भी इसमें संभावित है।

हे इन्द्ररूपी कलिङ्ग नरेश! तुम किस प्रकार से प्रशंसनीय नहीं होते हो। वाराङ्गनाएँ आप को कामदेव, लक्ष्मी आपको विष्णु, याचकगण तुम्हारी सदैव स्तुति करते आपको कल्पवृक्ष जैसे तीनों सेवन करते हैं। तीन (वेद) की स्तुति गायन में निपुण भी आर्य भरतमुनि ऐसा मानते हैं। इसमें एक ही कलिंगेन्द्र हैं। भिन्न-भिन्न सौन्दर्य आदि गुणों से कामदेव आदि अनेक रूपों में निरूपित किए गए हैं।

कहीं विषय को विषयी छिपाता है, कहीं विषयी को विषय छिपाता है तथा कहीं असत्य छल आदि शब्दों से छिपाना निर्दिष्ट होता है, तो अपन्हुति अलंकार तीन प्रकार का होता है।

animals and birds owing to the extraordinary partiality for certain objects and the actions caused by such delusion are always made mention of in order to prove that they are active under a delusion. For exmple 'both the elephants and serpents are moving their tongues on hearing your fame under the delusion that this is heap of lotus stalks and milk. The reason for this delusion is the similarity between the fame. lotus stalks and milk, all of the three being very white. Elephants are very fond of lotus stalks as are serpents of milk and their moving tongues prove that they are working under delusion Here vidyādhara has completely forgotten that serpents can not hear. This delusion is caused by hearing a very prominent sensory perception.

9--Ullekh—Where an object is taken as for something by a group of cognisers, according to their taste, natural or intellectual demands etc., then it is a case of this figure of speech provided that the substratum of cognition and what the substratum is taken for, must be similar to one another. For example(O king ! women take you for cupid, the Goddess of property takes to you for Lord Viṣṇu and the beggars take you for the wish granting tree.)

Here each cogniser takes the same person; (the king for some thing differently, because of his taste or mental and physical demands. The mental demand of beautiful ladies is cupid, so that they take the king to be cupid himself; while the goddess of property takes him for Lord Viṣṇu, because the only person appealing to the goddess of property is Lord Viṣṇu and in the same manner beggars are constantly running after the wish granting tree, so that they take the king for that tree.

10—Apanhuti ( conealment ) superimposition by means of negation where the standard of comparison is superimposed on the object of comparison is negated, it is a case of this speech. Negation in this figure of speech can both be verbal and implied.

अत्र प्रक्रान्तापह्नववैधर्म्येण निरूपणमेतस्याः । रूपकमारभ्यारोपकक्ष्यागतालङ्कारविचारः प्रस्तुत इति । विषय आरोपस्य । अस्याश्च त्रयी बन्धच्छाया । तथा हि क्वचिदारोपविषयमपह्नुत्यारोप्यते विषयी । क्वचिद्विषयिणमारोप्यारोपस्यापह्नूयते विषयः । क्वचित् पुनरसत्यत्वाभिधायिभिश्छलादिभिः शब्दैरपह्नवो निर्दिश्यते । तत्राद्यभेदद्वयं वाक्यभेद एव संभवति । तृतीयभेदे त्वेकवाक्यत्वम् । क्रमेण यथा —

अश्रान्तस्यन्दमानोद्धुरमदलहरीसौरभोन्मेषहर्ष,
प्रेङ्खोलच्चञ्चरीकप्रकरपरिकरं दिग्गजाः किं वहन्ति ।
किन्तूदग्रं कलिङ्गेश्वर तव भुजयोश्चण्डिमानं विलोक्य,
व्रीडाचिन्तावनम्रान् स्फुटमसितपटैश्छादयन्ति स्वहस्तान् ॥५८॥

---

अपह्नुतेः निरूपणमत्र विषयस्यापह्नवेन वा वैधर्म्येण विषयिनोऽपह्नवेन भवति । रूपकालङ्कारमारभ्यारोपकक्षागतालङ्कारस्य विचारः प्रस्तूयते । आरोपस्य विषयः । अपह्नुतेः त्रयो भेदाः । क्वचिद्विषयिणमारोपितं कृत्वा विषयोऽपह्नुतो भवति । क्वचित् पुनरसत्याभिधानेन छलादिना शब्देनापह्नवो निर्दिष्टः । तत्रारम्भिकाभेदः वाक्यद्वयेन संभाव्यते । तृतीयभेदे त्वेकवाक्यत्वं भवति । क्रमेणोदाहरणम् ।

अविश्रान्तस्यन्दितात्यन्तमदभरेण सुगन्धयुक्ताः हर्षेण प्रफुल्लिताः भ्रमराः दिग्गजैः कथं नीयन्ते । हे कलिङ्गनरेश ! ते तूग्रं कर्मावलोक्य प्रकृष्टं बाहोः लज्जाचिन्ताभ्यामवनतेन स्पष्टतः कृष्णाजिनेन स्वहस्तान् छादयन्ति ।

---

अपह्नुति का निरूपण यहाँ विषय को छिपाने अथवा वैधर्म्य से विषयी को छिपाने में होता है। रूपक अलंकार का आरम्भ कर आरोप कक्षागत अलंकार का विचार प्रस्तुत किया जाता है। विषय आरोप का हो, अपह्नुति के तीन प्रकार के भेद हैं। कहीं विषयी को आरोपित कर विषय को छिपाते हैं। कहीं-कहीं पुनः असत्य कहे जाने से छल आदि द्वारा शब्दों से छिपाना निर्दिष्ट होता है। वहाँ प्रारम्भिक भेद दो वाक्य भेद से ही संभावित है। तृतीय भेद में तो एक वाक्यता होती है। क्रमशः उदाहरण—

बिना रुके निरन्तर टपकते अत्यन्त मद की लहर से, सुगन्ध युक्त हर्ष से प्रफुल्लित भौंरों के समूह को दिग्गज क्यों ढोते हैं ? किन्तु वे प्रचण्ड तुम्हारी बाहुओं के प्रकृष्ट कर्म को देखकर हे कलिङ्ग नरेश ! लज्जा, चिन्ता में झुके स्पष्टतः कृष्ण वस्त्रों से अपने सुण्डों (सूड़ों) को ढकते हैं।

---

For example; (This is not the face but the moon itself.) Here negation is verbal; because the word (not) has been used. But when some other words have been used which only imply nega-

अत्रापह्नवपूर्वक आरोपः । मधुकरकुलमिदं न भवतीत्यपह्नवं विधाय नीलपटावगुण्ठनरूपतयारोपस्य कृतत्वात् ।

**पृथ्वीभारावतारं कृतवतिभवतो दोष्णि हर्षेण दूतः,**
**शेषेण प्रेषितोऽसौ निवसति भुजगः कोऽपि संवादहेतोः ।**
**क्रुध्यत् कालीकटाक्षद्युतिदलनकलाकेलिकारस्त्वदीये,**
**पाणौ नायं कृपाणः सकलगुणनिधे श्रीनृसिंह क्षितीन्द्र ।।५८।।**

अत्रारोपपूर्वकोऽपह्नवः । फणधरपतिप्रहितोऽयं दूत भुजग इत्यारोपं विधाय न भवति कृपाण इत्यपह्नवस्य कृतत्वात् । किं चात्रापह्नुत्या सकलरिपुवधूवैधव्यमचिरेण रणेभवता करिष्यत इति वस्तु प्रतीयते ।

**वीरश्रीसिंहकान्ताविहरणकनकक्ष्माधराकारवाहो,**
**कीर्तिज्योत्स्नासुधांशो गुणमणिजलधे श्रीनृसिंह क्षितीन्द्र ।**
**प्रत्यग्रोदग्रजाग्रद्दवदहनघनज्वालमालापदेशा,**
**द्देशाः शोकं वहन्ते निजपतिविरहाद्दुःखितास्त्वद्रिपूणाम् ।।५९।।**

---

लज्जाचिन्ताभ्यामत्रापह्नवपूर्वक आरोपः । मधुकरसमूहो न भवतीत्यपह्नवं कथयित्वा नीलवस्त्रावगुण्ठनरूपेणारोपणात् ।

शुभचरितवान् नरसिंह राजन् ! यदा भवतो भुजा पृथ्वीभारावतारं कृता तदा हर्षेण शेषो धन्यवादं दानाय एको दूतः प्रेषितो यः तव भुजायां क्रुध्यत्कालीकटाक्षप्रकाशविनाशने समर्थो भवति कृपाणः ।

इहारोपपूर्वकोऽपह्नवः । फणधरपतिप्रेषितोऽहं दूतसर्पं इत्यारोपं विधाय न भवति खड्ग इत्यपह्नवस्य कारणात् किं चेहापह्नुत्या सम्पूर्णशत्रुवधूवैधव्यमतिशीघ्रेण भवता करिष्यत इति वस्तुप्रति भवति ।

वीरश्रीनृसिंहवधूविहरणे सुमेरुपर्वत इव बाहुः यशः किरणयुक्तचन्द्रः गुणमणिजलनिधे श्रीनृसिंह नरेश ! भवतोऽरीणां देशस्थानं निजपतिदुःखदुखितं शोकं याति प्रकृष्टग्रहदहनघनज्वालासमुहापदेशेन ।

---

लज्जा चिन्ता से अपह्नवपूर्वक यहाँ आरोप है । मधुकर समूह नहीं है । इस अपह्नव को कहकर नील वस्त्र के अवगुण्ठनरूपता से आरोप किया गया है ।

शुभ चरितवाले हे नरसिंह नरेश ! जब आप की भुजा ने पृथ्वी भार को उतार दिया तो हर्ष से शेष ने धन्यवाद देने हेतु एक दूत भेजा, जो तुम्हारी भुजा में क्रोध करती काली के कटाक्ष के प्रकाश को नष्ट करने में समर्थ कृपाण के रूप में स्थित है । यहाँ आरोप पूर्वक अपह्नव है । फणधरपति (शेष) से भेजे गए दूत रूप भुजग इससे आरोप का विधान कर अपह्नव नहीं होता । 'कृपाण' इसमें अपह्नव

अत्रापदेशशब्देनापह्लवनिर्देशः कृतः। एकस्मिन्नेव वाक्येऽपह्लवाभिधायिभिश्छलादिशब्दव्यतिरिक्तैर्वपुर्भङ्गिनामादिभिः शब्दैरपह्लव निर्देशो द्रष्टव्यः ॥

**अप्रकृतत्वेन स्यादध्यवसायो गुणाभिसम्बन्धात् ।**
**साध्यः प्रकृतस्य यदा कथितोत्प्रेक्षा तदा तज्ज्ञैः ॥६०॥**

आरोपादध्यवसायस्य प्रकृष्यमाणत्वादत्र निरूपणं समुचितमेतस्याः। अभिन्नत्वेन प्रतिभासनमध्यवसायः। स द्विविधः सिद्धः साध्यश्च। यत्र लक्ष्यमाणगुणसम्बन्धाद् विषयिणो विषयगतत्वेनारोप्यमाणत्वाद्भिन्नस्यापि विषयिणो विषयक्रोडीकारेण प्रवृत्तत्वादभिन्नत्वेन प्रतीतिस्तत्राध्यवसायः सिद्धः।

---

इहापदेशशब्देनापह्लवस्य निर्देशः। एकस्मिन्नेव वाक्येऽपह्लवाभिधानेन छलादिशब्दातिरिक्तेन शरीरं भङ्गिनादिना शब्देनापह्लवनिर्देशोऽवलोकनीयः ॥

अप्रकृतत्वेनाध्यवसायस्य गुणसम्बन्धेन भवति। अप्रकृतस्य गुणक्रिययोः सम्बन्धेन प्रकृतस्याप्रकृतत्वस्य संभावनोत्प्रेक्षास्ति। आरोपादध्यवसायेनाकर्षणादुत्प्रेक्षायाः निरूपणं समुचितम्। अध्यवसायोऽभिन्नत्वेन प्रतिभासितः। स च द्विविधः सिद्धः साध्यश्च। यत्र लक्ष्यमाणगुणसम्बन्धेन विषयिणो विषयगतत्वेनारोप्यमाणताया भिन्नस्यापि प्रतीतिरध्यवसायसिद्धः विषयिणो विषयस्वीकारेण प्रवृत्तिभिन्नत्वरहितेन।

---

करना कारण है। और क्या ? यहाँ अपह्नुति से सम्पूर्ण शत्रु की बधुएँ शीघ्र ही वैधव्य को आप के द्वारा प्राप्त करेंगी। वस्तु से यह प्रतीत होता है।

वीरता की श्री सिंह रूप वधू के साथ विहार करने में सुमेरुपर्वत के समान बाहु वाले यश की किरण युक्त चन्द्रमा रूप गुणरूपी मणि उसके जलनिधि रूपी आप हैं। हे नरसिंह पृथ्वीपति ! शत्रु के प्रकृष्ट गृहस्थान एवं दहन घन ज्वाला समूह के अपदेश से शोकयुक्त होते हैं।

यहाँ अपदेश शब्द से अपह्लव का निर्देश किया गया है। एक ही वाक्य में अपह्लव कहे जाने वाले छल आदि शब्दों के व्यतिरेक से शरीर का भङ्गी आदि शब्दों से अपह्लव जो निर्दिष्ट है, दर्शनीय है।

अप्रकृतत्व से अध्यवसाय गुण के सम्बन्ध से होता है। अप्रकृत के गुण क्रिया के गुण क्रिया के सम्बन्ध से प्रकृत के अप्रकृतत्व की संभावना उत्प्रेक्षा है। आरोप अध्यवसाय से आकर्षण होने पर उत्प्रेक्षा का निरूपण समुचित है। अध्यवसाय अभिन्नता से प्रतिभासित है। वह सिद्ध और साध्य दो प्रकार का है। जहाँ लक्ष्य गुण सम्बन्ध से विषयी के विषयगत हो, आरोप्यमाण से भिन्नत्व प्रतीति अध्यवसाय सिद्ध है। विषयी के विषय स्वीकरण से प्रवृत्तिभिन्नता है।

एतदाश्रयेणातिशयोक्तेः प्रथमः प्रकारः कथयिष्यते । यत्र पुनरुपात्तविषयत्वाद्विषयिणो भिन्नत्वेन प्रतिभानं तत्र व्यञ्जनव्यापारेणाभिन्नत्वप्रतीतेः साध्यमानत्वात् साध्यः । एतदवलम्बनेन प्रवर्तमानायाः पुनरस्याः संभावनमभिमानस्तर्क ऊहश्चेति पर्यायाः ।

**श्रीमन्नृसिंह नृपते भवतो यशोभिः, क्षीरार्णवं स्वपितरं परिभूयमानम् ।**
**उत्पश्यतः सितकरस्य कुरङ्ग एष, शोकाग्निधूम इव भाति तदात्मजस्य ॥६१॥**

अत्र धूमत्वेनोत्प्रेक्षणे कुरङ्गस्य प्रवृत्तिनिमित्तं श्यामत्वं गुणो लक्ष्यमाणः । तदभिन्नत्वप्रतीतिः साध्याप्रयोजनम् । उपमोपक्रमादुत्प्रेक्षा यथा ।

---

एतदाश्रयेणातिशयोक्तेः प्रथमः प्रकारः निरूपयिष्यते । यत्र पुनः सिद्धविषयेन विषयिणो भिन्नत्वस्य प्रतिभानम् । तत्र व्यञ्जनव्यापारेणाभिन्नत्वप्रतीतेः साध्यमानहेतुत्वात् साध्यः । एतदवलम्बनेन प्रवर्तमानायाः पुनरस्याः संभावनमभिमानस्तर्क ऊहश्चेति पर्यायाः । हे श्रीमन् नरसिंह राजन् ! ते यशसा क्षीरसागरोऽयं दुःखितोऽभूत् । स्वपितरं दुःखितं दृष्ट्वा चन्द्रः शोकाग्निधूम इव भाति ।

अत्र धूमतयोत्प्रेक्षणे कुरङ्गस्य प्रवृत्तिनिमित्तं कृष्णत्वं गुणोलक्ष्यमाणः । तदभेद प्रतीतिः साध्या प्रयोजनम् । उपमोपक्रमत्वात् उत्प्रेक्षायाः क्रमेणोदाहरणानि ।

---

यह आश्रय से अतिशयोक्ति का प्रथम भेद कहेंगे । जहाँ पुनः सिद्धविषय से विषयी के भिन्नत्व का प्रतिभान हो, वहाँ व्यञ्जन व्यापार से अभिन्नत्व की प्रतीति साध्यमानत्व हेतु साध्य है । इसका अवलम्बन कर प्रवर्तमान इसकी संभावना अभिमान, तर्क ऊह आदि पर्याय होंगे ।

हे श्रीमान् नरसिंह नरेश ! आप के यशों द्वारा क्षीरसागर को दुःख हुआ । जिससे अपने पिता को दुःखित देखकर चन्द्रमा शोकाग्नि धूम के समान मलिन हो गया है ।

यहाँ धूमत्व से उत्प्रेक्षा करने में कुरङ्ग (हरिण) की प्रवृत्ति निमित्त श्यामता गुण से लक्षित अभेद प्रतीति साध्य प्रयोजन है । उपमा के उपक्रम से उत्प्रेक्षा का उदाहरण —

---

tion; it is a case of implied (Ārthī Apnhuti). (Elephants covered with swarm of bees are as if putting on black garments being drowned in anxiety).

The object of the poet is to say that the bees are not actually bees, but black garments). Here the word (not) has not been used and yet the negation is there. Thus it is a case of implied negetion.

स्वः सिन्धौ विबुधेन्द्र विभ्रमवने खे हाटकाद्रौ दिशां,
कण्ठे वीर नृसिंह देव भवतः कीर्तेः परिस्फूर्तयः ।
डिण्डीरप्रकरन्ति फुल्लकलिकाभारन्ति ताराबधू,
नाथांशु प्रसरन्ति निर्झर सरित्पूरन्ति हारन्ति च ॥६२॥

अत्रोपमानत्वेनोपनिबद्धस्यापि डिण्डीरप्रकारादेःस्वःसिन्धुप्रमुखेषु स्थानविशेषेषु संभवौचित्यादभिन्नत्वेन प्रतीतेरुत्प्रेक्षायामुपमायाः पर्यवसानम् । धर्मिणि धर्मारोपणे तु व्यङ्ग्या । तत्र गुणस्योत्प्रेक्षणं हेतुत्वेन । क्रियायाःफलत्वेनापि । यथा—

---

स्वर्गसागरे सुमेरुपर्वते दिशां पुरतः हे वीर नरसिंह देव ! भवतो यशसः स्पष्ट-परिस्फूर्तयः । समुद्रफेनेन, देवेन्द्रवने कलिकाया शोभया तारावधूनां चन्द्रकिरणैः सरित्प्रवाहैः दिग्हारैः समानाः ।

अत्रोपमानेनोपनिबद्धस्यापि डिण्डीरप्रकारादेः स्वःसिन्धुप्रमुखेषु स्थानविशेषेषु संभावितौचित्यादभेदेन प्रतीतेरुत्प्रेक्षायामुपमायाः पर्यवसानम् । धर्मिणि धर्मारोपे तु व्यङ्ग्या । तत्र गुणस्योत्प्रेक्षणं निमित्तं क्रियाफलत्वेन ज्ञायते । उदाहरणार्थम्—

---

आकाश सागर में सुमेरुपर्वत में दिशाओं में हे वीर नरसिंह देव ! आप के यश स्पष्टतः परिस्फुरित है । वह फेन के सदृश है; जो देवेन्द्र के वन में फूले कलियों की शोभा बढ़ाता है । तारावधूनाथ चन्द्र किरण को फैलाता है । झरने नदियों के प्रवाह समान है ! दिशा के हार के समान हैं ।

यहाँ उपमान से उपनिवद्ध भी डिण्डीर प्रकारादि के स्वर्ग सिन्धु प्रमुख स्थान विशेष में संभावित औचित्य से अभिन्नत्व से प्रतीति की उत्प्रेक्षा में उपमा का अन्त होता है । धर्मी में धर्मारोप से तो व्यङ्ग्य है । वह गुण के उत्प्रेक्षण निमित्त क्रिया के फलत्व से भी होता है । उदाहरणार्थ—

---

1—Utprekṣā—When the relation of the identity between the object of comparison and the standard of comparison is sought to establish without recourse to superimposition; it is a case of two figures of speech, ( utprekṣā ) and hyperbole. when the identity is complete, because the identity of one object has submerged itself into the other; it is a case of hyperbole. But if the identity is nearing Completion but not complete, it is a case of (utprekṣā).

To make the point clear it must be added that Indian logic accepts each object as having a genus, a quality and an action.

कैलासान् कीर्तिरेषा सृजति कति न ते दत्ततिग्मांशुयात्रा-
भङ्गांस्त्यागस्तु शृङ्गाञ्चलदलितनभः पर्वणः स्वर्णशैलान् ।
इत्थं मन्दाक्षचिन्ताप्रसरविधुरधीरात्मभूरात्मगुप्त्यै,
लीनो वैकुण्ठनाभी सरसिजकुहरे श्रीनृसिंहक्षतीन्द्र ॥६३॥

अत्र विधुरधीत्वं गुणो हेतुः ।

त्वत्तः कोऽप्यपरः कदापि पुरुषश्चित्तेऽपि न स्थापित,
स्त्वच्चिन्तापरया मयेति भवतः प्रत्यायनां कुर्वती ।
तन्वी दुःसहपञ्चवाणदहनोत्सङ्गं प्रविष्टा सती,
पाण्डिम्ना विरहोत्थितेन सुभगा व्याख्यातिशुद्धिंनिजाम् ॥६४॥

अत्र प्रत्यायनाकरणं शुद्धिप्रकाशनहेतुः ।

---

हे पृथ्वीपते नरसिंह ! भवतः कीर्तिः कैलासं सृजति । तेन ते दत्तसूर्ययात्राभङ्गी कृता । दानेन पर्वतश्रेणयः दलिताः । आकाशरूपसुमेरुपर्वतस्य सृष्टिरभवत् । एवं वैकुण्ठवासिनो विष्णोर्नाभिकमले ब्रह्मा स्वरक्षार्थं प्राविशत् ।

इह विधुरधीत्वं गुणो हेतुः ।

कोऽप्यन्योऽस्ति त्वत्तः कदापि चित्ते नैतादृशः पुरुषः स्थापितः । इत्येवं रूपेण त्वच्चिन्तायुक्ता सती भवन्तं विश्वासयन्ती काचन कृशाङ्गी दुःसहकामवाणज्वालया प्रविष्टा विरहेण पीतवर्णा भूत्वा सौभाग्यवती स्त्री स्वीयां शुद्धिं प्रकाशितवती ।

इह प्रत्यायनाकरणं शुद्धिप्रकाशनहेतुः ।

---

हे पृथ्वीपति श्री नरसिंह आप की इस कीर्ति ने कैलास को बनाया है । कैलास ने तुम्हारे दान से सूर्य की यात्रा को भङ्ग कर दिया । दान तो पर्वत की श्रेणियों को दलित करने, आकाश रूप सुमेरु पर्वत की सृष्टिकर दिया । इस प्रकार वैकुण्ठ-वासी विष्णु के नाभी कमल कुहर में लज्जा चिन्ता से युक्त हीन बुद्धि से ब्रह्मा अपनी रक्षा के लिए लीन हो गए ।

यहाँ विधुरधीत्व गुण हेतु है ।

तुमसे बड़ा दूसरा भी कौन है ? ऐसा कभी भी चित्त में स्थापित नहीं हुआ । तुम्हारी चिन्ता में लीन मेरे द्वारा ऐसा आप में विश्वास करती दुबली पतली असह-नीय काम के वाण के दहन में जलती सी तो प्रविष्ट हो गई । पीले वर्ण वाली विरह में रहने से सौभाग्यवती स्त्री अपनी शुद्धि करती है ।

यहाँ प्रत्यायनाकरण शुद्धि प्रकाशन हेतु है ।

---

When the genus, qualities and the action get away from an object bring the course of its merger into another object exactly,

**त्रैलोक्यप्रथमानवीरपरिषद्व्यावृत्तवीरायित,**
**श्रीमन् वीर नृसिंह देव भवतः कर्तुं वतंसं यशः।**
**यत्पूर्वं श्रवणावतंसपदवीं नीतं धरित्रीभुजां,**
**तत्कम्पेन निरन्तरेणशिरसः प्रभ्रंशयन्ते बुधाः ॥६५॥**

अत्र वतंसीकरणं फलम्। यत्र स चेतनधर्मस्याचेतनगतत्वेनारोपणात् सादृश्यं प्रतीयते तत्र तदभिधायिन इवादेरुपादानं न कार्यम्। पौनरूक्त्यापत्तेः। यथा—

---

हे श्रीमन् वीर नरसिंह देव ! भवतो यशोऽलङ्कर्तुं त्रैलोक्ये प्रसिद्धप्रतिष्ठित वीराणां सभा यस्यां वीरत्वकर्माणि सम्पादितानि। यत्पूर्वं कर्णाभरणं, पृथ्वीभुजा, नीतम्। अर्थात् पृथ्वी विजिता। तत्कम्पेन निरन्तरेण बुधाः शिरसानतमस्तकाः। विद्वांसश्च प्रणमन्ति।

इह वतंसीकरणं फलम्। यत्र स चेतनधर्मस्याचेतनधर्मगतारोपेण समानत्वं प्रतीयते। तत्र इवादेरुपादानं न करणीयम्। पुनरुक्ततापत्तेः। यथा —

---

हे श्रीमान् वीर नरसिंह देव ! आप के यश को अलंकृत करने के लिए त्रैलोक्य में प्रसिद्ध प्रतिष्ठा वाले वीरों की सभा है, जिसमें वीरता से सम्बद्ध कर्म हुए हैं। जो पहले कान के लिए आभूषण स्वरूप थी, पृथ्वी जीत ली गई। उसके कम्पित होने से निरन्तर देवतागण शिर से नतमस्तक होते हैं। विद्वान प्रणाम करते हैं।

वहाँ वतंसीकरण फल है। जहाँ सचेतन धर्म के अचेतनता के आरोप से समानता की प्रतीति होती है। वहाँ कहे जानेवाले इव आदि का उपादान नहीं करना चाहिए। पुनरुक्तता की आपत्ति है। जैसे—

---

it is a case of complete identity. But when an object is divested of its qualities and actions but not of genus, it is a case of incomplete identity leading to the figure of speech called (utprekṣā)- Here too similarity betṇween two objects is the underlying factor. For example, thịs face covers the whole world with the moonlight not only by night but also by day and so it were as if the moon itself, it is not a case of superimposition, because as if bars superimposition it is not a case of complete identity; because the object ( face ) has not left out its genus, as it is mentioned by the word (face). Indian theory of meaning believes in effect that when object is mentioned by any name, the first thing is identical, is the genus. For example; 'the wrod (Jug)

ननु मृगाङ्कमृगस्य तृणैर्विना, कथममुष्य भविष्यति जीवितम् ।
इति मृगाङ्करुचः कुरुते तृणं, तव कृपालुकलिङ्गपते यशः ॥६६॥
कान्त्यानया तव तुलातपनीयराशि,
र्मन्दीकृतद्युतिरवाञ्चति लज्जमानः ।
किं चामुनार्थिभवनेषु निधीकृतेन,
जाता नृसिंहनृपते वसुधा यथार्था ॥६७॥
मरुत्पाथो बह्निव्यतिकरसुतीक्ष्णेन तपसा,
तुलामध्यारुढं तव तदपि कान्त्या जितमहः ।
इति स्नात्वा दानाम्भसि तव नृसिंहक्षितिपते,
सुवर्णं निर्विण्णं विरचयति तीर्थेषु वसतिम् ॥६८॥

कथं खलु विना तृणैः मृगाङ्कमृगस्य जीवनं भविष्यति । इत्थं दयालुकलिङ्गाधिपते ! ते यशः तृणं रचयति चन्द्रकान्तिसदृशम् । तवानया कान्त्या सूर्यप्रकाशः मन्दीकृतः । प्रकाशश्च लज्जितोभूत्वा चलति । किं च हे नरसिंह नरेश ! वसुधा यथार्थवती याचकभवनेषु निधीकृतेन । वायुजलाग्निसम्बन्धे तीव्रतपनेन भवान् तुलितः तदपि प्रकाशेन दिनं जितम् । एवं दानजले स्नात्वा सुवर्णं खिन्नं, निवासमेवं भूत्वा विदधाति ।

किस प्रकार निश्चय ही विना तृणों के मृगाङ्कमृग का जीवन होगा । इस प्रकार कृपालु नरसिंह तुम्हारा यश चन्द्रमा प्रकाश को तृण बना देता है ।

तुम्हारी इस कान्ति से सूर्य का प्रकाश मन्द पड़ गया है और प्रकाश लज्जित होकर चलता है । और क्या ? हे नरसिंह नरेश ! वसुधा यथार्थ नाम वाली हुई । जब याचक भवनों में इस धनराशि से खजाना हो गया ।

वायु, जल, अग्नि के विषय में तीव्र तपन से तौला गया तुम्हे । तो भी प्रकाश से तुमने दिन जीत लिया । इस प्रकार तुम्हारे दान के जल में स्नान करके हे नरसिंह नरेश ! तीर्थो में खिन्न सुवर्ण बस्ती की रचना करता है ।

projects to the minds not the quality nor even the action but at least (jugness); its genus. In short when an object has been mentioned by any name; its genus is by itself made mention of and thus the object has failed to delude itself of its genus, so that its complete merger into another object belonging to a different genus is impossible. That is why in hyperbole only one object is mentioned by a name. For example: (the moons are laughing). In

दिङ्मातङ्गैः सह स्पर्शं भ्रान्तितः प्राप्यशुद्धये ।
पुष्करं गाहते कीर्तिर्नृसिंह नृपते तव ॥६९॥
अध्यवसिति सिद्धत्वं प्रकृतस्यान्यत्वकल्पनं यद्वा ।
सम्बन्धासम्बन्धौ तद्व्यत्यासे भवेदतिशयोक्तिः ॥७०॥

अध्यवसिति सिद्धत्वमिति भेदे सत्यभेदः । प्रकृतस्यान्यत्वकल्पनमित्यभेदे भेदः । तद्व्यत्यासे सम्बन्धासम्बन्धावित्यसम्बन्धे सम्बन्धः सम्बन्धे त्वसम्बन्ध इति चतुर्धा भवत्यतिशयोक्तिः । अतिशयोक्तिरिति यौगिकत्वमस्याः । क्रमेण यथा—

---

हे नरसिंह नरेश ! तव कीर्तिः दिग्गजैः सह स्पर्श भ्रान्त्या शुद्धये पुष्करमवगाहयति । अतिशयोक्त्यलङ्कारः सः यत्र भेदेऽभेदः, अभेदे भेदः, तद् व्यत्यासे सम्बन्धेऽसम्बन्धोऽसम्बन्धे सम्बन्धो भेदेऽभेदाध्यवसितसिद्धत्वम् । प्रकृतस्यान्यत्वकल्पनमित्यभेदः । तद्व्यत्यासे सम्बन्धासम्बन्धयोः, असम्बन्धे सम्बन्धः, सम्बन्धेऽसम्बन्धः इति चतुर्धा भवत्यतिशयोक्तिः । अतिशयोक्तिरिति यौगिकत्वमस्याः । क्रमेणोदाहरणानि ।

---

हे नरसिंह नरेश ! तुम्हारी कीर्ति दिग्गजों के साथ स्पर्श करते भ्रम से शुद्धि के लिए पुष्कर का अवगाहन करती है ।

अतिशयोक्ति अलंकार वह है, जहाँ भेद होने पर अभेद हो, अभेद होने पर भेद हो, उसके व्यत्यास होने पर असम्बन्ध में सम्बन्ध, सम्बन्ध में असम्बन्ध है । भेद होने पर अभेद अध्यवसित सिद्धत्व है । प्रकृत के अन्यत्व से कल्पना अभेद में भेद है । उसके व्यत्यास में सम्बन्ध में असम्बन्ध दोनों में असम्बन्ध में सम्बन्ध, सम्बन्ध में तो असम्बन्ध है । कुल चार प्रकार की अतिशयोक्ति है । अतिशयोक्ति, अतिशयोक्ति में यौगिकता है । क्रमशः उदाहरण—

---

this sentence the word ( face ) has not been mentioned by any word though the meaning is that faces are smiling and they look as beautiful as the moon. So moons are laughing will be a case of (utprekṣā), because the object face has failed to merge its genus into the genus of the moon. This figure of speech is primarily of three types, (1) (utprekṣā) of cause (2) of action (3) and of result. Each one of these being subdivided into four subclasses, matter, quality, action and genus. These twelve classes may again be subdivided into implied one and nonimplied classes according as the word (Iva) (like) (Manye), as if have or have not been used. These twenty four classes are subdivided into two

**पल्लवतः कल्पतरोरेषः विशेषः करस्य ते वीर ।**
**भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ।।७१।।**

अत्र कर्णशब्दवाच्ययोरर्थयोर्भेदेऽप्यभेदनिर्देशः ।

**अशेषभोगाधारं त्वामक्रमात्तबलिश्रियम् ।**
**कलिङ्गेश्वर जानामि नूतनं पुरुषोत्तमम् ।।७२।।**

अत्रापि पुरुषोत्तमशब्दवाच्ययोरर्थयोरर्थयोर्भेदेऽप्यभेदो निर्दिष्टः ।।

**इदमन्यत् सारस्वतमन्यद्गाम्भीर्यमन्यदौदार्यम् ।**
**त्वं नरसिंह नरेश्वर न भवसि पैतामहीसृष्टिः ।।७३।।**

अत्र सारस्वतादीनामभेदेऽप्यन्यत्वेन भेदः ।

**स्थाने स्थाने कुलशिखरिषु त्वद्यशो गीयमानं,**
**सिद्धद्वन्द्वैस्तटतरुलताकेलिदोलाधिरुढैः ।**
**श्रुत्वा हर्षात् प्रमुषितगतावौपवाह्ये कुरङ्गे,**
**मन्दायन्ते मलयमरुतः श्रीनृसिंह क्षितीन्द्र ।।७४।।**

---

हे वीर ! हस्तस्य विशेषत्वं कल्पवृक्षपल्लवैः । एकः कर्णमलङ्करोति तथापरस्तु कर्णं तिरस्करोति ।

अत्र कर्णशब्दवाच्ययोरर्थयोर्भेदेऽप्यभेदनिर्देशः ।

हे कलिङ्गाधिपते ! त्वां नूतनं पुरुषोत्तमं जानामि । सम्पूर्णपृथिव्याः आधारं मन्ये बलिराज्यस्याप्यैश्वर्यं लङ्घितम् ।

अत्र पुरुषोत्तमशब्दवाच्ययोरर्थयोर्भेदेऽप्यभेदो दृश्यते ।

पाण्डित्यं तेऽनुपममन्यदेव । अन्यदेव गम्भीरत्वम् । अनुपममुदारत्वम् । हे नरसिंह नरेश ! त्वं ब्राह्मी रचना नासि ।

अत्र सारस्वतादीनामभेदेऽप्यन्यत्वेन भेदः । प्रत्येकस्थाने कुलपर्वतशिखरे सिद्धैः तव यशो गीयते । तटवृक्षेपुलताः क्रीडन्ति । एवं दोलाधिरुढैः सिद्धैः यशो गीयते । हे नरसिंह नरेश ! मलयवायुर्मन्दायते । हर्षात् श्रुत्वा प्रमुषितगतोपवाहितहरिणे स्थितिरेषास्ति ।

---

हे वीर ! तुम्हारा यह हाथ कल्पवृक्ष के पल्लव से बढ़कर है । एक कर्ण की शोभा बढ़ाता है और दूसरा दानी कर्ण का तिरस्कार करता है ।

इसमें वाच्य कर्ण शब्द के दोनों अर्थों में भेद होने पर भी अभेद का निर्देश है । हे कलिङ्गाधिपति ! आपको विष्णु (नवीन पुरुषोत्तम) जानता हूँ । सम्पूर्ण पृथ्वी का आधार तुम्हें समझता हूँ । बलि राजा का ऐश्वर्य भी आप द्वारा लङ्घित कर लिया गया ।

यहाँ भी पुरुषोत्तम शब्द वाच्य के दोनों अर्थों में भेद होने पर भी अभेद निर्दिष्ट है।

तुममें यह अनुपम विद्वता है। अनुपम गंभीरता है। अनुपम उदारता है। नर-सिंह नरेश ! तुम ब्रह्मा की सृष्टि नहीं हो।

यहाँ सारस्वत आदि के भेद में भी दूसरे से अभेद है। प्रत्येक स्थान पर कुल पर्वत शिखरों पर सिद्धों द्वारा तुम्हारा यश गाया जा रहा है। किनारे के वृक्षों पर लताएँ क्रीडा करती हैं। इस प्रकार दोलाधिरुढ़ सिद्धों द्वारा यश गाया जा रहा है। हे नरसिंह नरेश ! मलयमरुत मन्द पड़ जाते हैं। हर्ष से सुनकर चुराये गए अपवाहित हरिण में यह स्थिति होती है।

---

subclasses each according as the cause leading to an imagination; has or has not been mentioned. These fortyeight classes are again subdivided into two classes each. When an object is either imagined as another object or the absence of the another object (Bhāvābhimāna), (Abhāvābhimāna). Thus (utprekṣā) oxymoron is subdivided into ninety six classes in its pure forms. It canadmit of a numberless classes according to its blending with other figures of speech vidyādhara depends more upon Ruyyaka for his treatment of (utprekṣā) than that of Mammata.

12—Hyperbole, according to vidyādhara, occurs where the standard of comparison completely engulfs the object of comparison, including its genus and on this account here the ( Adhyavasāna ) is taken to be ( sidha ), the object of comparison is not referred to here through its action or attribute, but it presented through the attributes of the standard of comparison, This differentiates it from (utprekṣā). It should. however, be noted that vidyādhara has taken the line of Ruyyaka according to whom the action of engulfing is complete, if two objects even though different are qualified by identical attributes, this figure can be subdivided into five classes. 1—Identity in difference 2—Difference in identity. 3—Absence of relation inspite of actual relation subsisting between two objects. 4—Possibility of relation even through two objects how be related. vidyādhara seems to have taken

अत्र कुरङ्गेण मलयमरुतामसम्बन्धेऽपि सम्बन्धः ।

**त्वयीत्थं सर्वेभ्यो वितरति कलिङ्गेश्वर सदा,**
**न दानप्रस्तावो दिविचरतरूणां समजनि ।**
**यदि स्यादेतेषामपि विषमकण्डूविनयन,**
**क्षणारम्भेष्वैरावणकरटकाषव्यतिकरैः ॥७५॥**

अत्रामरतरूणां वितरणसम्बन्धेऽप्यसम्बन्धः ।

**इत्थमलङ्कारद्वयमध्यवसायाश्रयेण निर्णीय ।**
**अधुनालंकृतिवर्गं गम्यौपम्याश्रयं ब्रूमः ॥७६॥**

---

इह कुरङ्गेण मलयवायुनासम्बधेऽपि सम्बन्धः ।

हे कलिङ्ग नरेश ! सर्वदा सर्वेभ्यो दानाय तवैवं कल्पवृक्षस्य दानं प्रस्तावरूपेण न स्वीकृतम् । यद्येतेषामपि दानप्रस्तावो भवेत् कठिनकण्डूविनयेन क्षणमैरावतगजः स्वगण्डस्थलसंघर्षेण प्रस्तावितवान् ।

अत्र कल्पवृक्षाणां वितरणसम्बन्धेऽप्यसम्बन्धः ।

एवं द्वयोरलङ्कारयोरध्यवसायाश्रयेण निर्णीय सम्प्रति चौपम्याश्रयमलंकृतिवर्गं कथयामः ।

---

यहाँ कुरङ्ग से मलय वायु के असम्बन्ध होने पर भी सम्बन्ध है ।

हे कलिङ्ग नरेश ! सर्वदा सबको तुम्हारे इस प्रकार के दान देने पर कल्पवृक्षों का दान प्रस्ताव रूप में भी नहीं हुआ । यदि इसका भी दान हो तो कठिन खुजलाहट के लाने में क्षण भर में ऐरावत हाथी अपने गण्डस्थल के संवर्ष से दान प्रस्तावित हो जाता ।

यहाँ अमरतरु (कल्पवृक्ष) के दान के सम्बन्ध में भी असम्बन्ध है ।

इस प्रकार अध्यवसाय आश्रययुक्त दो अलंकारों का निर्णय कर अब गम्यौपम्य अलंकारों को कहते हैं ।

---

caution from the controversy on the fifth subdivision of hyperbole. As some of the big writers were opposed to the stand taken by Mammaṭa and Ruyyaka. Vidyādhara has taken it to be wiser to confine himself to four subdivisons only. It is very curious that vidyādhara has not dialated upon this figure like other court poets; but has given comparatively less space to the treatment of this figure of speech.

**औपम्यगम्यतायां प्रकृतानां तुल्यधर्मसम्बन्धे ।**
**अप्रकृतानामथवा चतुर्विधा तुल्ययोगिता ज्ञेया ॥७७॥**

तुल्यधर्मेण योगो जातोऽस्यामित्यन्वर्थनामा तुल्ययोगिता । धर्मस्तुद्विविधो गुणः क्रिया च । ताभ्यां सह प्रत्येकं प्रकृतानामेवाप्रकृतामेवाभिसम्बन्धादियं चतुर्धा । क्रमेण यथा—

प्रत्यर्थिपृथ्वीपतिमानमर्दनं, सेवासमायातनृपालपालनम् ।
कात्यायनीपादसरोजपूजनं, नैसर्गिकं ते नरसिंह भूपते ॥७८॥

अत्रारिमर्दनादीनां प्रकृतस्य राज्ञो धर्मत्वात् प्रकृतत्वम् । नैसर्गिकत्वं गुणः । अत्रैव विद्योतत इति पाठे क्रिया ॥

---

एवमध्यवसायाश्रययुक्तौ द्वावलङ्कारौ कथयित्वाधुना गम्यौपम्याश्रययुक्ता तुल्ययोगिता वर्णिता ॥ केवल प्रकृतानामथवाप्रकृतानां तुल्यधर्मयोगित्वे तुल्ययोगितालङ्कारो भवति । द्विविधो धर्मश्च गुणक्रिये च ताभ्यां गुणक्रियाधर्माभ्यां सह प्रत्येकं प्रकृताप्रकृतस्यैवाभिसम्बन्धकारणादियं चतुर्धा । तुल्यधर्मयोगेनोत्पन्नास्यां तुल्ययोगितालङ्कारः सार्थकः । क्रमेणोदाहरणानि—

हे नरसिंह नरेश ! तव कार्यं स्वाभाविकम् । शत्रूणां राज्ञामभिमानध्वंसनं शरणागतशत्रुनरेशाणां रक्षणं कात्यायनीचरणकमलस्य पूजनं तव स्वाभाविकं कर्म ।

अत्र शत्रुविनाशादीनां प्रकृतस्य राज्ञः धर्मत्वात् प्रकृतत्वे । नैसर्गिकत्वं गुणः । अत्रैव विद्योतते इति पाठे क्रिया ॥

---

औपम्याश्रय युक्त तुल्ययोगिता अलंकार होता है । यह गुण क्रिया धर्म के साथ प्रत्येक के प्रकृत एवं अप्रकृत के ही अभिसम्बन्ध से चार प्रकार का होता है । तुल्यधर्मयोग होने पर उत्पन्न तुल्ययोगिता अलंकार का नाम सार्थक है । गुण एवं क्रिया दो प्रकार का धर्म है । उनके साथ प्रत्येक प्रकृत अथवा अप्रकृतों के ही सम्बन्ध से यह अलंकार चार प्रकार का होता है । क्रमशः उदाहरण—

हे नरसिंह नरेश ! तुम्हारा कार्य स्वाभाविक है । शत्रु राजाओं के मान को चूर्ण करना, सेवा में आए राजाओं का पालन करना कात्यायनी के चरण कमल की पूजा करना आदि तुम्हारे स्वाभाविक कार्य हैं ।

इसमें शत्रुओं के मर्दन आदि के प्रकृत राजा के धर्म से प्रकृतत्व है । नैसर्गिकत्व गुण है । यहीं विद्योतते इस पाठ में क्रिया का भी योग है ।

---

13–14—Tulyayogitā and Dīpaka—Where the qualities and actions of two objects are identical and each attribute is mentioned; Just one, it is a case of both ( Tulyayogitā ) and (Deepaka).

**गर्जद्दुर्जयशत्रुसैन्यजलधेर्मन्थाय विद्वज्जना-**
**भीष्टानां परिपूरणाय वसुधावष्टम्भदानाय च ।**
**श्रीमन्नुत्कलभूमिपाल भवतः सृष्टे भुजे वेधसा,**
**व्यर्थः सम्प्रति मन्दरः सुरतरुः सर्पाधिपश्चाभवत् ।।७९।।**

अत्र मन्दरादीनामुपमानत्वादप्राकरणिकत्वम् । व्यर्थत्वं गुणः । अत्रैव निन्द्य इति पाठे क्रिया । श्लेषप्रतिभोत्थापिताप्येषा संभवति । यथा—

**अलङ्कारावबद्धानि काव्यान्यरिकुलान्यपि ।**
**नरसिंह महीपाल कीर्तिं पल्लवयन्ति ते ।।८७।।**
**मिलितानां तु तथैषां दीपकमित्युच्यते षोढ़ा ।**
**एतदलंकृतियुगलं कथितं तावत् पदार्थगतत्वेन ।।८१।।**

---

यदा ब्रह्मणा तव भुजा रचिता हे राजन् वीर नरसिंह देव ! गर्जत्दुर्जयशत्रु-सेनासागरस्य मन्थनाय, तदा समुद्रमन्थनाय मन्दराचलो व्यर्थः । विदुषां मनोरथानां पूर्तये कल्पवृक्षोऽपि व्यर्थः । वसुधावष्टम्भो दानाय च शेषनागश्च व्यर्थः । इह मन्दरा-चलादीनामुपमानगतत्वादप्राकरणिकत्वम् । व्यर्थत्वं गुणः । इहैव निन्द्य इति पाठे क्रिया । श्लेषोत्थापिताप्येषा संभवति । उदाहरणमत्र—

हे नरसिंह नरेश ! भवतः कीर्तिः पल्लवयति । अलङ्कारयुक्तेन काव्यं, शत्रु-कुलेन संयुक्तं यशः पल्लवयति । मिलितसमस्तप्रकृताप्रकृतानां तुल्यधर्मयोगेन सम्बन्धेन च वाक्यस्यादौ मध्ये चान्ते गुणक्रियाभिः सह दीपकस्य षड्भेदा भवन्ति । साधर्म्येण गुणक्रिये च । तयोरादिमध्यान्तभेदैः षड्भेदाः दीपकालङ्कारस्य भवन्ति ।

---

ब्रह्मा के द्वारा आप की भुजा जब बना दी गई, तो हे राजन् वीर नरसिंह देव! गर्जती हुई कठिनता से जीती जाने वाली शत्रु सेना सागर को मन्थन करने को जब भुजा बन गई, तब समुद्र मन्थन हेतु मन्दराचल व्यर्थ हो गया । विद्वानों के मनोरथ पूर्ति के लिए कल्पवृक्ष व्यर्थ हो गया । और वसुधा को स्थिर करने की क्षमता वाले शेषनाग व्यर्थ हो गए ।

यहाँ मन्दराचल आदि के उपमानत्व से अप्राकरणिकत्व है । व्यर्थत्व गुण है । यहीं निन्द्य इस पाठ में क्रिया है । श्लेष से उत्थित भी यह संभावना पूर्ण है । जैसे हे नरसिंह नरेश ! आप की कीर्ति पल्लवित है । अलंकारयुक्त काव्य शत्रु कुल से भी कीर्ति पल्लवित हो रही है ।

मिलित समस्त प्रकृत अप्रकृत के तुल्य धर्म सम्बन्ध होने पर भी होता है । वाक्य के आदि, मध्य तथा अन्त तीनों. गुण एवं क्रिया में होने से कुल छः प्रकार का दीपक अलंकार होता है । साधर्म्य गुण क्रिया रूप दो हैं । उसके एक के तथा दूसरे के आदि, मध्य अन्त भेद से दीपक छः हुए ।

अत्रोपमागर्भत्वे सत्यपि वाच्यालङ्कारमुखे नैव चारुत्वम् । अतो न ध्वनित्वेन व्यपदेशः । किं तु गुणीभूतव्यङ्ग्यत्वेन । एषां प्रकृतानामप्रकृतानाम् । तथेति ग्रहणं गुणक्रियायोग इत्याद्यनुवृत्त्यर्थम् । संभूयवर्तमानानि प्रकृताप्रकृतान्यत्र प्रयोजकानि । अत एवोपमानोपमेयभावस्य वास्तवत्वम् । इवादेरनुपादानादौपम्यस्य गम्यत्वम् । परमार्थतो वाक्यार्थगतत्वेनास्यालङ्कारस्य संभवेऽप्येकया क्रिययानेकवस्तुनो भिन्नस्य सम्बन्धादौचितीवशेन पदार्थगतत्वेनाभिधानम् ।

इहोपमागर्भत्वेऽपि वाच्यालङ्कारप्रमुखतयैव सौन्दर्यम् । अतो ध्वनित्वं नोक्तम् । किंतु गुणीभूतव्यङ्ग्यत्वेनोक्तं युक्तम् । एतेषां प्रकृताप्रकृतानां प्रकृताप्रकृतयोगे तथेति ग्रहणक्रियायोग इत्याद्यनुवृत्त्यर्थम् । उत्पन्नप्रकृताप्रकृतानि विद्यमानान्यत्र प्रयोजकानि । अत एवोपमानोपमेयभावस्य वास्तविकता । इवादेरनुपादानादौपम्यगम्यत्वम् । परश्चार्थेन वाक्यार्थगतत्वेनेहास्यालङ्कारस्य संभावनायामप्येकक्रियायानेकवस्तुभिन्नत्वेनौचित्यवशात् पदार्थगतत्वस्याभिधानम् ।

यहाँ उपमागर्भत्व होने पर भी वाच्य अलंकार प्रमुखता से ही सुन्दर है । अतः ध्वनित्व नहीं कहा गया है । परन्तु गुणीभूत व्यङ्गत्वयुक्त कहा गया है । इन प्रकृतों, अप्रकृतों के प्रकृतों एवं अप्रकृतों से योग होने पर उस प्रकार ग्रहण होने पर गुण क्रिया योग इस प्रकार पहले की अनुवृत्ति आयेगी । उत्पन्न, वर्तमान प्रकृत अप्रकृत यहाँ प्रयोजक है । अतएव उपमानोपमेय भाव की वास्तविकता है । 'इव' आदि शब्द के उपादान होने से औपम्य गम्यता हैं । परन्तु अर्थ से वाक्यार्थगतत्व से इस दीपक अलंकार की संभावना में भी एक क्रिया से अनेक वस्तु से भिन्नता के सम्बन्ध से औचित्यवशात् पदार्थगतता का अभिधान है ।

If all of the objects are described or (Prakṛita) object intended to be described directly or all the objects are ( Aprakṛita ) objects sought to be described indirectly, it becomes a case of (Tulyayogitā). But if one of the objects is described, is ( prakṛita ) and all others are (Aprakṛita); it is a case of (Deepaka). In both the figures similarity between two objects is always implied and never described by a word connoting similarity. Vidyādhara agrees with (Dhwanikāra that inspite of similarity being suggested here the main point of beauty or aesthetic excellence does not arise out of this suggested element. on the other hand it arises out of the commonness of attribute within two objects which is definitely mentioned.

प्रकृताप्रकृतान्यतरसांनिध्यमधितिष्ठन्नपि साधारणो धर्मः प्रसङ्गेनान्यदपि दीपयतीति दीपकम् । यदुक्तं विन्द्वलङ्कारे कविचक्रवर्तिना हरिहरेण—

यः प्रस्तुताप्रस्तुतयोर्वर्गे कुत्रापि संगतः ।
समानो धर्म एकोऽन्यद्दीपेत्तु दीपकम् ॥८२॥

इति । साधर्म्यस्य तु वाक्यादिमध्यान्तगामित्वादेतत् षट् प्रकारम् । क्रमेण यथा

करोति न मुदं कस्य नरसिंह नरेश्वर ।
राकाचन्द्रमसो बिम्बं पुण्डरीकं यशस्तव ॥८३॥
क्षीरोदवीची कमलासखेन प्रकाशते भानुमता दिनश्रीः ।
द्यौः पारिजातेन कलिङ्गनाथ निशा शशाङ्केन मही त्वया च ॥८४॥
वीरनृसिंहकवित्वं चम्पकसौरभ्यमिन्दु सौन्दर्यम् ।
गङ्गाजलमाधुर्यं कस्य न भुवनेषु सर्वदा मान्यम् ॥८५॥

एवं गुणयोगेऽपि—

वाक्यार्थगतत्वेन स्यात् सामान्यं पृथग्विनिर्दिष्टम् ।
यस्यां द्विधा तज्ज्ञैः सा प्रतिवस्तूपमा समायाता ॥८६॥

---

प्रकृताप्रकृतयोरेकस्य संयोगेऽपि साधारणधर्म प्रसङ्गवशादन्येनापि दीप्तः दीपकालङ्कारः ।

यदुक्तं कविचक्रवर्तिहरिहरेण—'यः प्रस्तुताप्रस्तुतयोः कुत्रापि संमतः समानो धर्म एकोऽन्यद्दीपयति तत्तु दीपकम् । साधर्म्ये तु वाक्यस्यादौ मध्ये चान्ते भवति । दीपकालङ्कारस्य षड् भेदाः । क्रमेणोदाहरणानि—

हे नरसिंह नरेश ! भवान् सर्वेषांमुदं करोति । तव यशः कमलमिव रात्रौ चन्द्रविम्बमिव च । यथा—

क्षीरसागरः लक्ष्म्या विष्णुना च, दिनं सूर्येण शोभते प्रकाशते च । स्वर्गः कल्पवृक्षेण, रात्रिश्च चन्द्रेण प्रकाशते । तथैव हे कलिङ्गाधिपते । पृथ्वी भवतो यशसा प्रकाशते ।

वीरनरसिंहनरेशस्य काव्यं चम्पकपुष्पं सौगन्ध्यमिव, चन्द्रचारुत्वमिव, गङ्गाजलमाधुर्यमिव भुवनेषु सदा मान्यम् ।

एवं गुणसंयोगेऽपि ।

यत्रोपमानोपमेययोः वाक्ययोः एक एव समानो धर्मः तेन पर्यायशब्देन पृथग्निर्दिष्टः तत्र प्रतिवस्तूमालङ्कारो भवति । साधर्म्यवैधर्म्याभ्यां द्विधा ।

---

प्रकृत अप्रकृत दोनों में से एक के संयोग रहते हुए भी साधारण धर्म प्रसङ्गवश अन्य से भी दीप्त होता है । यह दीपकालङ्कार है । जैसा विन्दु अलंकार में कवि चक्रवर्ती हरिहर द्वारा कहा गया है । जो प्रस्तुत अप्रस्तुत दोनों के वर्ग में कहीं भी

संगत हो, समान धर्म एक दूसरे को दीप्त करता हो, वह दीपकालंकार है। साधर्म्य तो वाक्य के आदि मध्य तथा अन्त गामी होने से छः प्रकार का दीपक है। क्रम से उदाहरण—

हे नरसिंह नरेश ! आप किसे अच्छे नहीं लगते हैं। अर्थात् सभी को प्रसन्न करते हैं।

आपका यश कमल के समान है। रात्रि के चन्द्रमा के बिम्ब सदृश है। जैसे—क्षीर सागर की लहर, लक्ष्मी के पति विष्णु से, दिन की शोभा सूर्य से प्रकाशित है। स्वर्ग कल्प वृक्ष से रात्रि चन्द्रमा से प्रकाशित है। वैसे ही हे कलिङ्गाधिपति पृथ्वी आप से प्रकाशित है।

वीर नरसिंह नरेश की कविता चम्पा की सुगन्ध, चन्द्रमा की सुन्दरता गङ्गा जल की मधुरता (भुवन) संसार में किसे मान्य नहीं है। अर्थात् सभी को मान्य है।

इस प्रकार गुण के संयोग में भी देखें।

जहाँ उपमान और उपमेय वाक्य में एक ही समान धर्म से पर्याय शब्द द्वारा पृथक् निर्दिष्ट होते हों, वहाँ प्रतिवस्तूपमा होती है।

---

Therefore these too, two figures are the cases of (subordinate suggestion). In this context he refers to the arguments advanced by Harihara, a great poet and poetician and raises one important point. It is that in both ( Deepaka ) and ( Tulyayogitā ) even though the attribute mainly applies to one object alone. The language has special force which makes each attribute to be equally applicable to the two or more objects compared here, that similarity takes the shape of objective similarity. It can be divided into six classes. 1—Where the attribute common to two objects has been used at the time, beginning, middle or end of the sentences; this makes three classes considering that each, attribute of two types namely it may either be an action or a quality. These three types can be multiplied into six.

15+16—(Prativastūpamā) and (Dṛiṣṭānta)–Where the standard of comparison and the object of comparison both individually extend to one sentence each, i. e. neither of them is confined to one word alone and there is a common attribute between these two (Vākyārtha); it is a case of (Prativastūpamā) and (Dṛiṣṭānta)

पदार्थगतालङ्कारनिरूपणानन्तरं वाक्यार्थगतालङ्कारनिरूपणावसरः । पदार्थारब्धत्वाद्वाक्यार्थस्य । वस्तुशब्दस्य वाक्यार्थाभिधायित्वात् प्रतिवाक्यार्थमुपमेति सार्थकताभिधानेयं द्विधा । साधर्म्येण वैधर्म्येण च । क्रमाद्यथा—

**दातारः कति न प्रभाकरकरक्रीडासखीनां दिशां,**
**चक्रे किं तु नृसिंहपार्थिवतुलामेकोऽपि नारोहति ।**
**अभ्यास्ते न परोऽपि कश्चन मणिश्चिन्तामणिप्रक्रिया,**
**मब्धिः क्षीरपयोधिभङ्गिमचलः कैलासहेलामपि ॥८७॥**

---

पदार्थगतालंकाराणां निरूपणस्य पश्चात् वाक्यार्थगतालंकाराणां निरूपणमिदानीं युक्तम् । पदार्थारम्भात् वाक्यार्थारम्भः । वस्तुशब्दस्य वाक्यार्थाभिधानात्, प्रतिवाक्यार्थमुपमेति सार्थकत्वाभिधानेऽस्याः प्रतिवस्तूपमायाः द्वौ भेदौ । प्रतिवस्तूपमा साधर्म्यवैधर्म्याभ्यां द्विधा । क्रमेण निम्नोदाहारणानि नहि नरसिंहनरेश इव कोऽप्यस्ति । दातारः कति न सूर्यकरक्रीडासखीनां दिशां चक्रे । कोऽपि मणिः चिन्तामणिप्रक्रियां नानुकरोति । कोऽपि सागरः क्षीरसागरस्य भङ्गिं न विधातुं समर्थः । कोऽपिपर्वतः कैलासपर्वतस्य लीलां कर्तुं न शक्नोति ।

---

पदार्थगत अलंकार निरूपण के वाद वाक्यार्थगत अलंकार के निरूपण का अब समय है । पदार्थ के आरम्भ से वाक्यार्थ का आरम्भ है । वस्तु शब्द के वाक्यार्थ के अभिधान से वाक्यार्थ के प्रति उपमा है । इस प्रकार इस सार्थकता के अभिधान में इस प्रतिवस्तूपमा के दो प्रकार हैं । प्रतिवस्तूपमा साधर्म्य एवं वैधर्म्य क्रम से उदाहरण निम्न है ।

दाता कितने हैं ? सूर्य किरणें सखी के क्रीडा स्थान को प्रकाशित नहीं किया । किन्तु एक भी नरसिंह के समान नहीं है । दूसरा कोई भी ठहरता नहीं है । कोई मणि चिन्तामणि के कार्य के समान नहीं कार्य करती । समुद्र क्षीरसागर का अङ्ग स्वरूप है । कैलास की हेला को भी ऐसा नहीं कहा जा सकता है ।

---

where the attributes of two ideal objects are identical and should, therefore, have been stated in identical words; but they are stated in different words to avoid repetition, it is a case of ( Prativastūpamā).

Where the attributes of two ideal objects are not identical, but similar, it is a case of (Dṛiṣṭānta) figure. Both these figures can each be subdivided into two classes. 1—Where the identical or similar attributes have been positively stated and 2 – Where

अत्रारोहणमध्यासनं चेत्येक एव धर्म उपमेयवाक्ये उपमानवाक्ये च पर्यायपदेनो नतिबद्धः ।

याञ्चा दैन्यपराङ्मुखी भवतु वो जिह्वा नृपेष्वर्थिनः,
सर्वस्यापि कलिङ्गभूपतिरिह क्षेमङ्करः सेव्यताम् ।
तत्तादृक् फलभारवैभवनमन्नीरन्ध्रशाखाभरे
मन्दारे पुरतः स्थिते किमपरैर्लक्षेण वृक्षैरपि ॥८८॥

अत्र मन्दार एवं सेव्यतामिति प्रतीतिरस्तीत्येक एव साधारणो धर्म उभयत्रापि वर्त्तते ।

संतोषकरणनिपुणो नरसिंह नरेश्वर त्वमखिलस्य ।
नानन्ददानचतुरश्चिन्तामणिमन्तरेण कोऽप्यस्ति ॥८९॥

अत्र व्यतिरेकमुखेनाभिधानाद्वैधर्म्यम् ।

बिम्बप्रतिबिम्बत्वं यद्युपमानोपमेययोर्भवति ।
धर्मस्यापि तदानीं दृष्टान्तः कथ्यते द्विविधिः ॥९०॥

---

अत्रारोहणमध्यासनं चेत्येक एव धर्म उपमेय वाक्ये उपमान वाक्ये च पर्यायेणोपनिबद्धः ।

इह सर्वैरपि कल्याणकरः कलिङ्गनरेशः सेव्यः । तव जिह्वा दैन्यपराङ्मुखी भवतु । अन्येषु राजसु कामिनः याचकाश्चादीनाः न भवन्तु । अन्यैः वृक्षैः किं प्रयोजनम् । यदा फल भारावनतकल्पवृक्षः पुरतः स्थितः ।

अत्र कल्पवृक्षः (मन्दारः) एव सेव्यः । अस्यैव प्रतीतिः । अस्मिन्नेक एव साधारणधर्मे द्वयोः स्थानयोः विद्यमानः हे नरसिंह नरेश ! भवान् सम्पूर्णलोकान् तोषयति । संतोषकरणे निपुणः । चिन्तामणिं विना न किमपि वस्तु यत् आनन्द दाने समर्थमस्तु । इमे गुणाः चिन्तामणिनरसिंहयोर्द्वयोरेव ।

अत्र व्यतिरेकमुखेनाभिधानात् वैधर्म्यम् ।

न तु केवलधर्मिणो धर्मस्यापि विम्बप्रतिविम्बभावेन यत्र निर्देशो भवति । तत्र दृष्टान्तालंकारो भवति । साधर्म्यवैधर्म्यभेदाभ्यां द्वौ भेदौ ।

---

यहाँ आरोहण और अध्यासन का एक ही धर्म उपमेय वाक्य में और उपमान वाक्य में पर्याय पद से सम्बद्ध है ।

सभी के कल्याण करने वाले कलिङ्ग नरेश का सेवन करें । तुम लोगों की जीभ जो अन्य राजाओं से मांगती हैं, कामना करती हैं, मांगने में दीन स्वरूप होकर पराङ्मुख हों । अन्य वृक्षों से क्या प्रयोजन ? जब वैसे ही फल के भार से झुके हुए वृक्षों सहित कल्प वृक्ष सामने स्थित हो ?

अत्र दृष्टान्तालङ्कारमहिम्नैव बिम्बप्रतिबिम्बभावेन प्रतीयमानमुपमानोपमेयभावमनादृत्य दृष्टान्तोदाहरणानि दर्शनरूपाः शब्दाः कविना न प्रयोक्तव्याः। पौनरुक्त्यापत्तेः। दृष्टोऽन्तो निश्चयो यत्रेति यथार्थाभिधानम्। साधर्म्यवैधर्म्याभ्यां भवन्नुभयथा भवति। क्रमेण यथा—

त्वमसि रिपुनराधिनाथमाथ प्रकटभुजार्गलविक्रमो नृसिंहः।
मदकरटिकठोरकुम्भपीठीदलनदुरन्तनखाङ्कुरो मृगेन्द्रः ॥९१॥

---

इह दृष्टान्तालंकारमहिम्नैव बिम्बप्रतिबिम्बभावेन प्रतीयमानोपमानोपमेयभावस्यानादरं कृत्वा दृष्टान्तस्योदाहरणस्य निदर्शनस्य शब्दोपयोगः कविना न प्रयोक्तव्यः।

पौनरुक्त्यकारणात्। यत्रान्तनिश्चयो दृष्टः, तत्र यथार्थनाम दृष्टान्तः। अयं च साधर्म्यवैधर्म्याभ्यां द्विविधो दृष्टान्तालंकारः। क्रमेणोदाहरणानि––

हे नरसिंह नरेश! ते भुजार्गलारूपा, यस्याः पराक्रमो विदितः। भवानरिमस्तकानां दलने समर्थः। यथा सिंहो हस्तिनीमदयुक्तमस्तकस्य कठोरगण्डस्थलस्य विदारणे कठिननखाग्रभागस्योपयोगं करोति।

---

यहाँ मन्दार (कल्पवृक्ष) का ही सेवन करें। इसकी प्रतीति से एक ही साधारण धर्म दोनों स्थानों पर विद्यमान है। हे नरसिंह नरेश ! आप सम्पूर्ण लोगों को सन्तुष्ट करने में चतुर हैं। चिन्तामणि के विना कौन ऐसी वस्तु है ? अर्थात् कोई नहीं। जो आनन्द एव दान देने में दक्ष हैं। ये गुण नरसिंह एवं चिन्तामणि दोनों में हैं।

यहाँ व्यतिरेक मुख से अभिधान होने के कारण वैधर्म्य हुआ। केवल धर्मी का ही नहीं धर्म का भी बिम्ब प्रति बिम्ब भाव से जहाँ निर्देश होता है, वहाँ दृष्टान्तालंकार है। साधर्म्य एवं वैधर्म्य भेद से यह दो प्रकार का होता है।

यहाँ दृष्टान्तालंकार की महिमा से ही बिम्बप्रतिबिम्ब भाव से प्रतीयमान उपमानोपमेय भाव का अनादर करके दृष्टान्त के उदाहरण के निदर्शन रूप शब्द कवि द्वारा प्रयुक्त करने योग्य नहीं है। इससे पुनरुक्तता होती है।

जहाँ अन्त निश्चय देखा गया है, वह यथार्थ नामवाला दृष्टान्त है। साधर्म्य वैधर्म्य भेद से दो प्रकार का यह दृष्टान्तालंकार होता है। क्रम से उदाहरण––

हे नरसिंह ! तुम्हारी भुजा अर्गला रूप है, जिसका पराक्रम प्रकट है। तुम शत्रु नरेश के मस्तक को चीरने में समर्थ हो। जैसे—सिंह हस्तिनी के मदयुक्त मस्तक के कठोर गण्ड स्थल को विदीर्ण करने में कठिन नखों के अग्र भाग का उपयोग करता है।

अपि सहजमनोहरं कवित्वं भवति नृसिंहगुणान्वितं मनोज्ञम् ।
अकुचकलशसंगतं तरुण्याः कलयति मौक्तिकदाम दुर्भगत्वम् ।।९२।।
प्रतिबिम्बनस्य करणं संभवता यत्र वस्तुयोगेन ।
गम्यमसंभवता वा निदर्शना सा द्विधाभिमता ।।९३।।

पूर्वत्र प्रतिबिम्बनस्य प्रक्रान्तत्वादिहैव लक्षणमुचितमेतस्याः । वस्तुयोगेन वस्तु-सम्बन्धेन । द्विधा संभवद्वस्तुसम्बन्धासंभवद्वस्तुसम्बन्धा च । क्रमेण यथा—

यदप्येकाकिन्यो यदपि रमणीया युक्तयस्तथापि,
स्वच्छाश्चेद्धति जगति श्लाघनधुराम् ।
इहार्थे प्रामाण्यप्रकटनपराकीर्तिरनिशं,
भुजङ्गानां लोके चरति नरसिंह क्षितिपते ।।९४।।

हे नरसिंह नरेश ! स्वाभाविकरूपेणापि मनोहारि काव्यं गुणैः संश्लिष्टं सुन्दरं च मौक्तिकमालानां सौभाग्यं न, या मालातरुणीकुचकुम्भसंस्पर्शराहित्येनेतस्ततः शोभतेऽवलम्बते च । यत्र वस्तनः सम्बन्धेन प्रतिबिम्बनं, तत्र निदर्शनालंकारः । तत्र संभववस्तुसम्बन्धासंभववस्तुसम्बन्धेन द्वौ भेदौ स्तः । पूर्वं प्रतिबिम्बनस्य प्रक्रान्तत्वेनात्रैवलक्षणत्वं समीचीनम । वस्तुयोगेन वस्तुसम्बन्धेन द्विविधोऽयं निदर्शनालंकारः । संभववस्तुसम्बन्धेनासंभववस्तुसम्बन्धेन च क्रमेणोदाहरणानि—

एकाकिन्यो रमणीया युवतयः तथापि स्वच्छाः यदि जगति प्रशंसाधुरां धारयन्ति, इहार्थे हे नरसिंह नरेश ! भवतः प्रमाणप्राकट्ययुक्तं यशः नागलोके सदा संचरति ।

---

हे नरसिंह ! स्वाभाविक रूप से मनोहर भी कविता गुणों से युक्त एवं सुन्दर होती है । मोती की माला का दुर्भाग्य है, जो तरुणी के स्तन कुंभ के स्पर्श से रहित होकर इधर-उधर लटकते हुए शोभा पा रहा है ।

जहाँ वस्तु के सम्बन्ध द्वारा प्रतिबिम्ब हो, वहाँ निदर्शनालंकार सम्भव वस्तु सम्बन्ध एवं असंभव वस्तु सम्बन्ध दो भेद वाला होता है । क्रमशः उदाहरण –

एकाकिनी जो भी रमणीय युवतियाँ हैं, तथापि स्वच्छ हैं, यदि जगत में प्रशंसा की धुरा को धारण करती हैं, अर्थतः हे नरसिंह नरेश ! आप का प्रमाण प्राकट्य युक्त यश नागलोक में सदा संचरण करता है ।

---

such attributes have been negatively stated. It should be noted here that the objects compared in these two figures are always ideal, so that the question of real or objective similarity between such objects; is out of the question. Therefore similarity here is only a supposed one and is given a technical name (Bimbaprati-

अत्र स्वच्छत्वाद्भुजङ्गलोकभ्रमन्त्याः कीर्तेरुक्तार्थप्रामाण्यप्रकटनपरत्वेन सम्बन्धः प्रतिबिम्बनमाक्षिपति ।

दृप्यद्दुर्वारवैरिक्षितिपतिवनितालोचनाम्भोरुहेन्दुः,
क्रीडासौधं कलानां जगति गजपतिर्नन्दतु श्रीनृसिंहः ।
यत् कीर्तिक्रोडलीनं कलयति गगनं क्षीरनीराकरान्त,
र्निद्राणस्य स्रवन्तीसहचरदुहितुः प्राणनाथस्य लीलाम् ॥९५॥

अत्र भगवतः श्रीकृष्णस्य लीलया सम्बन्धः कथमपि गगनस्य न संभवतीति लीलामिव लीलामवगमयति । एषा पदार्थवृत्तिरुदाहृता । वाक्यार्थवृत्तिर्यथा—

---

अत्र स्वच्छतायाः नागलोके परिभ्रमन्त्याः कीर्तेरुक्तार्थप्रमाणप्राकट्येन सम्बन्धः प्रतिबिम्बनस्याक्षेपः ।

श्रीनरसिंहो गजेन्द्रः आनन्दितोऽस्तु । दर्पयुक्तकठिनतया निवारणीयशत्रुनरेशाणां स्त्रीणां कुमुदिनीस्वरूपनेत्रविकासने समर्थः चन्द्र इव नरसिंहनरेशः संसारे कलानां क्रीडासौधं शोभितम् । यस्य नृपस्य कीर्तेः क्रोडे लीनाकाशः क्षीरसागरस्यान्तरे शयानस्य परमेश्वरस्य लीलां धारयति ।

इह भगवतः श्रीकृष्णस्य लीलया सम्बन्धः केनापि प्रकारेणाकाशेन सह न संभवति । एवंविधलीलेव लीलायाः ज्ञानम् । पदार्थवृत्तेरुदाहरणम् । वाक्यार्थवृत्तेरुदाहरणमिह

---

यहाँ स्वच्छता से नागलोक में भ्रमण करती हुई कीर्ति के उक्त अर्थ के प्रमाण के प्राकट्य से सम्बद्ध प्रतिबिम्बन का आक्षेप है ।

गजेन्द्र श्रीनरसिंह आनन्दित हों । दर्प से युक्त कठिनता से निवारण करने योग्य शत्रु राजाओं की स्त्रियों को कुमुदिनी रूपी नेत्र को खिला देने में समर्थ चन्द्रमा के समान नरसिंह नरेश हैं । संसार में कलाओं के कीडा महल शोभित हैं । जिसके यश के क्रोड में लीन आकाश क्षीरसागर के भीतर सोये हुए परमेश्वर की लीला को धारण करता है ।

यहाँ भगवान श्रीकृष्ण की लीला से सम्बद्ध किसी प्रकार से आकाश का संभव होना नहीं है । इस प्रकार की लीला के समान लीला का ज्ञान कराता है । यह पदार्थ वृत्ति का उदाहरण हुआ । वाक्यार्थ वृत्ति जैसे—

---

bimbabhāva). Which might in some cases include (Vastuprativastubhāva) which by itself i. e. in absence of (Bimbapratibimbabhāva) is rare to find.

17—Nidarśanā—This figure of speech occurs, where two objects stated by words or sentences have unimplied similarity

वीरनरसिंहतेजः स्तुतिवर्त्मनि यः प्रणेतुमभिलषति ।
अभिनवकमलाचीकुहरे विनिवेशयेत् स वडवाग्निम् ।।९६।।

अत्र दृष्टान्तालङ्कार इति चेन्न । परस्परनिरपेक्षवाक्यार्थगतत्वेन तस्य प्रगल्भमानत्वात्। अत्र पुनः परस्परसापेक्षत्वं वाक्यार्थयोरिति निदर्शनैव भवितुमर्हति । इयं पुनः प्राकरणिकधर्मस्याप्राकरणिकगतत्वेनांसभवे निरचायि चिरन्तनैः । वस्तुतस्तु विपर्ययेऽपि संभवति । उभयथापि सम्बन्धानुपपत्तेः समानत्वात् । क्रमेण यथा—

---

वीरनरसिंहनरेशस्य तेजः स्तुतिमार्गे यत्, नम्रतामभिलषति । नूतनकमलस्य शोभाकुहरे तत् वडवाग्नेः विनिवेशनं कारयति ।

इह दृष्टान्तालंकारः । इति न युक्तम् । परस्परनिरपेक्षवाक्यार्थगतत्वेन तत्कथनं कारणम् । पुनः परस्परसापेक्षत्ववाक्यार्थयोः निदर्शनाभवितुमर्हति । इह पुनः प्राकरणिकधर्मस्याप्राकरणिकगतत्वेनासंभवे चिरन्तनैः निश्चीयते । वस्तुतस्तु विपर्ययेऽपि संभावनास्ति । युगलस्यापि सम्बन्धानुपपत्तेः समानतायाः कारणात् क्रमेणोदाहरणम् ।

---

वीरनरसिंह नरेश का तेज स्तुति के मार्ग में जो नम्र होने की इच्छा रखता है । नये कमल की शोभा कुहर में वह वडवाग्नि का विनिवेशन कराता है ।

यहाँ दृष्टान्तालंकार है, ऐसी बात नहीं है । परस्पर निरपेक्ष वाक्यार्थगतत्व से उसका कथन होता है । यहाँ पुनः परस्पर सापेक्षत्व दोनों वाक्यार्थ में निदर्शना ही होने योग्य है । यहाँ पुनः प्राकरणिक धर्म को अप्राकरणिकगतत्व से असंभव होने पर प्राचीनों द्वारा निश्चित किया जाता है । वास्तव में तो विपर्यय में इसकी संभावना है । दोनों प्रकार के भी सम्बन्ध की अनुपपत्ति की समानता के कारण यह है । क्रमशः जैसे—

---

subsisting between the two, whether they are related or unrelated to each other. Besides this similarity must be based on reflection and counterreflection of relationship which means that the base of similarity should not be the objects themselves, but their qualities and actions, which according to Indian logic can not be taken as bases of similarity secondly by no objeet should share the qualities and actions of the standard of comparison.

या चण्डांशुमयूखमण्डलमहाहंकारसर्वङ्कषा,
ख्यातावीर नृसिंह देव जगति प्रौढिः प्रतापस्य ते।
त्वद्धाटीचकिताः पलाय्य विपिने वासं परः कोट्यः,
कुर्वन्तोऽनुभवन्ति संततमिमां दावानले विद्विषः ॥९७॥

अत्र प्रतापः प्रकृतस्तद्धर्मस्य प्रौढेरप्रकृते दावानले कुतः संभव इत्युपमानोपमेयभावः प्रतीयते।

यः कैलासनिवासधूर्जटिजटाकोटीरतारापति,
ज्योत्स्नाचुम्बितसिद्धसिन्धुलहरीगर्भत्विषां विभ्रमः।
उद्वेलाम्बरचूडकालिमकथानिर्मन्थनोत्कन्धरः,
सोऽयं वीर नृसिंह देव नृपते त्वत्कीर्तिषु प्रेक्ष्यते ॥९८॥

अत्र सिद्धसिन्धुलहरीगर्भत्विषोऽप्रकृतास्तद्धर्मस्य विभ्रमस्य प्रकृतासु कीर्तिष्वसंभवदौपम्यं गम्यम्।

---

या प्रचण्डसूर्यकिरणमण्डलमहाहंकाररूपेण प्रसिद्धा बलदा, सर्वेभ्यः हे वीर नरसिंह देव! संसारे तव प्रतापस्य बलम्। ते शत्रवः प्रतापेन चकिताः। वनं पलायिताः। वासं चानुभवन्ति सदैव तत्रापि। तद्धर्मस्य प्रौढेरप्रकृते दावानलेनेह प्रतापः प्रकृतः संभवतीति उपमानोपमेयभावः प्रतीयते।

यः कैलासनिवासशिवस्य जटाजूटे सिद्धसागरस्य लहरीं चुम्बति। गम्भीरताया विभ्रमस्तत्र। उद्वेलिताकाशाशिखरे मन्थनेन विहीनश्चन्द्रो हि। वीर नरसिंह देवराज! त्वत्कीर्तिषु सोऽयं दृश्यते।

अत्र सिद्धसिन्धुलहरीभिः गम्भीरकान्तिः अप्रकृता। तस्याः धर्मस्थविभ्रमस्य प्रकृतेषु कीर्तावसंभवादुपमा गम्या।

---

जो प्रचण्ड सूर्य किरण मण्डल के महान् अहंकार रूप सबको बल देने वाला प्रसिद्ध है। हे वीर नरसिंह देव! संसार में तुम्हारे प्रताप का बल है। शत्रु तुम्हारे प्रताप से चकित होकर भाग कर वन में वास करने का अनुभव करते हैं। तब भी वहाँ शत्रु दावानल में सदैव घिरे हैं।

यहाँ प्रताप प्रकृत है। उसका धर्म प्रौढि अप्रकृत दावानल कहाँ से संभव है इसमें उपमान उपमेय भाव की प्रतीति होती है।

जो कैलाश पर निवास कर्ता शिव के जटाजूट में गङ्गा सिद्धसागर की लहरी का चुम्बन करता है। गंभीरता का विभ्रम है। उद्वेलित आकाश शिखर पर मन्थन से हीन चन्द्रमा है। हे वीर नरसिंह राजन्! तुम्हारी कीर्ति में यह देखा जाता है।

यहाँ सिद्ध सिन्धु के लहर से गंभीर कान्ति अप्रकृत है। उस धर्म के विभ्रम का प्रकृत कीर्ति में असंभव होने से उपमागम्य है।

For example, the sky adorns itself with the beauteous qualities of Lord śṛkṛiṣṇa the only equality of the sky is sound. If it is, therefore, impossible to aceept the sky having by inherence any other qualities including the qualities of Lord śṛkṛiṣṇa. This is an example of (Narsingha), when an object can not be related to another through qualities and action. The objccts, here, are the sky and Lord śṛikṛiṣṇa and through the sky fails to share any of the qualities of Lord śṛīkṛiṣṇa, it has still been compared to him.

The blueness of sky and Lord śṛikṛi ṣṇa are not identical. Though they can be similar. However equality can not be the base of similarity which itself is a quality and a quality having another quality is logically untenable. This is an example of similarity between unrelated objects. The example of similarity between the meanings of two sentences is as under. To try to glorify and describe in full, the greatness of Narsingha is the same as encasing the entire submarine fire inside a fresh lotus of lover, tbe similarity between the senses of the two sentences is the both, are impossible to achieve.

Here too the senses of the two sentences are entirely unrelated to each other and yet the relation of similarity has been suggested to exist between them.

According to old tradition, Vidyādhara has accepted Nidarśanā even in cases where two objects or senses can logically be related to each other. For example," ( your fame O Narsingha ! spreads througout the world and even the under world thereby presenting an example of how an unescorted woman can pass unhurt through a multitude of lascivious people.

Here the one action is related to the other by presenting an example or proof In this example the two objects compared are the same and a woman. In his treatment of Nidarśanā Vidyādhara has followed the line of Ruyyaka.

**उपमानादुपमेयं यत्राधिक्यस्य गोचरीभवति ।**
**सतिभेदप्राधान्ये व्यतिरेकोऽयं समाख्यातः ॥९९॥**

भेदो वैलक्षण्यम् ।

**पवित्रसद्गोत्रमुदीरयन्ति, त्वामुत्कलाधीश विडौजसं च ।**
**इयान् विशेषो युवयोर्यदेष, नापारिजातस्त्वमपारिजातः ॥१००॥**

अत्र श्लेषप्रतिभोत्थापितदीपकानुप्राणितो व्यतिरेकः ।

**श्रीमन्नुत्कलभूमिपालभवतो दानाम्बुकल्लोलिनी,**
**मेतांपूरपवित्रितावनितलां दृष्ट्वापगानां पतिः ।**
**शिप्रां नेच्छति नर्मदां न मनुते गोदावरीं नेक्षते,**
**कालिन्दीं न धिनोति सिद्धतटनीं नाश्लिष्यति प्रागिव ॥१०१॥**

अत्रेतराभ्यो दानाम्बुकल्लोलिनी सौभाग्ये न विशिष्यत इति व्यतिरेकः ।

---

उपमानादुपमेयस्याधिकता यत्र दृश्यते, भेदप्राधान्येऽयं व्यतिरेकालंकारः ख्यातः । भेदो विलक्षणत्वम् ।

हे उत्कलाधिपते ! त्वामिन्द्रं च पवित्रसद्गोत्रमुदीरयन्ति । वैशिष्ट्यं युवयोः यदयमिन्द्रः कल्पवृक्षेण हीनो न त्वमपि च न पराजितः ।

अत्र श्लेषप्रतिभोत्थितदीपकेनानुप्राणितो व्यतिरेकालंकारः ।

श्रीमन्नुत्कलनरेश ! भवतो दानजलक्रीडालहरीभिः पवित्रपृथ्वीतलं दृष्ट्वा नदीपतिः शिप्रानदीं नेच्छति । नर्मदानदीं न मन्यते । गोदावरीनदीं न पश्यति । यमुनां न ध्यायते । सिद्धगङ्गां न संस्पर्शयति पूर्वं यथा ।

इहेतराभ्यो दानाम्बुकल्लोलिनी सौभाग्येन वैशिष्ट्यम् । अयमपि व्यतिरेकालंकारः ।

---

उपमान से उपमेय की जहाँ अधिकता दिखाई देती है । भेद प्रधानता होने पर व्यतिरेकालंकार प्रसिद्ध है । भेद विलक्षणता है ।

हे उत्कलाधिपति ! तुम्हारे और इन्द्र दोनों में इतनी विशेषता है कि यह इन्द्र पारिजात (कल्प वृक्ष) से हीन नहीं और तुम पराजित नहीं हो ।

यहाँ श्लेष प्रतिभा से उठा दीपक अनुप्राणित होता हुआ व्यतिरेकालंकार है ।

श्रीमन् उत्कल नरेश ! आप का दान जल क्रीडा करने वाली इस पूर्ण लहरी पवित्र पृथ्वीतल को देखकर नदी पति (सागर) ऐसा हो गया है कि शिप्रानदी की इच्छा नहीं है । नर्मदा नदी को नहीं मानता । गोदावरी नदी को नहीं देखता । जमुना का ध्यान नहीं करता । सिद्ध नदी गङ्गा का संस्पर्श नहीं करता । जैसे पहले करता था ।

यहाँ दूसरे के लिए दानाम्बुकल्लोलिनी सौभाग्य से विशिष्टता है । यह व्यतिरेकालंकार है ।

**प्राधान्येन निबद्धं यद्युपमानोपमेययोरेकम् ।**
**अन्यत् सहार्थसहितं भवति सहोक्तिस्तदाख्याता ॥१०२॥**

यथा –

**संग्रामाङ्गणभूषणस्य भवतः कर्णावतंसीभव-**
**ज्ज्यावल्लीबलयोद्धुरेण धनुषामुक्तैः समं मार्गणैः ।**
**एतैस्तैः प्रतिमल्लभूमिपतिभिः स्पर्धानुबन्धादिव,**
**श्रीमन् वीर नृसिंह देव सहसा दिक्चक्रमुल्लङ्घितम् ॥१०३॥**

अत्र मार्गणानां प्रतिमल्लपलायनं प्रतिनिमित्ततामातन्वतामपि समसमयत्वेनोपनिबद्धः । रिपुगतादिक्लङ्घनं शाब्दं वाणगतं तु सहार्थसामर्थ्यात् प्रतीयते । श्लेषभित्तिकाध्यवसायमूला यथा—

---

यत्रोपमानोपमेययोः एकस्यापि शब्दसम्बन्धिक्रियासम्बन्धेतरेण सहार्थो निर्दिष्टस्तत्र सहोक्त्यलंकारो भवति । उदाहरणम्—

हे श्रीमन् वीर नरसिंह देव ! रणाङ्गणे भवतः कर्णस्य भूषणस्य संचालनं भवति । धनुषः उन्मुक्तैर्वाणैस्तैः शत्रुनरेशैः स्पर्शानुबन्धादिव दिक्चक्रमुल्लङ्घितम् । अर्थात् शत्रुनरेशाः विभिन्नदिशः प्रति मुक्तैर्वाणैः पलायिताः ।

इह मार्गणानां शत्रुपलायनेन निमित्तस्य विस्तारोऽपिसमसामयिकत्वेनोपनिबद्धः । शत्रुगतदिशाचक्रस्योल्लंघनं शाब्दं वाणगतं तु सहार्थसमर्थतायाः प्रतीयते । श्लेषभित्तिकाध्यवसायमूलोदाहरणम् ।

---

जहाँ उपमान उपमेय दोनों में से एक का भी शब्द सम्बन्धी क्रिया सम्बन्ध दूसरे के साथ अर्थ निर्देशित होने पर गम्य हो, सहोक्ति अलंकार होता है । उदाहरणार्थ –

हे श्रीमान् वीर नरसिंह देव ! आप रणाङ्गण में भूषण हैं, जो कान के भूषण होते हैं । धनुष की डोरी के खींचने से छूटे हुए इन वाणों से उन शत्रु राजाओं द्वारा स्पर्धा होने के सदृश दिशाचक्र का उल्लंधन किया गया । अर्थात् शत्रु राजा गण विभिन्न दिशाओं को वाण के कारण भाग गये ।

इसमें मार्गण के प्रति शत्रु के भागने से निमित्तता का विस्तार भी समसामयिक होने से सम्बन्धित है । शत्रुगत दिशाचक्र का लंघन शब्द सम्बन्धी तो वाण विषयक होने के साथ अर्थ सामर्थ्य के कारण प्रतीत होता है । श्लेषभित्तिकाध्यवसायमूलक उदाहरण—

रणे वीर नृसिंहस्य सिंहनादेन तर्जिताः ।
मदं मुञ्चन्ति मातङ्गैः सहैव परिपन्थिनः ॥१०४॥
अत्र मदयोर्भेदेऽप्यभेद; ।

ब्रूमोऽधुना सहोक्तिप्रतिभटभूतं विनोक्त्यलंकारम् ।
एकेन विना किञ्चिद्यत्रान्यत् स्यात् सतोऽसतो यद्वा ॥१०५॥
सतः शोभनादन्यद् शोभनम् । असतोऽशोभनादन्यच्छोभनम् । क्रमेण यथा—
न त्वद्वैरिवधूवक्त्रं विना कान्त्या विराजते ।
ज्योत्स्नया न विना चन्द्रमण्डलं क्षितिमण्डन ॥१०६॥
विना पद्माकरोग्राहैश्चन्दनं भुजगैर्विना ।
विना भाति खलैर्वीरनृसिंह भवतः सभा ॥१०७॥

रणे वीरनरसिंहस्य सिंहनादेन शत्रवः तर्जिताः । गजैः सहैव शत्रुनरेशाः स्वमदं त्यक्तवन्तः ।

इह मदयोर्भेदेऽप्यभेदः ।

ब्रूमोऽधुना सहोक्तिप्रतिभटभूतं विपर्ययभूतं विनोक्तिनामालंकारं, यत्र विना किञ्चिद् सदसतो वस्तुनः एकेनाशोभनं तत्र विनोक्त्यलंकारोऽक्ति ।

सतः शोभनादन्यदशोभनम् । असतोऽशोमनादन्यत् शोभनम् । क्रमेणोदाहरणानि । हे वीर नरसिंह ! ज्योत्सनया विना चन्द्रो न शोभते । तव शत्रुवधूमुखं कान्त्या विना न राजते । ग्राहैः विना सागर; सर्पैः विना चन्दनं, खलैः विना भवतः सभा शोभते ।

---

वीर नरसिंह के सिंहनाद से रण में शत्रु भयभीत हो गए । हाथियों के साथ ही शत्रु राजा अपने मद को छोड़ दिये । यहाँ दो प्रकार के मद के भेद में भी अभेद है ।

अब विनोक्ति अलंकार का वर्णन करते हैं । जहाँ किसी के विना किसी वस्तु का सत् असत् होने के शोभन अशोभन हो, वहाँ विनोक्ति अलंकार है । यह दो प्रकार का होता है । सत् के शोभन से अन्य का अशोभन होता है । असत् के अशोभन से अन्य का शोभन होता है । क्रमशः जैसे—

हे वीर नरसिंह ! ज्योत्स्ना विना चन्द्रमण्डल सुशोभित नहीं होता है । कान्ति के विना तुम्हारे शत्रु की वधू के मुख शोभित नहीं होते हैं ।

जैसे विना ग्राहों के समुद्र, विना सर्पों के चन्दन वृक्ष हो, वैसे विना खलों से आप अर्थात् दुष्ट रहित आप की सभा हे वीर नरसिंह सुशोभित है ।

---

18—Vyatireka—This figure occurs where the object of comparison excels the standard of comparison. For example, 'On having looked at the river formed by the water, related to rite of

**साधारणधर्मवशाद्गम्येनाप्रस्तुतेन चारुत्वम् ।**
**प्रस्तुतमुपैति वाच्यं यस्यामेषा समासोक्तिः ॥१०८ ॥**

व्यङ्ग्येऽपि रूपके प्रस्तुतोपरञ्जकत्वमेवाप्रस्तुतस्य । यत्रारोप्यमाणपदार्थत्वेनारोपविषयस्य प्रतिभासनादप्राधान्यं तत्र परिणामः । यत्र पुनरारोप्यमाणपदार्थधर्मविशिष्टत्वेन प्रतिभासनादारोपविषयस्य प्राधान्यं तत्रेयम् । अतस्तु प्रस्तुताद्वाच्यादप्रस्तुतस्य प्रतीयमानत्वे संक्षेपेणार्थयोः कथनमित्यन्वर्था समासोक्तिः ।

---

यत्र प्रस्तुतविशेषणस्य साम्येनाप्रस्तुतमुपैति तत्र समासोक्त्यलंकारो भवति । व्यङ्ग्यरूपकेऽपि प्रस्तुतविशेषणत्वस्यैवाप्रस्तुतस्य ज्ञानम् । यत्रारोप्यमाणपदार्थतयारोपविषयं प्रति भासनं तत्राप्रधानता, परिणामोऽस्ति । यत्र पुनरारोप्यमाणपदार्थधर्मविशेषतया प्रतिभासनादारोपस्य विषयप्राधान्यं तत्रेयं समासोक्तिः । अतस्तु प्रस्तुताद्वाच्यादप्रस्तुतस्य प्रतिभानतायां संक्षेपतोऽर्थयोः कथनमित्यन्वर्थसंज्ञकः समासोक्त्यलंकारः ।

---

जहाँ प्रस्तुत विशेषण के साम्य से अप्रस्तुत को जाना जाता है, वहाँ समासोक्ति अलंकार होता है। व्यङ्ग्य रूपक में भी प्रस्तुत के विशेषणत्व का ही अप्रस्तुत में ज्ञान होता है। जहाँ आरोप्यमाण पदार्थता से आरोप विषय के प्रतिभासन होने से अप्रधानता हो, वहाँ परिणाम होता है। जहाँ पुनः आरोप्यमाण पदार्थ धर्म विशेषता से प्रतिभासन के कारण आरोप विषय का प्राधान्य होता है, वहाँ यह समासोक्ति है। इसलिए तो प्रस्तुत वाच्य से अप्रस्तुत की प्रतीति होने पर संक्षेप में दो अर्थों का कथन अन्वर्थसंज्ञक समासोक्ति है।

---

your charity the ocean no longer wishes to welcome either the river śiprā or Narmadā or Godāvarī or kālindī or the Ganges. The senses that river formed by your charitable actions far excels all these rivers named above which could each have become the standard of comparison, This figure aims to describing the difference between two objects of comparison by proving that the one is far different from the other in point of true excellence, Here too Vidyādhara has treated this figure more along lines of Ruyyak than along those of Mammaṭa.

19—Sahokti—Where two objects together, on this goinga together alone establishes between them a bond of similarity and one of the two objects subordinates the other by placing

निमित्तमन्तरेण प्रस्तुतादप्रस्तुतस्य गम्यत्वेऽतिप्रसङ्गः स्यादित्यत्र निमित्तं साधारणो धर्मः। स द्वेधा। गुणः क्रिया च। गुणो यथा—

**गुणप्रणयिनी मुष्टिग्राह्यमध्या सुवंशजा।**
**नरसिंहधनुर्बल्ली करोति भवतो मुदम् ॥१०९॥**

अत्र श्लेषोपपादितस्य गुणप्रणयित्वादिगुणरूपस्य धर्मस्य साधारणत्ववशादपरित्यक्तस्वरूपाया एव धनुर्बल्याः स्त्रीत्वधर्मविशिष्टप्रतीतिः। यथा वा—

---

निमित्तं विना प्रस्तुतादप्रस्तुतस्य ज्ञानेऽतिप्रसिद्धः स्यादितीह निमित्तसाधारणो धर्मः गुणक्रियाभेदाभ्यां समासोक्त्यलंकारो द्विविधो भवति। गुणस्योदाहरणम्। गुणप्रणयिनी मुष्टिग्राह्यसुन्दरवंशोत्पन्ना धनुर्बल्ली नरसिंहनरेशस्य भवतां मोदं जनयति।

इह श्लेषोपपादितस्य गुणप्रणयित्वादिगुणरूपस्य धर्मस्य साधारणत्ववशादपरित्यक्तस्वरूपा या एव धनुर्बल्याः स्त्रीत्वधर्मविशिष्टतायाः प्रतीतिः। यथा वा

---

निमित्त के बिना प्रस्तुत से अप्रस्तुत के ज्ञान होने पर अति प्रसङ्ग हो तो इसमें यहाँ निमित्त साधारण धर्म है। गुण एवं क्रिया भेद से समासोक्ति दो प्रकार की है। गुण सम्बन्धी उदाहरण—

गुण प्रणयिनी मुट्ठी में ग्रहण करने योग्य सुन्दर वंश में उत्पन्न धनुष की बल्ली जो नरसिंह से सम्बन्धित है; आप को प्रसन्न रखे।

यहाँ श्लेष से उपपादित गुण प्रणयित्व गुण रूप धर्म के साधारणता के कारण अपने स्वरूप को न छोड़ने के ही धनुषबल्ली के स्त्रीत्व धर्म विशिष्टता की प्रतीति है। अथवा जैसे—

---

itsebf in nominative case or by getting attach directly to the word denoting action, it is a case of this figure of speech.

For example, 'O Narsingha ! When you are in the battle field; your enemies are cured of all pride in their Valour and elephants stop shadding their ichor. It should be noted that the wor d (Mada) here has a double meaning leading to hyperbole wh ch Vidyādhara maintains; must subsist sahokti. Here the ac ion of divesting themselves of (Mada) Pride and ichor is directly related to the enemies, so that they become predominant in Virtue of their being placed in their nominative case, where as eleplants assume secondary position owing to their being placed in the instrumental Case. In the treatment of this figure Vidyādhara seems to have been influenced by Ruyyaka.

विशालबलभीभुजान् लघुविशीर्णलूतागुण,
प्रतानवसनश्रियः स्फुटसुधाविलासस्मितान् ।
नृसिंह वसुधाधिप त्वदरिवीरलीलागृहान्,
विशङ्कमुपगूहते विपिनपावकज्वालिका ॥११०॥

अत्र बलभीभुजेव बलभीव भुजेत्याद्युपमासमाससामर्थ्योपजातगुणसाधारणत्वमाहात्म्याद्गृहाणां पावकज्वालायाश्च नायकताख्यधर्मविशिष्टत्वप्रतीतिः । क्रिया यथा—

विश्राणनैस्तैः परिभूयमानः कल्पद्रुमो वीरकलिङ्गनाथ ।
लतोपगूढोऽपि न भृङ्गनादैराभाषते न स्मयते च पुष्पैः ॥१११॥

अत्राभाषणादिक्रियारूपधर्मसाधारण्याल्लता कल्पद्रुमयोर्नायकत्वप्रतीतिः ।

---

हे नरसिंह नरेश ! तव वीरशत्रूणां लीलाभवनानि, वनाग्निः ज्वालावृहद्वलभीवाहून् लघुजीर्णमकर्यादिविस्तीर्णवक्त्रस्य शोभायाः स्पष्टामृतविलासस्मितान् शङ्कितमुपगूहते ।

अत्र बलभीभुजासमानं बलभीव भुजेत्याद्युपमासमासस्य सामर्थ्योत्पन्नगुणसाधारणत्वमहत्वेन गृहाणामग्निज्वालायाः नायकतानामेकधर्मविशिष्टतायाः प्रतीतिः । उदाहरणम्—हे वीर कलिङ्गाधिपते ! तव दानैः कल्पवृक्षः पराभूतः पुष्पैः विकासनं न । भ्रमरैः लतागुल्मे न गुञ्जितम् ।

अत्राभाषणादिक्रियारूपधर्मसाधारणतया लताकल्पवृक्षयोः नायकत्वस्य प्रतीतिं करोति ।

---

हे नरसिंह नरेश ! तुमसे शत्रु वीरों के लीला भवनों को वन की अग्निज्वाला बड़ी बलभी रूप बाहुओं को छोटे जीर्ण मकरी आदि फैले वस्त्रों की शोभा के स्पष्ट अमृत विलास की मुस्कराहटों को शङ्कित होकर छिपाती है ।

यहाँ बलभी भुजा के समान बलभी भुजा इत्यादि उपमा समास की समर्थता से उत्पन्न गुण साधारणतया महत्व से गृहों की अग्नि ज्वाला की नायकता नामक धर्म विशिष्टता की प्रतीति होती है । क्रिया सम्बन्धी उदाहरण—

हे वीर कलिङ्ग पति ! आप के दानों से कल्पवृक्ष पराभूत है । पुष्पों द्वारा मुस्कराना खिलना नहीं शोभित होता है । भौरों के गुञ्जारों द्वारा लता गुल्म भी मुखरित नहीं हैं ।

यहाँ आभाषण आदि क्रिया रूप धर्म साधारणतः लता कल्पवृक्ष दोनों में नायकत्व की प्रतीति होती है ।

**घाटीं वीरनृसिंह देव भवतः श्रुत्वा वनान्तं भिया,**
**यान्तीनां रभसादरातिसुदृशां शाखाभुजैः शाखिनः ।**
**आकर्षन्ति कचान् हरन्ति सिचयं मृद्नन्ति गण्डस्थलीः ।**
**श्लिष्यन्ति स्तनयोः स्पृशन्ति जघने गृह्णन्ति कण्ठे मुहुः ॥११२॥**

अत्र शाखाभुजैरित्युपमारूपकसंदेहसंकरसमासोत्थापिता समासोक्तिः । रूपकगर्भत्वे पुनः समासान्तराश्रयणात् साधारणधर्मत्वं संभवदपि न समासोक्तेर्गोचरः । एकदेशविवर्तिरूपकमुखेनैवार्थान्तरस्य व्यज्यमानत्वेनास्याः कैमर्थ्यप्रसङ्गात् ।

---

हे वीर नरसिंह देव ! भवन्तं श्रुत्वा भीता वनान्तस्य घाटीं वेगेन यान्त्यः शत्रुवध्वः वृक्षशाखाभुजानाश्रयन्ति । केशान् कर्षन्ति । हरन्ति स्वमुखावगुण्ठनं, कपोलस्थलीं दलन्ति कुचद्वयमालिङ्गन्ति । जघनं स्पृशन्ति । मुहुर्मुहुः गले लगन्ति । अत्र शाखाभुजैरित्युपमारूपकसन्देहसंकरसमासोत्थितसमासोक्त्यलंकारः । रूपकगर्भत्वे पुनरन्यसमासाश्रयणात् साधारणधर्मत्वस्य संभावनासत्वेऽपि समासोक्तिर्न दृष्टिगता । एकदेशविवर्तिमुखेनैवार्थान्तरस्य व्यञ्जनयास्याः कावश्यकता ? प्रसङ्गोऽयं स्पष्टः ।

---

हे वीर नरसिंह देव ! आपको सुनकर डरती, वनकी घाटी की ओर वेग से जाती शत्रु की स्त्रियाँ वृक्षों की शाखाभुजाओं का आश्रयण करती हैं । केशों को खींचना, घूंघट हटाना, कपोलों का मलना, दोनों स्तनो का अलिङ्गन करना जंघा, स्पर्श करना, बार बार गले लगना आदि क्रियाएं होती हैं ।

इसमें शाखा भुजों से उपमा रूपक प्रकट है । सन्देह संकर समास से उत्थित समासोक्ति है । रूपक गर्भत्व में पुनः दूसरे समास के आश्रयण से साधारण धर्मत्व की संभावना होते हुए भी समासोक्ति दृष्टिगत नहीं होती है । एक देशविवर्तिरूपक मुख से ही अर्थान्तर की व्यञ्जना से इसकी आवश्यकता क्या है ? यह प्रसङ्ग स्पष्ट है ।

---

20—Vinokti – Where one object loses its charm or increases it by renouncing its association with other object, it is a case of figure (Vinokti). For example, 'O king Narsingha ! the orb of the moon loses its charm in absence of the moon light; so do the wives of your enemies in absence of the glamour of beauty.

Here two objects have been shown to have lost their charm for want of association with another object. Here too Vidyādhara has followed Ruyyaka in toto.

21—Samāsokti—Where an adjective qualifying two objects are so similar that the description of one suggests another and these two objects have a relation of similarity between them; the case is of this figure of speech. The object suggested in this figure should never be the object of main description and must always assume a subordinate position. There is lot of discussion about this figure and of the authorities, who have dealt with this figure; at length like Ruyyaka, Appaya Dixit; Panditrāja Jagannātha and Nāgojibhaṭa. None is in agreement wlth the others.

Vidyādhara on the other hand seems to have upheld the stand of Ruyyaka.

For example, "your bow made of a fine quality of bamboo slender in the middle so that it can be caught up in the fist and adorn with string fills every one with pleasure. The object of main description here is the bow though its adjective (subanśajā), (Muṣtigrāhyāmadhyā) and (Guṇpraṇayinī) which have all a double meaning suggest a damsel having the same qualities, namely (subanśajā) that is born of a good family or well bred (Muṣtigrāhyāmadhyā) that is having a slender waist so that it can be grasped in the fist and a woman fond of nice quality, since the bow is the main object of description the woman suggested by it assumes only a subordinate positon. In cases where an action is more suggesting than a quality, Ruyyaka is of opinion that the action too can be suggested only by assuming the form of an adverbial adjunt, vidyādhara seems to be precisely of the same view. Both of them in point of this figure have lent their support to the school of logic which holds that a verbal always assumes the form of an adverbial adjunct.

For example, 'Rāma reads'. A logician stands in ascertaining the meaning of the sentence is that the sentence describes Rāma qualified by his action of reading. The grammarian on the other hand would oppose him by saying that the sentence ( Rāma reads ) seeks to describe not Rāma but the action of reading qualified by its agent ( Rāma ).

धावन्तीर्नरसिंहदेव रभसाद्वीक्ष्य प्रसूनेक्षणै,
स्तासां बाहुलतासहोदरतया वात्सल्यनिघ्ना इव ।
आहारोऽस्तु फलैरिति प्रतिवनं पादे लगन्त्यो लता
याचन्ते त्वदराति राजरमणीः पुष्पन्धयानां रुतैः ।।११३।।

अत्र विलोकनानुगुण्यात् पुष्पाणाँ नयनत्वेन रूपणासिद्धौ लतानां सखीत्वरूपणं प्रतीतिपथमवतरदुत्प्रेक्षाया निमित्ततामातनुते ।

विधुरीकुर्वन् कवरीं लुम्पन् मकरीं विसूत्रयन् हारम् ।
वीर विरोधि मृगीदृशि खेलति कामीव ते खड्गः ।।११४।।

अत्र विधुरीकरणादिसाधारणधर्मसामर्थ्यादेवाप्रस्तुतस्य कामिनः प्रतीयमानत्वादुपमायाः पौनरुक्त्यमिति समासोक्तिविषय उपमा न कार्या । तस्मात् हम्मीरमानमर्दनं खेलति खड्गस्तवारिनारीषु, इति पाठः परिणमयितव्यः ।

विलसति विशेषणानां प्रतीयमानार्थगर्भता यत्र ।
सहृदयहृदयाह्लादी परिकरनामा स निर्दिष्टः ।।११५।।

---

हे नरसिंह देव ! पुष्परूपनयनैः शीघ्रतया धावन्तीनां तासां वधूनां बाहुलता सहोदरत्वेन प्रेमाधीना । प्रत्येकं वने चरणलग्नलताफलैः आहारोऽस्तु । भ्रमरध्वनिभिस्तव शत्रुवध्वः याचनां कुर्वन्ति ।

इहावलोकनानुगुण्यात् प्रसूनानां नेत्रत्वेन रूपणासिद्धौ लतानां सखीत्वरूपणं प्रतीयते । उत्प्रेक्षायाः निमित्ततां वितनोति ।

हे वीर ! ते खड्गः मृगीदृशिकामीव खेलति । हे वीर विरोधिनृपाणां बध्वः केशान् विधुरीकुर्वन्त्यः पतिविहीनाः । मकरीं नाशयन्त्यः हारं विकुर्वन्ति ।

अत्र विधुरीकरणादिसाधारणधर्मसमर्थतायाः अप्रस्तुतस्य कामिनः प्रतीत्युपमायाः पुनरुक्तता । इहापि समासोक्तिविषयक उपमान कार्या । अतः 'हम्मीरमानमर्दनं खेलति खड्गस्तवारिनारीषु' इति पाठः युक्तियुक्तः ।

तत्र विशेषणानां प्रतीयमान गर्भतास्ति । अन्योऽर्थः प्रतीयते सहृदयाह्लादकारी तत्र परिकरालंकारो भवति ।

---

हे नरसिंह देव ! पुष्पों रूपी आंखों से शीघ्र दौड़ती देख उन स्त्रियों की बाहुलता को सहोदर समझ प्रेमाधीन हो गईं । प्रत्येक वन में चरण में लगती लता फलों से ऐसा आहार हो कि भ्रमरकी ध्वनि से तुम्हारे शत्रु की वधू याचना करती है । यहाँ देखने के अनुगुण से पुष्पों का नेत्रत्व होने से रूप में असिद्ध होने पर लताओं के सखीत्व रूपण की प्रतीति का मार्ग अवतरित होते उत्प्रेक्षा के कारण का विस्तार होता है ।

हे वीर ! तुम्हारी तलवार मृगी के नेत्र सदृश कामी के समान खेल रही है । हे वीर ! विरोधी राजाओं की वधू केश को विखराती पति विहीन हुई । मकरी को नष्ट करती हार को बिखेर रही है ।

**नरसिंह नरेन्द्रेण नन्दनद्रुमबाहुना।**
**धनेशांशावतोरण धन्याः केनार्थिनः कृताः ॥११६॥**
**तादृक् किमपि विशेष्यं साभिप्रायत्वमश्नुते यत्र।**
**स परिकराङ्कुरनामालङ्कारः कीर्तितः कविभिः ॥११७॥**

परिकरवैपरीत्येनास्य प्रवृत्तेरिहाभिधानम्।

**नरसिंह महीपाल कीर्तिस्त्रिपथगा तव।**
**न कस्य भविता श्लाघ्या पुनाना भुवनत्रयम् ॥११८॥**

अत्र त्रिपथगेति त्रिभुवनपवित्रीकरणायोपपत्तिरूपमभिप्रायमभिव्यञ्जयन् वाच्योन्मुखीभवतीति नायं ध्वनेर्विषयः। क्वचित् पुनः प्रसिद्धत्वाद्विशेष्यमतथाभूतं प्रयुक्तमपि तथा भूतमभिप्रायमभिव्यनक्ति। यथा—

---

केन याचकाः धन्याः कुवेरांशावतारेण नरेशेण याचकाः धन्याः। तस्यबाहुः नन्दनद्रुम इव।

यत्र साभिप्रायः विशेष्यत्वेनोपलक्षितः तत्र परिकराङ्कुरः कविभिर्वर्णितः। परिकरस्य वैपरीत्येऽस्य प्रवृत्तिः।

हे नरसिंह नरेश ! तव कीर्तिः त्रिपथगा। केन न श्लाघ्या त्रिषु लोकेषु पुनाति।

अत्र त्रिपथगा त्रिपु लोकेपु पुनाति। पवित्रीकरणाय सिद्धरूपमभिप्रायं व्यञ्जयन् वाच्योमुखीभवति। ध्वनेर्विषयो नायम्। कुत्रचित् पुनः प्रसिद्धतायाः विशेष्यमतथाभूतं प्रयुक्तमपि तथाभूतमभिप्रायमभिव्यनक्ति। यथा—

---

यहाँ विधुर करने आदि साधारण धर्म की समर्थता से ही अप्रस्तुत कामी की प्रतीति होने से उपमा की पुरुक्ततता है। इसमें समासोक्ति विषयक उपमा नहीं होना चाहिए। इसलिए 'हम्मीरमानमर्दनं खेलति खड्गस्तवारिनारीषु' यह पाठ होना चाहिए।

जहाँ विशेषणों के प्रतीयमान अर्थगर्भता से दूसरा अर्थ होता है और सहृदय के हृदयाह्लादकारी होता है, वहां परिकर अलंकार होता है।

किसके द्वारा याचक धन्य किए गए। कुवेर के अंशावतार होने से नरसिंह नरेश द्वारा याचक धन्य हो गए, जो राजा नन्दन वृक्ष के समान बाहुवाले हैं।

जहाँ अभिप्राय सहित विशेषत्व लक्षित होता है, वहाँ कवियों द्वारा परिकराङ्कुर अलंकार कहा गया है। परिकर की विपरीतता होने से इसकी प्रवृत्ति का अभिधान किया गया।

हे नरसिंह नरेश ! तुम्हारी कीर्ति त्रिपथगा (गङ्गा) है। यह किसके द्वारा प्रशंसित न हो। जो तीनों लोको को पवित्र करती है।

नाथः काकोदराणां कथयति लिखति क्ष्मापतिः कार्तवीर्यो,
मेलानन्दो जलानां निधिरचलपतिर्लेखनी व्योमपत्रम् ।
संख्यादूरेपराध्र्याद्यदिभवति पुनः किं च वैरिञ्चमायुः,
संख्येयत्वं तदानीं दधति तव गुणाः श्रीनृसिंह क्षितीन्द्र ॥११९॥

अत्र काकोदरनाथादीनि विशेष्याणि सहस्रमुखत्वादिरूपमभिप्रायमभिव्यञ्जयन्ति ।

यत्र विशेष्यविशेषणसाम्यं स श्लेष एष तु द्वेधा ।
किं चास्मिन् वाच्यत्वं विशेष्ययोस्तुल्ययोरेव ॥१२०॥

---

शेषनागो यदि सहस्रमुखैः तव गुणान् वर्णयतु । सहस्रबाहुः यदि सहस्रभुजैर्लिखतु सागरो यदि मसी भवतु । आकाशो यदि पत्रं भवतु । ब्रह्मणः आयुः यदि स्यात् संख्या परार्धा यदि स्यात् तदानीं हे श्रीनरसिंह नरेश ! भवतो गुणगणना भविष्यति ।

अत्र शेषनागादीनि विशेष्याणि सहस्रमुखत्वादिरूपमभिप्रायमभिव्यञ्जयन्ति ।

यत्र विशेष्यविशेषणसमत्वं शब्दस्य तंत्र श्लेषः । अयं च द्विविधः । केवलप्रकृतगोचरकेवलाप्रकृतगोचरश्च

---

यहाँ त्रिपथगा तीनों लोक को पवित्र करने के लिए सिद्ध रूप अभिप्राय की व्यञ्जना करती हुई वाच्य की ओर उन्मुख होती है ! इससे यह ध्वनि का विषय नहीं है । कहीं प्रसिद्ध होने से प्रयुक्त अतथाभूत भी विशेष्य तथाभूत उस प्रकार के अभिप्रायकी अभिव्यञ्जना करता है । जैसे—

शेष नाग यदि सहस्रमुखों से तुम्हारे गुणों का वर्णन करें । सहस्रबाहु हजार भुजाओं से लिखें । सागर यदि स्याही हो जाय । आकाश कागज हो जाय । ब्रह्मा की आयु हो जाय । संख्या की गणना में परार्ध संख्या यदि हो, तो उस समय हे नरसिंह नरेश ! आप की गुणगणना हो जायगी ।

यहाँ शेषनाग आदि विशेष्य सहस्र मुखत्व आदि रूप अभिप्राय की अभिव्यञ्जना करते हैं ।

जहाँ विशेष्य एवं विशेषण साम्य हो, वहाँ श्लेष होता है । यह दो प्रकार का केवल प्रकृत गोचर और केवल अप्रकृत गोचर होता है ।

---

22—Parikara—This figure occurs when the adjectives have two meanings to yield. 1–their connoted meaning 2–their suggested meaning and latter is more appealing. For example, all the people seeking help and charity have been given, all they wanted

नायं समासोक्तिः । विशेषणमात्रसाम्यस्य तां प्रति प्रयोजकत्वात् । विशेष्यविशेषणसाम्यमधिकृत्य चास्य प्रवृत्तत्वात् । नाप्ययं तुल्ययोगिता । विशेष्यगतश्लिष्टत्वस्य तस्यामभावात् । अयं तुल्ययोरेवेति वचनसामर्थ्यात् प्राकरणिकयोरेव वाप्राकरणिकयोरेव वाभिधेयत्वेन भवन्न द्वैविध्यमतिक्रामति । क्रमेण यथा —

**कन्दर्पोदयमाश्रयद्भिरलसैः कान्तारसं प्रापितैः,**
**शश्वत्सानुचरैः प्रभूतकनकोत्तुङ्गक्षयैर्भूषितैः ।**
**राजन् वीरनृसिंह देव भवतोऽमित्रैः समस्तैरपि,**
**प्राप्यन्ते ननु चित्रमत्रयुगपत्तास्ताः पराभूतयः ॥१२१॥**

---

समासोक्तिर्नायम् । विशेषणमात्रसमत्वं तां प्रतिप्रयोजकत्वात् । विशेष्यविशेषणसमत्वमधिकृत्यास्य प्रवृत्तत्वात् । नायमपि तुल्ययोगिता । विशेष्यगतश्लेषस्य तस्याभावात् । अयं तुल्ययोरेवेति समर्थतायाः प्राकरणिकयोरेवाथवाप्राकरणिकयोरेव वाभिधेयत्वेन भवन्न द्वैविध्यमतिक्रामति । क्रमेणोदाहरणम्—

हे वीर नरसिंह देव ! भवतोऽमित्रैः तास्ताः पराभूतयः ज्ञाताः । विचित्रम् । कामदेवस्योदयाश्रयद्भिरलसैः पत्नीभिः सदानुचरैः सह प्रभूतस्वर्णराशिनिवासा अमित्रैरपि शत्रूणां एते दोषाः युक्ताः ।

---

वह समासोक्ति नहीं है । विशेषण मात्र साम्य के प्रति प्रयोजक होना कारण है । विशेष्य विशेषण समता को अधिकृत कर के इसकी प्रवृत्ति होती है । यह तुल्ययोगिता भी नहीं है । विशेष्यगतश्लेष का उसमें अभाव होना कारण है । यह श्लेष तुल्य वचन सामर्थ्य से प्राकरणिक के ही अथवा अप्राकरणिक के ही अभिधेयत्व से दो से अधिक नहीं हैं । क्रमशः उदाहरण —

हे वीर नरसिंह देव राजन् ! आप के सभी शत्रुओं द्वारा साथ-साथ उन-उन पराभूतियों को निश्चय ही प्राप्त किया गया । यह विचित्रता है । कामदेव के उदय का आश्रयण करने वाले अलसाये पत्नी के रस प्राप्त करने से सर्वदा अनुचरों सहित अत्यन्त ऊँचे स्वर्ण शृंग शोभित भवन शत्रुओं द्वारा प्राप्त किया गया ।

---

by Narsingha who is the very incarnation of ( Kubera ) the God of prosperity. Here the adjective ( Dhane'sānṣavatareṇa ) is suggestive and its suggestion is that Narsingha's charities are incessant and much more than the explanations of any body standing in need of them.

23—( Parikarānkura )—Many authorities like Bhāmaha. udbhaṭa Mammaṭa and Ruyyaka have not made any mertion of

अत्र त्यागशौर्ययोर्वर्ण्यमानत्वान्मित्रामित्राणां प्राकरणिकत्वम् ।

निजकरकलितस्वाहं काष्ठाश्लेषोपनीतमाहात्म्यम् ।
हम्मीरमानमर्दन भवतस्तेजो विभावसुं जयति ।।१२२।।

अत्र विभावसुशब्दवाच्ययोर्दहनतपनयोरुपमानत्वादप्राकरणिकत्वम् । विशेष्यविशेषणसाम्येन पुनर्यत्र प्रकरणादिना प्रकृतार्थ एव शृङ्खलितायामभिधायामप्रकृतार्थाभिधानाय सामर्थ्यविधुरत्वेऽपि शब्दस्याप्रकृतार्थोऽपि प्रतीतिसरणिमनुसरति तत्र शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो ध्वनिः । यथा—

हिरण्यकशिपुक्षेत्रदानदर्शितविस्मयः ।
न कस्य श्लाघनीयोऽसि नरसिंह जगत्पते ।।१२३।।

---

इह त्यागवीरतयोर्वर्ण्यमानतायाः मित्रामित्राणां प्राकरणिकता ।

काष्ठाश्लेषोपनीतमहत्वं स्वकरकलितस्वाहां सूर्याग्निं च हम्मीरमानमर्दन ! भवतस्तेजो विजयते । इह विभावसुशब्देन वाच्ययोर्दहनतपनयोरुपमानत्वेनाप्राकरणिकता । विशेष्यविशेषणसमतया पुनर्यत्र प्रकरणादिना प्रकृतार्थः शृङ्खलिताभिधायामप्रकृतार्थेऽपि प्रतीतेरेवानुसरणम् । तत्र शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो ध्वनिः । उदाहरणमिह स्वर्णदाने विस्मयो दर्शितः । हे जगत्पते नरसिंह ! भवान् सर्वैरपिश्लाघ्यः । हिरण्यकशिपुशरीरविदारणाय नृसिंहो भवान् कस्य न प्रशंसनीयः ।

---

वहाँ त्याग एवं वीरता दोनों के वर्णन से मित्रामित्राणां के सम्बन्ध में प्राकरणिकता है ।

अपने हाथ से दिया गया स्वाहा शोभित है । काठ के आश्लेष से उपनीतमहत्तावाले हैं । दूसरे अर्थ में राजा कर लेते है । ऐसे सुन्दर दिन हैं । दिशा के आलिंगन से प्रकट महत्ता वाले हैं । हम्मीर के मानमर्दन आप तेज अग्नि को जीत लेते हैं । यहाँ विभावसु शब्द दोनों वाच्य दहनतपन के उपमानत्व से अप्राकरणिकत्व है । विशेष्य विशेषण समता से पुनः जहाँ प्रकरणादि से प्रकृतार्थ ही शृङ्खलिता अभिधा में अप्रकृतार्थ अभिधा के लिए समर्थता से हीन होने पर भी शब्द अप्रकृतार्थ भी प्रतीति का ही अनुसरण है । वहाँ शब्दशक्तिमूलानुरणनरूपव्यङ्ग्य ध्वनि है । उदाहरणार्थ—स्वर्ण के क्षेत्र दान में आश्चर्य देखा गया है । हे जगत्पते नरसिंह ! आप किसके द्वारा प्रशंसित नहीं है । हिरण्यकशिपु के शरीर के विदारण से दर्शित विस्मययुक्त ऐसे नृसिंह भगवान् किसे प्रशंसनीय नहीं हैं ।

---

this figure, though Jaideva and following him Appaya Dixit have defined and illustrated this figure elaborately. Vidyādhara accepts this figure which in his opinion occurs when an object

qualified by an adjective has a suggested power leading to another meaning. For example, 'your fame, O King Narsingha, is the very river Gangā, because it has power to santify all the world. The suggestion is that your actions have not only come to the rescue of thc people of this world but also have exceiled the actions of (Bali), the king nether world renowned for his generosity and also excelled a wish granting tree which adorns the heavenly kingdom. However this is not a case of (Dhvani) suggestion, because the suggested sense subordinates itself to the object of description by reducing itself to the description of being one of means where by king Narsingha has achieved such position of eminence.

24—'Sleṣa ( Pun ), Where both the adjective and the object qualified there by, have double meaning, it is a case of this figure. It can be of two types. Vidyādara also accepts ( Arth'sleṣa ) sense pun, which occurs when the double meaning will remain intact even if some of the words employed in sentences where replaced by others. Consequently the examples given by Vidyādhara have no speciality of their own.

1—In which double meanings are applicable to several objects of description 2—where the double meaning is applicable only to several objects not meant to be described principally. Some authorities like Ruyyaka and Jagannātha accept the third type in which the double meanings are applicable to the both objects of main description and two objects not meant to be principally described. However, Mammaṭa and Vidyānātha do not accept this third type of Pun. Vidyādhara has stuck to the line pursued by Mammaṭa. Like Mammaṭa, Vidyādhara accepts the possibiiity of 'ṣleṣa' Occurring both When a word remains unbroken or broken into two parts.

Vidyādhara also aceepts ( Arthśleṣa ) sense pun, Which occurs when the double meaning will remain in tact even if some of the words employed in sentences where replaced by others, Consequently the examples given by Vidyādhara have no speciality of their own.

अयं च प्रयत्नादिभेदात् प्रातीतिक एव शब्दान्यत्वे जतुकाष्ठन्यायेन स्वयमेव शब्दयोः श्लिष्टत्वाच्छब्दगतः। अत एवास्य सभङ्गपदत्वम्। यत्र पुनः प्रयत्नादि-भेदाभावाच्छब्दैक्ये सत्येकनालावलम्बितफलद्वयन्यायेनार्थयोः श्लिष्टत्वं तत्रार्थगतः। अत एवात्राभङ्गपदत्वम्। शब्दपरिवर्तनसहिष्णुत्वमर्थश्लेषस्य विषय इति पुनः काव्य-प्रकाशकारस्य सिद्धान्तः।

**सामान्य विशेषत्वे सारूप्ये कार्यकारणत्वे च।**
**अप्रस्तुतप्रशंसा निर्दिष्टा प्रस्तुतस्य गम्यत्वे ॥१२४॥**

इहाप्रस्तुतस्याप्रस्तुतत्वादेव वर्णनमनुचितमपि प्रस्तुतपरत्वेनौचितीमालम्बत इति प्रस्तुतं व्यङ्ग्यमप्रस्तुतस्य वाच्यस्य सिद्धिमादधातीति वाच्यसिद्ध्यङ्गमिदं गुणी-भूतव्यङ्ग्यम्।

---

अयं प्रयत्नस्थानस्वरादिभेदात् प्रतीतिसम्बन्धिशब्दान्यत्वे काष्ठे जतुन्यायेन स्वे-नैव शब्दश्लेषेण शब्दगतः। अतोऽस्य सभङ्गपदत्वं सिद्धम्। पुनः स्थानस्वरप्रयत्नादि-भेदस्याभावः। तेनैव शब्दैक्ये एकनालसंलग्नफलद्वयन्यायेनार्थश्लेषस्तत्रार्थगतः। अत एवेहाभङ्गपदत्वम्। शब्दपरिवर्तनेनार्थश्लेषो भवति। काव्यप्रकाशकारस्यायं सिद्धान्तः।

अप्रस्तुतप्रशंसालंकारो भविष्यति तत्र, यत्र सामान्यविशेषत्वे सारूप्ये कार्यकारण-त्वे प्रस्तुतस्य गम्यत्वं भवति।

इहाप्रस्तुतस्याप्रस्तुतत्वादेव वर्णनमनुचितम्। प्रस्तुतपरत्वेनौचित्यस्यालम्ब-नम्। अत्र प्रस्तुतव्यङ्ग्योऽप्रस्तुतवाच्यस्यसिद्धिं धारयति। वाच्यसिद्धयङ्गमिदं गुणीभूत व्यङ्ग्यम्।

---

और यह प्रयत्नादि भेद से प्रतीतिसम्बन्धी ही शब्दान्यत्व में काठ में लाह चिपकने वाली न्याय से अपने ही दोनों शब्दों के श्लेष होने से शब्दगत है। इसलिए इसका सभङ्गपदत्व श्लेष होता है। जहाँ पुनः प्रयत्नादि भेदका अभाव है, उससे शब्दैक्य में एक नाल के सहारे दो फल वाले न्याय से दो अर्थों का श्लेष वहाँ अर्थगत है। इसलिए यहाँ अभङ्गपदत्व है। शब्द परिवर्तन करने से अर्थ श्लेष का विषय होता है। यह पुनः काव्य प्रकाशकार का सिद्धान्त है, जहाँ सामान्य विशेषत्व होने पर सारूप्यत्व और कार्यकारणत्व में प्रस्तुत का गम्यत्व है, वहाँ अप्रस्तुतप्रशंसा-अलंकार होगा।

यहाँ अप्रस्तुत के अप्रस्तुत होने पर ही वर्णन अनुचित होता हुआ भी प्रस्तुत-परत्व से औचित्य का आलम्बन है। इसमें प्रस्तुत वाच्य की सिद्धि धारण करता है। यह वाच्यसिद्धयङ्ग गुणीभूतव्यङ्ग्य है।

अत एवाप्रस्तुतस्य प्रशंसा कथनमित्यन्वर्थताश्रयणसामर्थ्यादप्रस्तुतस्य वाच्यत्वमत्र सूत्रेऽनुपात्तमपि लभ्यते। सम्बन्धेन विना पुनरप्रस्तुतत्प्रस्तुतावगतावतिव्याप्तिः स्यादित्यर्थान्तरप्रतिपत्तिनिमित्तेन भवितव्यं सम्बन्धेन। सम्बन्धे तु भवन्ती सामान्यविशेषत्वकार्यकारणत्वसारूप्यरूपसम्बन्धत्रयोल्लघनजङ्घालतां नावलम्बते। सामान्यविशेषत्वे सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्य प्रतीयमानत्वे द्वैतं कार्यकारणत्वेऽपि कार्यात् कारणस्य कारणाद्वा कार्यस्य व्यज्यमानत्वे द्वैविध्यं सारूप्ये त्वेक एव प्रकार इत्यस्याः पञ्चप्रकाराः। तत्र सामान्याद्विशेषस्य प्रतीतौ। यथा—

---

अत एवाप्रस्तुतस्य कथनमत्र भवति। इत्यन्वर्थकत्वस्याश्रयणसामर्थ्येनाप्रस्तुतस्य वाच्यत्वमिति सूत्रेऽनुपात्तम्। सम्बधं विना पुनः अप्रस्तुतेन प्रस्तुतस्यावगतिः। व्याप्तिस्तु परार्थसिद्धिसम्बन्धमपेक्षते। सम्बन्धे तु सामान्यविशेषत्वं कार्यकारणत्वं सारूप्यरूपं चेत्थं सम्बन्धत्रयं तस्योल्लंधनं न समाश्रयते। सामान्यस्य विशेषत्वे सामान्येन विशेषस्याथवा विशेषेण सामान्यस्य प्रतीतौ द्वयोः कार्यकारणत्वेऽपि कार्येण कारणस्याथवा कारणे कार्यस्य व्यञ्जनत्वे द्वयोः स्वरूपयोः एक एव प्रकारः। एवमप्रस्तुतप्रशंसालंकारस्य पञ्चप्रकाराः। सामान्येन विशेषप्रतीतौ। यथा—

---

अतएव अप्रस्तुत प्रशंसा का यहाँ कथन है। इस अन्वर्थता के आश्रयण सम्बन्धी सामर्थ्य से अप्रस्तुत का वाच्यत्व इस सूत्र में अनुपात्त होता भी प्राप्त है। सम्बन्ध के विना पुनः अप्रस्तुत से प्रस्तुत के अवगत होते अवगति सम्बन्धी व्याप्ति है। ऐसे दूसरे अर्थ की सिद्धि से सम्बन्ध होना अपेक्षित है। सम्बन्ध में तो सामान्य से विशेष अथवा विशेष से सामान्य दोनों के कार्य कारणत्व स्वरूपता के रूप सम्बन्ध से इन तीनों का उल्लंघन नहीं होता है। सामान्य का विशेषत्व में सामान्य से विशेष के अथवा विशेष से सामान्य की प्रतीति होने पर दोनों कार्य कारणत्व में भी कार्य से कारण का अथवा कारण से कार्य की व्यञ्जना होने पर दो प्रकार की स्वरूपता में एक ही प्रकार का है। इस प्रकार पांच प्रकार का अप्रस्तुत प्रशंसा अलंकार हुआ। सामान्य से विशेष की प्रतीति में उदाहरण—

---

25 — Aprastutapraśansā—when some generality suggests a particularity or vice versa or a cause suggested effect or vice versa, it is a case of this figure of speech. So this figure is of four types. There is a fifth case too; where both cause and effect suggest another cause and effect. Under the fifth type authorities like Abhinavagupta and Ruyyaka have accepted the possibility of ( Aprastutapraśansā ) even when a particular suggests another

**दयायै दृक् कर्णः सरसकविसूक्ताय वदनं,**
**सरस्वत्यै पृथ्व्यै भुजशिखरमीशाय हृदयम् ।**
**इति प्रत्तास्तावत् स्वयमवयवा अप्यविरतं,**
**प्रदेयं किं कस्मै न तव नरसिंह क्षितिपते ॥१२५॥**

अत्र मनोरथपथातिशायि तव वितरणमिदं येन कृतार्थी कृतोऽहमिति विशेषे प्रस्तुते किं कस्मै न त्वया प्रदीयत इति सामान्यमुक्तम् । तेनात्र सामान्यादप्रस्तुताद्वाच्यात् प्रस्तुतो विशेषः प्रतीयते । विशेषात् सामान्य प्रतीतौ यथा--

**नृसिंह, वसुधाधिप त्वयि रणोन्मुखे धावतः,**
**प्रतीपपृथ्वीपतेः पथि पथि प्रदीप्तक्षुधः ।**
**चिरादगुरबन्ध्यतां दुरवगाहविन्ध्याटवीं,**
**पलाशिविटपाञ्चलाहृतफलार्पणेन द्विपाः ॥१२६॥**

---

दृष्टिः दयायै श्रवणं सरसकविसूक्तये, मुखं सरस्वत्यै, पृथ्व्यै भुजशिखरं; हृदयं प्रभुतायै स्वयमेते नाविरताः । हे नरसिंह नरपते ! तवावयवाः कस्मै न प्रदेयाः अर्थात् सर्वेभ्यः प्रदेया; ।

अत्र मनोरथ पथशायिते दानं, येन कृतार्थीकृतोऽहमिति विशेषे प्रस्तुते किं कस्मै न त्वया दीयते इति सामान्यमुक्तम् । तेनेह सामान्यादप्रस्तुताद्वाच्यात् प्रस्तुतो ज्ञायते । विशेषात् सामान्यप्रतीतौ यथा—

नरसिंह नरेश । रणेत्वयि मति, धावन्त शत्रवः मार्गे दीप्तक्षुधः । तेभ्यो हस्तिभिः काठिन्येनावगाहविन्ध्याचलपलाशिवृक्षेभ्यः आहृतफलानि प्रदत्तानि ।

---

दया के लिए दृष्टि, सरस कवि सूक्त के लिए कान, सरस्वती के लिए मुख, पृथ्वी के लिए भुजा, प्रभुता के लिए हृदय में देने वाले तब स्वयं अवयव भी विरत नहीं हैं। हे नर सिंह नरपति तुम्हारा अवयव किसके लिए प्रदेय नहीं है । अर्थात् सब प्रदेय है ।। यहाँ मनोरथ पथशायी तुम्हारा यह दान है, जिससे मैं कृतार्थ हुआ । इस प्रकार विशेष प्रस्तुत में क्या किसे तुम्हारे द्वारा नहीं दिया जाता है । यह सामान्य रूप से कहा गया । उससे यहाँ सामान्य अप्रस्तुत वाच्य से प्रस्तुत विशेष की प्रतीति होती है । विशेष से सामान्य की प्रतीति में उदाहरण—

नरसिंह नरेश ! तुम्हारे रणाङ्गण में दौड़ते हुए शत्रु राजा मार्ग में दीप्त क्षुधा वाले अर्थात् भूखे हुए हैं । उनके लिए हाथी देर से एवं कठिनता से पार पाने योग्य विन्ध्याचल के पलाशि वृक्ष से लिए गए फल के अर्पण से संलग्न हुए । अर्थात् फलार्पण किए ।

अत्र रणाय स्पृहयति नरसिंहक्षितिपतौ कति कति न दुरवस्थामन्वभवन्नरपतय इति सामान्ये प्रस्तुते प्रतीपपृथ्वीपतेरिति विशेषः कथितः । कार्यात् कारणप्रतीतौ यथा—

क्षीरोदो लवणोदवत् कुमुदिनी नीलोत्पलिन्याकृति,
ज्योत्स्ना ध्वान्तमलीमसामलयजः कालागरुश्यामलः ।
हंसाः क्रौञ्चसहोदराः किमपरं मुक्ताश्च नीलोपमाः,
श्रीमन् वीर नृसिंह देव भवतः कीर्तेः स्फुरन्त्यग्रतः ॥१२७॥

इह क्षीरोदप्रभृतीनामुपमानत्वेनोपनिबद्धानामप्रस्तुतत्वं कीर्तेश्चोपमेयत्वेनोपात्तायाः प्रस्तुतत्वम् ।

---

इह युद्धायेच्छति नरसिंहनृपतौ कति कति न दुरवस्थामन्वभवन्नरेशाः इति सामान्ये प्रस्तुते शत्रुनरेशस्येति विशेषो भणितः । कार्यात् कारणप्रतीतौ यथा—

श्रीमान् नरसिंह देव ! तव कीर्तेः स्फुरन्ति पुरतः सर्वेऽपि । नीलोपमाः मुक्ताः हंसाः क्रौञ्चसहोदराः मलयजकालागरुचन्द्रज्योत्स्ना मलिना,क्षीरसागरो लवणसागरः कुमुदिनी नीलोत्पलिनीभूता ।

अत्र क्षीरसागरादीनामुपमानेनोपनिबद्धेनाप्रस्तुतत्वम् । कीर्तेरुपमेयत्वेनोपात्तायाः प्रस्तुतत्वम् ।

---

यहाँ युद्ध के लिए स्पृहा करने वाले नरसिंह नरेश के होने पर कितनी-कितनी नहीं 'दुरवस्था का अनुभव राजा गण करते हैं । इस प्रकार सामान्य के प्रस्तुत होने पर शत्रुराजा का ऐसा विशेष कथन है । कार्य से कारण प्रतीति का उदाहरण देखें ।

हे नरसिंह देव ! आप की कीर्ति के आगे सभी स्फुरित है । क्षीरसागर लवण-सागर हो गया । कुमुदिनी नील कमलिनी की आकृतिवाली हो गई । चन्द्रज्योत्स्ना मलिन हो गयी । मलयज काला चन्दन कृष्ण वर्ण हो गया । हंस क्रौञ्च पक्षी का सहोदर हो गया । और क्या कहा जाय ? मोती नीली हो गई ।

यहाँ क्षीर जल वाले आदि के उपमान से निबद्ध होने से अप्रस्तुतत्व है । कीर्ति उपमेयत्व से उपात्त प्रस्तुतत्व है ।

---

particular or a generality suggests another generality. They give it the name of ( Anyokti ) or ( sāroopyanibandhanā Aprastuta-praśansā. Vidyādhara has accepted the name ( sāroopyaniband-hanā ); but has confined himself only to the case where in cause and effect suggest another cause and effect, though he has not specially refuted the stand of Abhinava Gupta and Ruyyaka.

ततः क्षीरसागरादिगतेन लवणार्णवत्वादिसंभावनावशोन्मिपितेनाप्रस्तुतेन मालिन्यरूपेण कार्येण लोकोत्तरं किमपि कीर्तिगतमवदातत्वंप्रस्तुतमेव प्रतीयते। कारणात् कार्यप्रतीतौ यथा--

**बाहुस्ते नरसिंह देव विजयश्रीकेलिसौधध्वज,**
**स्तत्रापिप्रलयाग्निधूमरुचिना खड्गेन सख्यंगतः।**
**निर्मर्यादविशीर्यमाणविशिखप्राग्भारशात्कारिणि,**
**प्राक्रीडत् समरे सपत्नहरिणाक्षीणां ह हा हा विधिम् ॥१२८॥**

अत्र सपत्नहरिणाक्षीणां कीदृशी दशा वर्तत इति राज्ञा कार्ये पृष्ठे केनापि कारणमुदीरितम्। सारूप्ये यथा--

**एणश्रेणिशशकपरिषच्छल्यकानां कुटुम्बं,**
**केकिव्यूहः श्रयति सुखितां यत्र कुत्रापि कुञ्जे।**
**कोऽसौ धन्यः कथय सुकृतीपादपोऽभ्रंलिह,**
**श्रीर्यस्यच्छायामयमनुसरत्यातपार्तः करीन्द्रः ॥१२९॥**

---

सम्प्रति क्षीरसागरादिनालवणसागरादिरूपस्य संभावनावशादुन्मीलिताप्रस्तुतेन मलिनतारूपकार्येण लोकोत्तर कीर्तिगतप्रस्तुतस्य प्रतीतिः। कारणात् कार्यस्य प्रतीतौ यथा--

हे नरसिंह देव! ते बाहुर्विजयश्रीक्रीडाभवनस्य ध्वजरूपेणावस्थितः। तत्रापि प्रलयाग्निधूमकीर्त्या ते खड्गस्य मित्रतार्थात् तत्समानमेव। मर्यादाविहीनेन त्यक्ताः वाणाः ध्वनिं कुर्वन्ति। समरे शत्रुस्त्रीणां हरिणाक्षीणां क्रीडा। कथं विधिविडम्बना।

कीदृशी दशा शत्रुस्त्रीणां राज्ञा कार्ये सति केनापि पृष्ठे कारणमुक्तम्। सरूपतायाः उदाहरणमत्र--

मृगसमूहः शशकसमूहः शल्यकाः भ्रमराः यत्र कुत्रापि कुञ्जे सुखिनः समाश्रिताः। कथय, कोऽसौ धन्यो द्रुमः। भ्रमराः यत्र शोभिताः। तपार्तगजेन्द्राः यस्यच्छायामनुसरन्ति।

---

अब क्षीरसागर आदि लवणसागर आदि होने की संभावना वश उन्मीलित अप्रस्तुत से मलिनता रूप कार्य से लोकोत्तर किसी भी कीर्तिगत प्रस्तुत की ही प्रतीति होती है। कारण से कार्य की प्रतीति में जैसे —

नरसिंह देव! तुम्हारी भुजा विजयलक्ष्मी की क्रीडा महल की पताका है। वहाँ भी प्रलयाग्नि धुआँ की कान्ति से तलवार की मित्रता है। अर्थात् उसके समान है। मर्यादारहित छोड़े गए वाण जो ध्वनि कर रहे हैं, समराङ्गण में शत्रु की हरिण नेत्र वाली पत्नियों की क्रीडा रूप हुए हैं। यह कैसी विधि की बिडम्बना है?

अत्र सरूपादप्रस्तुताद्वाच्यात्तरोः सरूप एव प्रस्तुतोमहान्तमपि रक्षितुंक्षमो नरसिंहमहीपतिः प्रतीयते। अभिनवगुप्ताचार्याः पुनरस्यां वाच्यव्यङ्ग्ययोः सममेव प्राधान्यममाहुः।

**सामान्येन विशेषः सामान्यं वा यदा विशेषेण।**
**कथितः समर्थ्यतेऽर्थोभवति तदार्थान्तरन्यासः ॥१३०॥**

अर्थ्यत इत्यर्थः प्रस्तुत इति यावत्। इहाप्रस्तुतप्रशंसा प्रसंगसंगतत्वेनास्य निरूपणम्। अपूर्वत्वेन प्रतीतेरविद्यमानत्वादनुमानवैलक्षण्यम्।

**लक्ष्मीस्ते परिचारिका दशदिशो दास्यस्तवाज्ञापराः,**
**पृथ्वी ते करदायिनी तवगिरां देवी विनोदास्पदम्।**
**गाढंवीर नृसिंह देव निखिलप्रत्यर्थिलक्ष्मीर्मुदा,**
**त्वामालिङ्गति मन्त्रशक्ति महतां का वा न वश्यः स्त्रियः ॥१३१॥**

---

इह सारूप्यस्यांप्रस्तुतवाच्येन तरुस्वरूपतैव प्रस्तुतस्य महतोऽपि रक्षार्थसमर्थनरसिंहनरेशस्य प्रतीतिः। पुनः वाच्यव्यङ्ग्ययोः प्राधान्यमेवाभिधीयते। अभिनवगुप्ताचार्यस्तु सहमतः।

यत्र प्रस्तुतस्य सामान्यमथवा विशेषस्य पूर्वं वा पश्चाद् निर्दिष्टस्य तस्यापरेण समर्थनेनार्थान्तरं तत्रार्थान्तरन्यासोऽलंकारः। प्रस्तुत इति यावदर्थ्यत इत्यर्थः। अत्राप्रस्तुतप्रशंसाप्रसङ्गे न निरूपणम्। अपूर्वतयाप्रतीतेरवर्तमानतयानुमानस्य वैचित्र्यम्। लक्ष्मीस्ते दासी। दश दिशाः ते सेविकाज्ञापरिकाश्च। पृथ्वी ते करं ददाति। तव वाग्देवी विनोदशालिनी प्रचुरा। हे वीर नरसिंह देव! सम्पूर्णशत्रुलक्ष्मीः प्रसन्नतया त्वामालिङ्गति। अनाहतासम्मतिः। सर्वाः स्त्रियः वशीभूताः।

---

यहाँ शत्रु की स्त्रियों की कैसी दशा है? राजा द्वारा कार्य सम्पन्न करने पर किसी के द्वारा पूछे जाने पर कारण वताया गया है। सरूपता का उदाहरण—

मृग समूह; खरगोश का समूह, साही का समूह भौंरो का झुंड जहाँ कही भी कुंज में सुखी होने के लिए आश्रयण करता है। कहिए, वह कौन सौभाग्यशाली वृक्ष है, जिसपर भौरों की छटा है और कौन सा गजेन्द्र हे, जो धूप से पीडित है, जिसकी छाया का अनुसरण करता है। ऐसा वह वृक्ष धन्य है।

यहाँ सारूप्य अप्रस्तुत वाच्य से तरु की स्वरूपता ही प्रस्तुत महानता की भी रक्षा करने के लिए समर्थ नरसिंह की प्रतीति होती है। पुनः इसी में वाच्य व्यङ्ग्य दोनों के साथ ही प्रधानता कही गयी है। यह अभिनवगुप्ताचार्य का मत है।

जहाँ प्रस्तुत का सामान्य अथवा विशेष के पूर्व अथवा पश्चात् निर्दिष्ट उसके दूसरे के समर्थन से अर्थान्तर हो वहाँ अर्थान्तरन्यास अलंकार होता है।

अत्र मन्त्रशक्तिमहतामिति सामान्येन लक्ष्मीस्त्वामालिङ्गतीति विशेषः समर्थितः ।

**वीरः सर्वानपि नरपतीञ्छौर्यगाम्भीर्यभाजः,**
**शक्तो जेतुं निशितविशिखैः कार्मुकाणां कदम्बैः ।**
**एतत् सत्यं भुवनभवनाभोगसाम्राज्यलक्ष्मी,**
**शिक्षादक्षो जयति नृपतीनुपतीनुत्कलक्षोणिपालः ।।१३२।।**

अत्र सकलवीरवृतान्तः सामान्यरूपो विशेषरूपेण नरसिंहनरपतिवृत्तान्तेम समर्थितः । अयमत्र प्रतिफलितोऽर्थः । सामान्यविशेषयोवच्यियोवच्यित्वेऽर्थान्तरन्यासः । सामान्ययोरेव विशेषयोरेव वा वाच्यत्वे दृष्टान्तः । अत्र वीप्सासमानफलं बहुवचनमवश्यं प्रयोक्तव्यं सर्वादिशब्दोऽथवा यथा–सर्वोपसंहाररूपा व्याप्तिर्व्यज्यते । इतरथा वाच्यवचनं स्यात् ।।

---

इह लक्ष्मीस्त्वामालिङ्गतीति विशेषः समर्थितः. शक्तिमहतामिति सामान्थेन । सत्यमिदं भुवनस्य भवनानां भोगसाम्राज्यलक्ष्मी, शिक्षादक्षो नरेशः उत्कलाधिपतिः भूपतीन् जयते ।

वीरः शक्तिशाली राजा समग्रवीरत्वगाम्भीर्येण युक्तान् भूमिपालान् तीक्ष्णैः वाणैः जेतुं समर्थः ।

इह सम्पूर्णवीरवृत्तान्तसामान्यरूपं विशेषरूपेण नरसिंहभूपतिवृत्तान्तेन समर्थितम् । अत्रायमर्थः प्रतिफलितः । सामान्यरूपं विशेषयोवच्यियोर्वाच्यत्वेऽर्थान्तरन्यास; । सामान्ययोर्विशेषयोरेव वा वाच्यत्वे दृष्टान्तः । इह द्विरुक्तसमानफलं बहुवचनमवश्यं प्रयोज्यम् । सर्वादिशब्दोऽथवा यथा सर्वोपसंहाररूपाव्याप्तिरभिव्यनक्ति । अन्यथा बाच्यावचनं स्याद्दोषः ।

---

अर्थ किया जाने वाला अर्थ प्रस्तुत तब होता है । यहाँ प्रस्तुत प्रशंसा प्रसङ्ग से इसका निरूपण हुआ है । अपूर्वता से प्रतीति की वर्तमानता न रहने से अनुमान कीं विलक्षणता होती है ।

लक्ष्मी तुम्हारी सेविका है । दस दिशाएं तुम्हारी आज्ञापरक दासियाँ है । पृथ्वी तुम्हें कर देने वाली है । तुम्हारी वाणी देवी अत्यन्त विनोद युक्त है । हे वीर नरसिंह देव ! सम्पूर्ण शत्रु की लक्ष्मी प्रसन्नता से तुम्हारा आलिङ्गन करती है । सम्मति अनाहत है । कौन ऐसी स्त्री है, जो वशीभूत न हो । अर्थात् सभी वशीभूत हो जाती हैं ।

मंत्र तुम्हें आलिङ्गन करती है । इस सम्मति की महिमा सामान्य से लक्ष्मी तुम्हें आलिंगन करती है । यह विशेष समर्थित है ।

**यत्र व्यङ्ग्यस्य सतो हेतोः कार्याभिधानभङ्गीभिः ।**
**स्यादभिधानं सुधियः पर्यायोक्तं विदुस्तदिदम् ॥१३३॥**

अत्र प्रयीयमानप्रस्ताव एवास्य निरूपणकारणम् । ध्वन्यमानत्वमनुभवत एव कथं वाच्यत्वानुभव इत्यभिधानस्य व्याघातः स्यादित्याशयवानाह । कार्याभिधान-भङ्गीभिरिति । कार्योपनिबन्धनद्वारेण यत्र कारणमभिधीयते तत्र पर्यायोक्तम् । नेदम-प्रस्तुतप्रशंसा । अत्रोभयोः प्रस्तुतत्वात् । तस्याः पुनरप्रस्तुतकार्यात् प्रस्तुतस्य कार-णस्थ गम्यत्वमित्यनयोर्नैकविषयत्वम् । यत् पुनरिह कार्यस्यैव वर्णनं तत्कारणा-पेक्षयास्य चमत्कारातिशयकारित्वात् । यथा—

---

यत्र प्रस्तुतकार्यस्याभिधानेन प्रस्तुतमेव कारणं ज्ञायते तत्र कार्येण कारणस्यैव पर्यायेण भङ्ग्यन्तरेणोक्ते पर्यायेण भङ्ग्यन्तरेणोक्ते पर्यायोक्तालंकारो भवति । इह प्रतीयमानप्रस्ताव एवास्यनिरूपणस्य कारणम् । ध्वन्यमानत्वमनुभवत एव कथं वाच्यतानुभव इत्यभिधानस्य राहित्यं स्यादित्याशयवानाह ।

कार्याभिधानभङ्गीभिरिति । कार्योपनिबन्धनद्वारेण यत्र कारणस्याभिधानं तत्र पर्यायोक्तालंकारः । नादः अप्रस्तुतप्रशंसा । अत्रोभयोः प्रस्तुतेन प्रतीयते । तस्याः पुनरप्रस्तुतकार्यात् प्रस्तुतस्य कारणस्य गम्यत्वमिति । अनयोः नैकविषयत्वम् । यत्र पुनः कार्यस्य वर्णनं तत्कारणापेक्षयास्य चमत्कारातिशयकारणात् । यथा—

---

यह सत्य है । भुवनों के भवनों की भोग साम्राज्य लक्ष्मी शिक्षा में दक्ष उत्कल-नरेश, राजाओं पर विजय प्राप्त करते हैं । वीर एवं शक्तिशाली राजा सभी वीरता गंभीरता से युक्त राजाओं को तेज धनुष वाणों से जीतने में समर्थ हैं ।

यहाँ सम्पूर्ण वीरों का वृत्तान्त सामान्यरूप है । विशेष रूप से नरसिंह नरेश वृत्तान्त से समर्थित है । यहाँ यह अर्थ प्रतिफलित होता है । सामान्य विशेष दोनों वाच्य में वाच्यत्य होने पर अर्थान्तरन्यास अलंकार होता है । दो सामान्य अथवा दो विशेष के वाच्यत्व होने से दृष्टान्तालंकार होगा । वहाँ वीप्सा समान फल बहुवचन का प्रयोग अवश्य होना चाहिए । अथवा सर्वआदि शब्द जैसे–सर्व उपसंहार रूपी व्याप्ति की व्यञ्जना हो । अन्यथा वाच्यावचन दोष होगा ।

जहाँ प्रस्तुत कार्य के कथन से प्रस्तुत को ही कारण जाना जाता है, वहाँ कार्य द्वारा कारण के ही पर्याय से भङ्ग्यन्तर से पर्यायोक्तालंकार होता है । यहाँ प्रतीय-मान प्रस्ताव ही इसके निरूपण का कारण है । ध्वन्यमान का अनुभव करते ही कैसे वाच्यत्व का अनुभव हो, ? इसके अभिधान का राहित्य हो, आशयवान् ने ऐसा कहा । कार्याभिधान भङ्गी से यह ऐसा है । कार्य उपनिबन्धन द्वारा जहाँ

अस्पृष्टाञ्जनसम्पदः स्मृतिपथावस्थायिलीलास्मिताः,
प्रत्याख्यातवतंसदामरचनास्त्यक्ताङ्गरागश्रियः ।
दूरोद्धूतकुरङ्गनाभिमकरीभङ्गास्तरङ्गभ्रुवः,
संजाता नरसिंह पार्थिव भवत्प्रत्यर्थिपृथ्वीभुजाम् ।।१३४।।

अत्रारिभूपालकलत्रगताञ्जनवर्जनादिरूपकार्यमुखेन विरोधिवधलक्षणं कारणं पर्यायेणोक्तम् । किं चात्र नृसिंहनृपप्रभावस्तावद्वर्ण्यते । स च रिपुकुलकदनलक्षणात् कारणादिव वैरिवधूवृत्तान्तरूपात् कार्यादपि वर्णितो भवतीत्युभयोरपि वर्ण्यमानराजप्रभावजन्यत्वेन प्रस्तुतत्वाद्वर्णनमुचितमेव । तथापि यदत्र कार्यस्यैव वर्णनं तत् कारणापेक्षयास्य चमत्कारातिशयकारित्वात् ।

---

हे नरसिंह राजन् ! भवतः शत्रुनरेशपत्नीनामीदृशी दशा यत् ताः अञ्जनस्य प्रयोगं स्पर्शनं च न कृतवत्यः । स्मरणपथेऽस्थायि क्रीडायां स्मिताः श्रेष्ठधनरचनाः त्यक्ताङ्गरागशोभायाः दूरादुत्थितहरिणनाभिमकरीभङ्गास्तरङ्गभ्रुवः । शत्रुनरेशाश्च मृताः जाताः ।

अत्र शत्रुभूपालानां पत्न्योऽञ्जनस्य स्पर्शनं न कुर्वन्तीतिवर्जनादिरूपकार्यमुखेन शत्रुवधलक्षणकारणं पर्यायेणोक्तम् । किं चात्र नरसिंहनरेशस्य प्रभावस्य वर्णनम् । तच्च शत्रूणांवन्धलक्षणकारेणनैव शत्रुवधूवृत्तान्तरूपकार्यादपि वर्णितम् । उभयोरपिवर्णनयोरपराजप्रभावोत्पन्नप्रस्तुतत्वाद्वर्णनमुचितमेव । तथापि यत्र कार्यस्यैव वर्णनं तत्कारणापेक्षयास्य चमत्कारातिशयकारित्वात् ।

---

कारण का अभिधान हो, वहाँ पर्यायोक्त अलंकार होता है । यह अप्रस्तुत प्रशंसा नहीं है । यहाँ दोनों के प्रस्तुत होने से यह ऐसा होता है, उसका पुनः अप्रस्तुतकार्य से प्रस्तुत कारण का गम्यत्व है । इन दोनों में अनेक विषय हैं । जब यहाँ पुनः कार्य का ही वर्णन हो तो कारण की अपेक्षा इसकी चमत्कारातिशयकारिता होती है । जैसे—

हे नरसिंह नरेश ! आप से शत्रुता करने वाले राजाओं की पत्नियों की ऐसी दशा हो गई कि उन्होंने अञ्जनका स्पर्श नहीं किया । स्मरण पथ में अस्थायी क्रीडा में कुछ मुस्कराहट युक्त श्रेष्ठधन की रचनाएँ छोड़ीं गई । अङ्गराग की की शोभा से दूर उठी हरिणनाभि सदृशगन्ध टूटे तरङ्ग की भ्रूवाली हुई । शत्रु राजाओं का मरण हो गया ।

यहाँ शत्रु राजा की पत्नी अन्जन का स्पर्श नहीं करती । ऐसे वर्जन आदि कार्य मुख से शत्रु वध लक्षण कारण पर्याय से कहा गया और यहाँ क्या नरसिह राजा के प्रभाव का वर्णन है । और वह शत्रुओं के वध लक्षण कारण से ही शत्रु

His avoidi ng of discussion of the stand of Ruyyaka and Abhinava-Gupta is enough to indicate his disagreement with them. Vidyādhara, however, has specially supported the views of Abhinava-Gupta by saying that this is not a case of ( Dhvani ), because both the connoted and the suggested meaning vie with each other, so that the suggested meaning never gains a clear predominence over the connoted meaning.

26 – Arthāntarnyāsa—Where the object being described is supported by a general or particular statement respectively. When the object described is of a particular over general nature, it is a case of this figure. It should, however, be noted that a general statement is never supported by a general statement not a particular by a particular. It is always a case of a general statement being supported by a particular statement or a particular by a general.

For exmple; each brave person is one who can Vanquish all his contemporary kings. Narsingha too has been able to subdue every king of this earth Here every brave person pertains to general statement and lends support to the particular statement seeking to establish that Narsingha is now the unchallenged emperor of all the kingdoms of this earth.

27–Paryāyokta–Where the effect suggests the cause and both the effect and the cause are the matters under description; this figure occurs 'O king Narsingha ! the wives of your enemies have renounced decorating themselves with ornaments and their lips are no longer smiling which is an effect of their widowhood which has not been expressly described here; but it is suggested. Because king Narsingha has always killed all his enemies widow-ing all their wives. It is but natural according to Hindu custom that they should have given up decorating themselves. Here Vidyādhara has followed the line of Ruyyaka as also of Udbhaṭa and Bhāmaha.

यदि पुनरिह प्राधान्येन प्रतिभाति व्यङ्ग्यं तदा भवतु ध्वनावस्यान्तर्भावः। न तु ध्वनेरत्रान्तर्भावः। अङ्गित्वेन महाविषयत्वेन च ध्वनेः स्थितत्वात्।

**यत्र प्रक्रान्तायां स्तुतौ कथंचित् प्रतीयते निन्दा।**
**निन्दायां स्तुतिरथवा सेयं व्याजस्तुतिर्द्विविधा ॥१३५॥**

कथंचित् प्रमाणान्तरबाधितत्वेनेति यावत्। अत्र निन्दायां प्रस्तुतायामप्रस्तुता स्तुतिः प्रारभ्यमाणा प्रमाणान्तराद्बाधमनुभवन्ती निन्दा पर्यवसायिनी भवति। एवं स्तुतौ प्रस्तुतायामप्रस्तुतनिन्दा प्रक्रम्यमाणा प्रमाणान्तराद्बाधमश्नुवाना स्तुतौ पर्यवस्यति। इयं च स्तुतिनिन्दात्मकविच्छित्तिविशेषावलम्बनेन प्रवृत्तेत्यप्रस्तुतप्रशंसायाः पार्थक्येन स्थिता। अलीकत्वाद् व्याजरूपास्तुतिः। व्याजेन निन्दामुखेन वा स्तुतिरित्यन्वर्थता द्वैविध्यमधितिष्ठन्ती न द्वैविध्यमतिवर्त्तते। क्रमेण यथा—

---

यद्यत्र पुनः प्रधानतया प्रतिभाति व्यङ्ग्यं तदास्यान्तर्भावः ध्वनौ। न तु ध्वनेरस्यान्तर्भावः। अङ्गितया महाविषयतया ध्वनेः स्थितिकारणात्।

यत्र प्रस्तुतस्तुतौ कथंचिद् निन्दा प्रतीयतेऽथवा निन्दायां स्तुतिः ज्ञायते तदा तत्र सा व्याजस्तुतिः। इयं द्विविधा।

कथंचिदन्यप्रमाणस्य बाधितवेति यावत्। अत्र प्रस्तुतनिन्दायामप्रस्तुतास्तुतिः आरभ्यमाणा। इतरप्रमाणाद्बाधमनुभवन्ती निन्दा पर्यवसायिनी भवति। एवं स्तुतावप्रस्तुतनिन्दा। प्रस्तुतेतरप्रमाणाद्बाधं संस्पर्शयन् स्तुताविवान्तः। इयं च स्तुतिः निन्दात्मिका सौन्दर्यविशेषावलम्बनेन प्रवृत्तेत्यप्रस्तुतप्रशंसायाः पृथग्भूतेन स्थिता। असत्यतया व्याजरूपा स्तुतिः। व्याजेन निन्दारूपेणाथवास्तुतिरित्यन्वर्थतया व्याजस्तुतिर्द्विविधा। क्रमेणोदाहरणम्।

---

की पत्नी वृत्तान्त रूप कार्य से भी वर्णित है। इन दोनों में भी वर्णन योग्य राजप्रभाव से उत्पन्न प्रस्तुत ये वर्णन उचित ही हैं। तथापि जहाँ वर्णन हो, जहां कारण की अपेक्षा इसकी चमत्कारातिशयकारिता कारण है।

यदि पुनः यहाँ प्रधानता से प्रतिभासित व्यङ्ग्य हो तो ध्वनि में इसका अन्तर्भाव होता है। ध्वनि का अन्तर्भाव नहीं होता है। महा विषयत्व अङ्गी होने से ध्वनि की स्थिति कारण है। जहाँ प्रस्तुत स्तुति में किसी प्रकार की निन्दा प्रतीत हो अथवा निन्दा में स्तुति ज्ञात हो, तो वहाँ वह व्याजस्तुति दो प्रकार की होती है।

किसी भी प्रकार दूसरे प्रमाण के बाधित होने से यह उस समय की स्थिति है। यहाँ प्रस्तुत निन्दा में अप्रस्तुत की स्तुति का आरम्भ होता है। दूसरे प्रमाण से बाध का अनुभव करती हुई निन्दा में अन्त वह स्तुति होती है। इस प्रकार प्रस्तुत स्तुति में अप्रस्तुत निन्दा प्रस्तुत दूसरे प्रमाण से बाध का स्पर्श करते हुए स्तुति

**प्राणेश्वर स्वजनतुल्यसुखस्त्वमेवं, त्वय्यभ्युपेत बहुवल्लभताविलासे।**
**यन्निर्विवेश रजनीरमणीसहस्रं, पूर्वेद्युरेष भवदाननबन्धुरिन्दुः ॥१३६॥**

अत्र भवान् स्वजनतुल्यसुख इति स्तुतिः प्रक्रान्तान्यासक्तो भवानिति निन्दामभिव्यनक्ति।

**दिङ्मातङ्गाः कनकशिखरीसप्तयः सप्तसप्ते,**
**श्चिन्तारत्नं दिविचरतरुः श्रीनृसिंहक्षितीन्द्र।**
**अद्याप्येतत् सकलमकृथा नार्थिसादित्यपार्थं,**
**स्तेनायं ते वितरणकलाकौशलेनावलेपः ॥१३७॥**

इह परिगणितपदार्थातिरिक्तमखिलमर्प्यर्थिसात् कृतवानिति वस्तु वस्तुना व्यज्यते। तेन च व्यज्यमानेन वाच्यमेवोपस्क्रियत इत्यस्योपसर्जनत्वम् ॥

---

भवतो मुखं चन्द्र इव सहस्ररात्रिरमणीः प्राप्य सुखमजयत्। प्रियस्य स्वजनवन्धुरिव सुखदायको भवान्। एवं ते विलासेऽतिप्रियत्वमभवत्।

इह भवान् स्वजनतुल्यः सुख इतिस्तुतिः। प्रस्तुतेतरासक्तो भवानिति निन्दामभिव्यज्यते।

हे नरसिंह नरेश ! दिग्गजाः सुमेरुगिरिः सूर्यस्य सप्तहयाः चिन्तामणिः कल्पवृक्षादयोऽद्यापि सकलमयाचकरूपेण नाकृथा। ते नायं दानकलाकौशलेनाभिमानो व्यर्थः।

अत्र परिगणितपदार्थातिरिक्तमखिलमर्प्यर्थिसात् कृतवानिति वस्तु वस्तुनाभिव्यज्यते। तेन व्यज्यमानेन वाच्यस्यैवोपकारकत्वमित्यस्योपसर्जनत्वम्।

---

में अन्त होती है और यह स्तुति निन्दात्मक सौन्दर्य है। विशेष का अवलम्बन करने से प्रवृत्त इस अप्रस्तुत प्रशंसा के पृथक्ता में इसकी स्थिति नहीं है। झूठी व्याज स्तुति व्याज से निन्दा स्वरूप होने से अथवा स्तुति इस अन्वर्थकता से युक्त व्याजस्तुति दो प्रकार की होती है। दो से अधिक नहीं होती है। क्रमश; जैसे—

रमणीरूप हजारों रात में चन्द्रमा प्रविष्ट हो सुखदेता हैं। वैसे ही आप का मुख सहस्रों रमणियों को आह्लादित करता है। प्रिय स्वजनबन्धु समान तुम सुख देने वाले हो। इस प्रकार तुम्हारे विलास में बहुत प्रियता हुई।

यहाँ (भवान्) स्वजन तुल्य सुख यह स्तुति है। जो प्रक्रान्त अन्यासक्त है। 'भवान्' इस निन्दा की अभिव्यञ्जना होती है।

हे नरसिंह नरेश ! दिग्गज, सुमेरुगिरि, सूर्य के सात घोड़े, चिन्तामणि, कल्पवृक्ष आदि आज भी यह सब अयाचक नहीं बना दिए गए। उससे तुम्हारे इस दान कलाकौशल का अभिमान व्यर्थ नहीं हुआ।

यहाँ परिगणित पदार्थ के अतिरिक्त सम्पूर्ण मांगने को ऐसा कर दिया कि इस वस्तु से वस्तु की व्यञ्जना होती है और उस व्यञ्जना से वाच्य का ही उपकार होता है। इसका यह उपसर्जनत्व है।

**किमपि विशेषं वक्तुं प्रकृतस्योक्तस्य वक्ष्यमाणस्य ।**
**यः प्रतिषेधाभासः कथितः सोऽयं द्विधाक्षेपः ॥१३८॥**

इह प्रकृतस्यार्थस्य प्रकृतत्वादेवाभिधातुमभिमतस्यक्रियमाणः प्रतिषेधो बाधितः सन्नाभासे पर्यवस्यन् विधिमाक्षिपति। स चाभासमानो निषेध उक्तवक्ष्यमाण-प्राकरणिकगतत्वेन द्वैविध्यमधितिष्ठन्नाक्षेपमपि द्विविधमुत्थापयति। उक्त-विषये च क्वचिद्वस्तु निषिध्यते क्वचन वस्तुनः कथनमित्ययमपि द्विधा भवति। वक्ष्यमाणविषये च कथनमेव निषिध्यते। तत्रापि क्वचन सामान्येन कथयितुमभ्युप-गतस्याभिमतस्य भणितिप्रतिषेधो भवति। क्वचन पुनः कियन्तमप्यंशमभिधाय कियतोऽप्यंशस्य प्रतिषेधः स्यादित्ययमपि द्विधाभवति। ततश्चतुर्धायमाक्षेपः। तत्रोक्तविषयो वस्तुप्रतिषेधो यथा –

---

यत्र निषेधस्याभासः तेन विशेषार्थस्य सिद्धिः तत्राक्षेपालंकारो भविष्यति। स च द्विविधः।

अत्र प्रकृतार्थस्य प्रकृतत्वादेव कथनेऽभिमतस्य प्रतिषेधः बाधितः सन्नाभासेऽन्तः विधेश्चाक्षेपो भवति।

स चाभासमानो निषेधः। कथनीयप्राकरणिकगतत्वेन द्वैविध्यं नातिक्रामति आक्षेपस्यापि द्वौ भेदावुपस्थाप्येते। उक्त विषये क्वचिद् वस्तुनः निषेधः, क्वचिदपि वस्तुनः कथनं भवति। अयमपि च द्विविधकथनीयविषये कथनस्यैव निषेधः। तत्रापि क्वचिदपि सामान्येनाभिधातुं प्राप्तमभिमतवस्तुनः कथने प्रतिषेधः। क्वचिदपि पुनः कियदंशं कथयित्वा कियतोऽशस्य प्रतिषेधः। अयमपि च द्विविधः। अधुना तु चतुर्धायमाक्षेपो भवति। तत्रोक्तविषयवस्तुप्रतिषेधो यथा—

---

जहाँ निषेध का आभास हो, उससे विशेष अर्थ की सिद्धि होती हो, तो वहाँ आक्षेप अलंकार होगा। यह आक्षेपालंकार दो प्रकार का होगा।

यहाँ प्रकृत अर्थ के प्रकृतत्व से ही कहने में अभिमत किया गया प्रतिषेध बाधित होता हुआ आभास में अन्तर होता विधि का आक्षेप होता है। और वह आभास-मान निषेध कहा गया। कहने योग्य प्राकरणिकगत होने से दो प्रकार के आक्षेप को दो भेद से उपस्थापित किया जाता है। उक्त विषय में कहीं वस्तु का निषेध किया जाता है। कहीं वस्तु का कथन होता है। यह भी दो प्रकार का होता है। वक्ष्यमाण विषय में कथन का ही निषेध होता है। वहाँ भी कहीं सामान्य से कहने के लिए प्राप्त अभिमत वस्तु का कथन प्रतिषेध होता है। कहीं पुनः कितने अंश को कहकर कितने अंश का प्रतिषेध है। यह भी दो प्रकार का होता है। तदनन्तर यह आक्षेप चार प्रकार का है। वहाँ उक्त विषय वस्तु प्रतिषेध का उदाहरण देखें –

नाहं दूती भवामि प्रथितपृथुगुण श्रीनृसिंह क्षितीन्द्र,
ब्रूमः श्रेयस्करं ते शृणु हरिणदृशोजृम्भमाणेऽङ्गतापे।
उदबुद्धं पुण्डरीकैः कुमुदकुवलयैर्मीलितं चक्रवाकैः,
संतुष्टं किं च जातं ज्वलदनलशिखा भासुरैःसूर्यकान्तैः ॥१३९॥

अत्रोक्तस्य दूतीत्वरूपस्य वस्तुनो निषेधः कृतः सन्नमृषाभाषितादिहं कमपि विशेषणमभिव्यनक्ति। स च वाच्यस्यैवोपस्कुरुते।

वस्तु कथनप्रतिषेधो यथा—

किं त्वां ब्रूमः कृपालुं यदरिमृगदृशां दृष्टयो वाष्पदिग्धाः
किं सद्वृत्तं रमन्ते त्वदुरसि यदरिक्ष्माभृजां वीरलक्ष्म्यः।
आज्ञा किं ते सुधांशोः श्रियमपहरति त्वद्यशः किं मनस्ते,
हिंसाशून्यं त्वयास्मिञ्जगति कृपणतोन्मीलिता श्रीनृसिंह ।१४०॥

---

भूमौ प्रसिद्धयशसः श्रीनरसिंहनरेशस्याहं दूती न भवामि। अहं त्वां प्रति श्रेयस्करं कथयामि! शृणु हरिणदृशो जृम्भिताङ्गतापे कमलैः विकसितं कुमुदकमलैः सम्पुटितं चक्रवाकैः तुष्टं ज्वलनाग्निशिखया प्रकाशितं, सूर्यकान्तमणिना किं जातम्।

अत्र कथितदूतीरूपवस्तुनः निषेधः। असत्याभाषणेन कमपि विशेषमभिव्यनक्ति। वाच्यस्योपस्कारकः सः।

वस्तुकथने प्रतिषेधो यथा —

किं कथयामः त्वां दयालुं यत्शत्रुमृगदृशां दृशोऽश्रुपूरिताः। तव हृदये किं शुभं वृत्तं, यत्शत्रुनरेशाणां वीरश्रियः ते काज्ञा। ते यशः ईदृशम्। चन्द्रश्रियं हरति। ते मनः हिंसावृत्तिशून्यम्। श्रीनृसिंह! त्वयास्मिन् संसारे कृपणतोन्मीलिता।

---

पृथ्वी में प्रसिद्ध यशगुणवाले श्री नरसिंह नरेश! मैं दूती न होऊँ। हम श्रेयस्कर बात तुमसे कहते हैं। सुनिए! हरिण दृष्टियुक्त जृम्भित, अङ्ग ताप व्याप्त होने पर कमल खिले कुमुद कमल सम्पुटित, चक्रवाक तुष्ट हुए, जलती अग्नि शिखा से प्रकाशित सूर्यकान्ति मणि हुई।

यहाँ कहे गए दूती रूप वस्तु का निषेध किया गया। झूठ न बोलने आदि में किसी विशेष की अभिव्यक्ति होती है। और वाच्य का ही उपस्कारक है।

वस्तु कथन प्रतिषेध जैसे —

तुम कृपालु से हम क्या कहें। जब शत्रु के मृग नेत्र दृष्टियाँ अश्रुपूरित हैं। तुम्हारे हृदय में क्या शुभ वृत्त रमण कर रहा है। जब शत्रु राजा की वीर श्री है। तुम्हारी क्या आज्ञा है। तुम्हारा यश ऐसा है। चन्द्रमा की शोभा का भी अपहरण करता है। क्या तुम्हारा मन हिंसावृत्ति से रहित है। श्री नरसिंह तुमसे इस संसार में कृपणता का उन्मीलन होता है।

अत्र कृपालुमित्यादिवचनस्योक्तस्य निषेधः कृतो निरतिशयशौर्यादिरूपं विशेष-मभिव्यनक्ति वक्ष्यमाणविषयः सामान्याभ्युपगतस्य भणितिनिषेधो यथा--

क्षणं प्रतीक्षस्व वियोगकातरं, विधाय यावत् प्रियसुस्थिरं मनः ।
अयं जनः किञ्चिदुदीरयिष्यति, व्रजाथवा तावदुदीरणेन किम् ॥१४१॥

---

किं त्वां ब्रूमः कृपालुमित्यादिवचनस्योक्तस्य निषेधः कृतः । निरतिशयवीरत्वादि-रूपो विशेषोऽभिव्यज्यते । कथनीयविषयोपगतसामान्यकथनस्य निषेधो यथा—

वियोगकातरं क्षणं प्रतीक्षस्व, एवं कृत्वा यदा सुस्थिरं मनस्ते । अयं जनः किञ्चिदुदीरयिष्यति, कथयिष्यति । गच्छाथवोदीरणेन किं कथनेन स्यात् तावत् ॥

---

तुम कृपालु से क्या कहें इत्यादि उक्त वचन का निषेध किया गया । निरतिशय वीरता आदि रूप विशेष की अभिव्यञ्जना होती है । उक्त विषय सामान्य के कथन के निषेध का उदाहरण –

वियोग कातर को क्षणभर प्रतीक्षा करें । ऐसा तब तक करें जब तक प्रिय मन सुस्थिर हो । यह व्यक्ति कुछ कहेगा । जाओ अथवा कहने से क्या ?

---

28—Vyājstuti—Where tributes paid to someone's high qualities suggest censor or vice verca, it is a case of this figure. For example 'censoring the self satisfaction over and priding in the charity done by Narasingha, the poet says that as long as he has not given away by way of charity, the elephant of the quarters the Meru mountain, the horses of the sun, the anxieties removing stone, his pride is ill found, though apparent by the poet censors king Narsingha'' His speech leaves us to believe that the king has given away everything belonging to him by way of charity. Here too he follows the line of Ruyyaka.

29 - Ākṣepa—Wherein the negation is apparent and leaves another meaning of similar significance this figure occurs and can be divided into two types called (uktaviśeṣa) i. e. where something is negative after it has been expressed and ( Vakṣamāṇa-viśeṣa) i. e. a negation before something has been expressed.

For example, 'O king Narsingha ! I am not a message bearing woman. Eventhough I have to tell you something that will do good to you and it is that as soon as that lady made her appearance

अत्र सामान्येनाभिधानुमभ्युपगतस्य भणितिनिषेधः कृतः सन्निजनिधननिश्चयात्मानं विशेषमभिव्यनक्ति । अंशप्रतिषेधो यथा —

कान्तः किं कैरविण्याः कलयति कमलोल्लासने नैष शक्तिं,
नाथः किं वासराणामुदयति कुमुदेनैष लक्ष्मीं वितन्वन् ।
किं कृष्णो न द्विजानामधरयति पतिं भूयसोक्तेन किं वा
ज्ञातः पश्चात् नृसिंहक्षितितलतिलक त्वं चरित्रैर्विचित्रैः ॥१४२॥

अन्यैरपि दुर्लभं भवतः साम्यमतः कियदभिधास्यामह इति चन्द्रातिरूपतया कियानप्यंश उक्तः कियानपि निषिद्धश्च । अशक्यवचनीयत्वरूपस्तुतिविशेषो व्यङ्ग्यः । अयमत्र फलितोऽर्थः । यत्र प्रतिषेधेन विधिराक्षिप्यते तत्राक्षेपः । यत्र तु विहितः प्रतिषेधस्तत्र नायमलंकारः । यथा—

---

इह सामान्ये कथनोपगतस्य कथनस्य निषेधः कृतः । स्वनिधननिश्चयात्मानं विशेषोऽभिव्यज्यते । अंशप्रतिषेधो यथा ।

चन्द्रः किं कुमुदिनीं विकासयति । कमलविकासने चन्द्रस्य शक्तिर्न । किं दिनकरस्योदये सूर्य; प्रकाशितः कुमुदोऽयं शोभायाः विस्तारे विलासनेऽसमर्थः । किंद्विजानां पतिं कृष्णो नाधः करोति । अथवा किं कथनेन ? हे नरसिंह ! पृथिव्यां तिलकश्रेष्ठो भवान् विचित्रैश्चरित्रैर्ज्ञायतेऽनन्तरम् ।

अन्यैरपि दुर्लभत्वं भवतः साम्यमतः किं कथनीयम् ? अह इति चन्द्रादिरूपत्वेन कियानप्यंशोक्तः कियानपि निषिद्धश्च । अशक्यकथनीयतारूपस्तुतिविशेषो व्यङ्ग्यः । अयं चात्र फलितार्थः । यत्र प्रतिषेधेन विधिराक्षिप्यते तत्राक्षेपालंकारः । यत्र प्रतिषेधो विहितः तत्रायमाक्षेपालंकारो न भवति । यथा —

---

यहाँ सामान्य से कहने के लिए उपगत कथन निषेध किया जाता हुआ स्वनिधन निश्चय में विशेष को अभिव्यक्त करता है । अंश प्रतिषेध जैसे —

क्या कुमुदिनी को चन्द्र खिलाने में जो समर्थ है, वह कमल को खिलाने में समर्थ है । चन्द्रमा की शक्ति नहीं है । क्या दिन का स्वामी सूर्य उदय हो कर प्रकाशित होता है, तो कुमुद में यह शोभा को फैलाने में समर्थ नहीं है । क्या द्विजों के पति को कृष्ण नीचा नहीं करते है । अथवा क्या अधिक कहा जाय ? बाद में ज्ञात होता है; नरसिंह पृथ्वी में तिलक श्रेष्ठ तुम विचित्र चरित्रों द्वारा जाने जाते हो ।

अन्य से भी दुर्लभ आप की समता है । अतः कितना कहा जाय ? ऐसे चन्द्रादि रूपता से कितना अंश कहा गया कितने अंश का निषेध किया गया । अशक्यकथनीयता रूप स्तुति विशेष व्यङ्ग्य है । यहाँ यह अर्थ फलित हुआ । जहाँ प्रतिषेध से विधि का आक्षेप किया जाय, वहाँ आक्षेपालंकार है । जहाँ तो प्रतिषेध विहित है, वहाँ आक्षेपालंकार नहीं होता है । जैसे--

जटाबन्धं बल्कावरणमपि तीव्रातपकृत,
स्थितिंकुर्वन् कल्पद्रुमसुचिरमुग्रंचरतपः।
अथेदं मा चारीः कथमपि कदाचिन्न भविता,
नृसिंहक्षोणीन्दोरिव वितरणं हन्त भवतः ॥१४३॥

इह विहितस्य तपसः प्रतिषेध उक्तः—

अपरस्त्वनिष्टविध्याभासस्तस्याभिधीयते भेदः।
यत्रानभिमत पिशुनो विधिनिषेधं प्रकाशयति ॥१४४॥

तत्रानिष्टस्यानिष्टत्वादेव विधिर्बाधितः प्रतिषेधमाक्षिपतीत्यन्वर्थाभिधानोऽयम्। अनिष्टविध्याभासो यथा।

त्वं चेद् गच्छसि गच्छ सिध्यतु तवाभीष्टं मृधं बल्लभ,
प्रख्यातं तव को न वेद भुजयोरव्याजमोजायितम्।
किं चैतत् कथनीयमस्ति भुवनोत्तुङ्गः कलिङ्गेश्वरः,
संग्रामेऽभिमुखान् निहन्ति न पुनर्वैमुख्यमासेदुषः ॥१४५॥

---

नरसिंह नरेश भवतो वितरणं दानं न पृथ्वीचन्द्रसमानम्। अर्थात् जटाबन्धं बल्कलावरणमपि तीव्रतापस्य स्थितिं सहन् कल्पद्रुमः कठिनं तपोऽकरोत्। अधुनालं तपसा कथमपि तत्सदृशं न भविष्यति।

अत्र विहिततपसः निषेधः उक्तः।

अपरस्त्वनभिमतविध्याभासः आक्षेपस्य भेदः। यत्रानभिमतविधिनिषेधस्य प्रकाशनं तत्रानिष्टस्यानिष्टत्वादेव विधिर्बाधितः प्रतिषेधो नामाक्षेपः। एवमन्वर्थाभिधानोऽयम्। अनिष्टविध्याभासो यथा—

यदि त्वं गच्छसि, गच्छ। तवाभीष्टस्य सिद्धिर्भवतु को न जानीते। भुजयोरोजः व्याजरहितं परिपूर्णमकथनीयम्। कलिङ्गेश्वरः भुवनोत्तुङ्गः। संग्रामे सम्मुखीनाः वीराः हन्यन्ते। पुनश्च विमुखाः शत्रवो न हन्यन्ते।

---

नरसिंह नरेश ! आप का वितरण ( दान ) पृथ्वी पर चन्द्र समान नहीं है। अर्थात् अधिक है। जटाबन्ध वल्कलावरण भी तीव्रताप की स्थिति को सहता हुआ कल्प वृक्ष ने कठिन तपस्या किया। अब यह तपस्या वैसी किसी भी प्रकार नहीं होगी।

यहाँ विहित तपस्या का प्रतिषेध कहा गया।

दूसरा तो अनिष्ट बिधि का आभास आक्षेप का भेद है। जहाँ अनभिमत की विधि के निषेध का प्रकाशन होता है, वहाँ अनिष्ट के अनिष्टत्व से ही विधि बाधित प्रतिषेध का आक्षेप होता है। इस प्रकार यह अन्वर्थक अभिधान किया गया। अनिष्ट विधि आभास जैसे—

अत्रानभिमतमेव प्रियतमप्रस्थानं यदा प्रमुख एवानुमन्यते तदायमनिष्टविधि-आभासे पर्यवस्यति । आयोधनोन्मुखविरोधिवधविधानं पुनर्गमननिषेधमेव पिशुनयति । अयं चाक्षेपसमानन्यायेनात्र निरूपितः ।

**विलसद्विरोधगर्भं ब्रूमोऽलङ्कारवर्गमधुना तु ।**
**स्फुरति विरोधाभासे भवति विरोधाभिधो दशधा ।।१४६।।**

इष्टनिषेधस्यानिष्टविधेश्च बाधित्वादाक्षेपे विरुद्धत्वानुप्रवेशनेन विरोधगर्भा-लङ्कारनिरूपणस्य सम्प्रति प्रस्तावः । जात्यादीनां चतुर्णां पदार्थानां मध्ये सजातीया-भ्यां विजातीयाभ्यां वा परस्परसम्बन्धे विरोधः । स च यथा प्रमुख एवाभासते तथैव यदि विश्राम्यति तदा प्ररुढो विरोधो दोष एव । यदि तु समाधानमस्ति तदा प्रमुख एवावभासनत्वाद्विरोधाभासः । तत्र—

---

अत्रानभिमत एव प्रियतमतत्प्रस्थानं यदा प्रमुख एव तदायमनिष्टविध्याभासे विनाशयति । समराङ्गणे सन्मुखीनां शत्रूणां बधस्य विधानम् । पुनः गमनस्यैव प्रकाशनम् । आक्षेपोऽयं समान्यन्यायेनेह निरूपितः ।

अधुना वयमलङ्कारवर्गेषु विरोधगर्भितालङ्कारान् ब्रूमः । यत्र विरोधस्तत्र विरोधालङ्कारो भवति । इष्ट निषेधस्यानिष्टविधेः बाधायाः आक्षेपविरुद्धतायाः अनुप्रवेशेन विरोधालङ्कारनिरूपणस्य साम्प्रतं प्रस्तावोऽस्ति । जातिगुणक्रिया-द्रव्यानां मध्ये सजातीयविजातीयाभ्यां परस्परसम्बन्धेन विरोधालङ्कारो भवति । स च यथा प्रमुख एवावभासितः तथैव यदि विश्राम्यति तदा प्ररूढो विरोधो दोष एव । यदि समाधानं भवति तदा प्रमुख एवावभासनतायाः विरोधाभासः ।

---

तुम यदि जाते हो, जाओ । तुम्हारा अभीष्ट सिद्ध हो । तुम्हें कौन न जाने ? दोनों भुजाओं का ओज व्याजरहित परिपूर्ण है और क्या कहने योग्य है ? ऊंचे भुवन कलिङ्ग नरेश हैं । संग्राम में सम्मुख हुए वीरों को मारते हैं । पुनः पीछे जाने वाले शत्रुओं को नहीं मारते हैं ।

यहाँ अनभिमत ही प्रियतम प्रस्थान जब प्रमुख ही माना जाता है, तब यह अनिष्टविधि आभास में अन्त होता है । समराङ्गण में सन्मुख शत्रुओं के मारने का विधान है । पुनः गमन निषेध का ही, प्रकाशन करता है और यह आक्षेप समान न्याय से यहाँ निरूपित किया गया ।

अब हम अलंकार वर्ग में विरोध गर्भित, जहाँ विरोधाभास हो, कहेंगे । वहाँ विरोधालंकार होगा । इष्ट निषेध के अनिष्ट विधि के बाध से आक्षेप में बिरुद्धता से अनुप्राणित होने पर विरोधालंकार निरूपण का अब प्रस्ताव है ।

जाति आदि चार पदार्थ ( जाति, गुण, क्रिया द्रव्य ) के मध्य सजातीय अथवा बिजातीय भेद से परस्पर सम्बन्ध होने में विरोध अलंकार होता है । और वह

जातेर्जात्यादिभिः सार्धंचतस्रः प्रथमं भिदाः ।
जायन्ते ताः पुनस्तिस्रो गुणस्य च गुणादिभिः ।।१४७।।
क्रियायाः क्रिययाशार्धं द्रव्येण च भिदा द्वयम् ।
द्रव्यस्य तु भिदैकैव द्रव्येणेति भिदा दश ।।१४८।।

क्रमेण यथा —

यशोनिधे वीर नृसिंह देव, करोऽपि कर्णोऽजनि तावकीनः ।
किं चारिनारी जनतापकारी, धाराधरस्ते करवाल एषः ।।१४९।।

अत्र पूर्वार्धे करकर्णयोर्जात्योर्विरोधः । उत्तरार्धे धाराधरत्वतापकारित्वयोर्जातिगुणयोः ।

---

तत्र जातेर्जात्यादिभिर्जातिगुणक्रियाद्रव्यैः; गुणस्य गुणक्रियाद्रव्यैः, क्रियायाः क्रियाद्रव्याभ्यां; द्रव्यस्य द्रव्येण, सर्वे च दशभेदाः विरोधस्य । क्रमेणोदाहरणम् ।

हे वीर नरसिंह देव ! यशो राशिः भवान् । भवतः कर्णोऽजनि करः शत्रुवीरान् प्रति सन्तापकारकोऽयं ते खड्गः घन इव दृश्यते ।

इह पूर्वार्धे करकर्णयोर्जात्योर्विरोधः । उत्तरार्धे तु धाराधरत्वतापकारितयोर्जाति गुणयोः —

---

जैसे प्रमुख ही अवभासित होता है । वैसे ही यदि विश्रान्ति हो, तो प्ररुढ विरोध दोष ही होता है । यदि समाधान किया जाय तो प्रमुख के अवभासन से विरोधभास होता है । जैसे —

जाति के जाति आदि से जाति, गुण, क्रिया द्रव्य के अनुसार जाति से जाति, गुण, क्रिया, द्रव्य चार, पुनः गुण से गुण, क्रिया, द्रव्य तीन तत्पश्चात् क्रिया से क्रिया; द्रव्य दो तथा अन्त से द्रव्य में द्रव्य एक कुल मिलाकर विरोध के दस भेद हुए । क्रमशः उदाहरण —

यश के राशि वीर नरसिंह देव आप का कर भी कर्ण हो गया । और क्या ? शत्रु की बधुओं को संताप देने वाली आप की यह तलवार मेघ रूप है ।

इसमें पूर्वार्ध में कर कर्ण में जाति का विरोध है । उत्तरार्ध में धाराधरत्व तापकारित्व दोनों में क्रमशः जाति एवं गुण का विरोध है ।

---

lotus flowers began to bloom and waterlilies began closing their petals, the (cakravāka) birds began to express their pleasure and the sunstone began emitting hot flames.

Here even though the woman says she is not a message bearing woman that is what she really is, because she has borne a message from some lady dying for the king, whom she loves.

**अश्रान्तविश्राणनकेलिकौतुकः, काम्यो न कस्यैष नृसिंहभूपतिः ।**
**शौर्याम्बुधेर्यस्य चिराय दन्तिभिः दिग्दन्तिनोऽप्यष्टावपि वामनीकृताः ॥१५०॥**

अत्र दिग्दन्तिवामनीकरणयोर्जातिक्रिययोः ।

शैलाः सर्वेऽपि कैलासाः सिन्धवः सुरसिन्धवः ।
नरसिंह महीपाल, संजातास्तव कीर्तिभिः ॥१५१॥

अत्र जातिद्रव्ययोः ।

परदारपरोऽपि त्वं परदारपराङ्मुखः ।
नरसिंह महीपाल विचित्रचरितो भवान् ॥१५२॥

अत्र परदारपरत्वपरदारपराङ्मुखत्वयोर्गुणयोः ।

चापस्थितगुणस्यापि गुणैस्तव जगत् त्रयम् ।
व्याप्यते स्म जगद्वीर नरसिंह नरेश्वर ॥१५३॥

अत्र गुणक्रिययोः ।

कर्पूरहारनीहारपटीरविशदोऽपि सन् ।
तव वीर यशोराशिः कथं पीताम्बरोऽभवत् ॥१५४॥

अत्र विशदत्वपीताम्बरत्वयोर्गुणद्रव्ययोः ।

---

निरन्तरदानक्रियायां कुतूहलमुत्पादयन् नरसिंहनरेशोऽयं कस्य नाभीष्टः । वीरत्वसागरे यस्य चिराय गजैः अष्टदिग्गजा अधः कृताः वामनीकृताः ।

अत्र दिग्गजवामनीकरणयोर्जातिक्रिययोः विरोधः

हे नरसिंह! तव यशसा सर्वे शैलाः कैलासाः । सर्वे वारीशाः क्षीरसागरा जाताः ।

अत्र जातिद्रव्ययोः विरोधः ।

हे नरसिंह नरेश ! भवान् विचित्रचरितवानस्ति शत्रुविदारकस्त्वं परनारीपराङ्मुखः ।

अत्र परदारपरत्वपरदारपराङ्मुखत्वयोः गुणयोः विरोधः । धनुषि स्थितप्रत्यञ्चायाः गुणस्यापि गुणैः त्रयो लोकाः व्याप्ताः । हे वीर नरसिंह नरेश ! संसारोऽयं तव गुणैर्व्याप्तः ।

अत्र गुणक्रिययोः विरोधः ।

हे वीर ! कर्पूरहारनीहारस्वच्छवस्त्रेण सह ते यशोराशिः कथं गगने पीताम्बरोऽभवत् ।

अत्र विशदत्वपीताम्बरयोर्गुणद्रव्ययोः विरोधः ।

---

निरन्तर दान की क्रीडा में कुतूहल उत्पन्न करने वाले यह नरसिंह नरेश किसे अभीष्ट नहीं है । वीरता के सागर में जिसकी देर से गजों द्वारा आगे दिग्गजों को

भी वामनरूप कर दिए गए। अर्थात् नीचा कर दिया। यहाँ दिग्गज वामनीकरण में जाति एवं क्रिया में विरोध है।

हे नरसिंह ! तुम्हारे यश से सभी पर्वत कैलास हो गए। सभी सागर क्षीर-सागर हो गए।

यहाँ जाति एवं द्रव्य में विरोध है।

हे नरसिंह नरेश ! आप आश्चर्य युक्त चरित्र वाले हैं। शत्रु को विदीर्ण करने वाले हो। पर स्त्री से पराङ्मुख हो।

यहाँ परद्वारपरत्वपरदारपराङ्मुखत्व दोनों गुण में विरोध है। धनुष में स्थित प्रत्यञ्चा का भी गुण (डोरी) तुम्हारे गुणों से तीन लोक व्याप्त है। हे वीर नरसिंह नरेश यह संसार तुम्हारे गुण से व्याप्त है।

यहाँ गुण एवं क्रिया में विरोध है।

हे वीर ! कपूर हार तुषार से भी स्वच्छ वस्त्र सफेद होता हुआ भी तुम्हारी यशोराशि कैसे आकाश में पीताम्बर ओला हुआ ?

यहाँ विशदत्व पीताम्बरत्व दोनों में गुण द्रव्य में विरोध है।

---

The second example is, Let me recover from the shock, my mind has received and till then please wait or you had better depart for I have not must to say in this matter and it is no use saying anything to you, the meaning being I would not like to express what I wish I would." Here what is to be negated has not been expressed so far, but the woman was getting ready to express it presently. So this is an example of (Vakṣamāṇaviṣaya) while the previous example was of (uktaviṣaya).

These examples themselves are not the poetic creations of Vidyādhara, but have largely been borrowed from Ruyyaka and his commentator Jairath, because there has been a big controversy about this figure and vidyādhara has failed to make his mind about which school of thought he should lend support to.

30--Virodha--Where there is an apparent not real incompatibility between the genus; qualities of action or a singular. material, it is a case of this figure of speech. Mammaṭa has subdivided the figure into ten types and Ruyyaka has accepted has stand in toto. The subdivisions are genus incompatible with-(1)another

**स जयति वीरनृसिंहः प्रतिभटनृपशैलकोटिशतकोटिः ।**
**यो रञ्जयन्नपि गुणैः सततमुदारं न रञ्जयति ॥१५५॥**

अत्र रञ्जनारञ्जनयोः क्रिययोः ।

**विस्मयममौ नृसिंहः करोति परिपन्थिगन्धगजसिंहः ।**
**यस्य प्रतापतपनः कुमुदमुदञ्चयति सर्वतोदिक्कम् ॥१५६॥**

अत्र कुमुदोदञ्चनतपनयोः क्रियाद्रव्ययोः ।

**आयोधनारम्भविजृम्भमाणक्षोणीरजोगत्वरशत्रुलोकः ।**
**उग्रोऽपि कृष्णस्तव खड्ग एषः, विराजते वीर नृसिंहदेव ॥१५७॥**

अत्रोग्रकृष्णयोर्द्रव्ययोः ।

एष च तत्र प्रगल्भते यत्र विषयस्याभिन्नत्वम् । भिन्नविषयत्वे त्वसङ्गतिप्रमुखाणां जागरुकत्वात्,

**असति प्रसिद्धहेतौ कार्योत्पत्तिर्विभावना भवति ॥१५८॥**

---

कोटिशतकोटिः शत्रुनृपाः वीरनरसिंहस्य धनुषः अधीनकृताः । ईदृशो नरसिंह नरेशो विजयते । शत्रुं प्रति तस्योदारता न । गुणैः रञ्जयन्नपि सदैवोदार्यं न रञ्जयति ।

अत्र रञ्जनारञ्जनयोः क्रिययोः विरोधः ।

शत्रुरूपीगन्धगजायायं नरसिंहनरेशः सिंह इव आश्चर्यं जनयति । यस्य प्रतापप्रकाशः कुमुदं सर्वतो दिक्षु विकासयति ।

अत्र कुमुदस्योदञ्चनतपनयोः क्रियाद्रव्ययोः विरोधः ।

युद्धारम्भे विजृम्भितेन भूमिधूलिः शत्रुलोकं याति । उग्रोऽपि तव कृष्णोऽयं खड्गः हे वीर नृसिंह देव ! शोभामाप्नोति ।

अत्रोग्रकृष्णयोर्द्वयोः द्रव्ययोः विरोधः ।

अयं च तत्र कथ्यते यत्र विषयस्य न भेदः । भिन्नविषयत्वे त्वसङ्गतिः ।

प्रमुखाणां जागरुकहेतुत्वात् ।

प्रसिद्ध कारणं विना कार्योत्पत्तिर्विभावनालंकारो भवति ।

---

करोड़ों शत्रु राजाओं के धनुष के अधीन कर दिया है, ऐसे इस नरसिंहनरेश वीर की जय होती है। जो गुणों द्वारा रञ्जन करता हुआ भी सदैव उदारता का रञ्जन नहीं करता है। अर्थात् शत्रु के प्रति उदारता नहीं है।

यहाँ रञ्जन और अरञ्जन दोनों क्रियायों में विरोध है।

शत्रु रूपी गन्ध गज के लिए सिंह रूप यह नरसिंह नरेश आश्चर्य उत्पन्न करते हैं, जिसके प्रताप का प्रकाश कुमुद को सारी दिशाओं में विकसित करता है।

यहाँ कुमुद का उदञ्चन और तपन क्रिया एवं द्रव्य दोनों में विरोध है।

युद्ध के आरम्भ में विजृम्भित होने से पृथ्वी की धूलि शत्रुलोक को पहुँचाती है। उग्र होते हुए भी कृष्ण, तुम्हारी यह तलवार हे वीर नरसिंह देव ! शोभा प्राप्त कर रही है।

यहाँ उग्र, कृष्ण दोनों द्रव्यों में विरोध है और यह वहाँ कहा जाता है, जहाँ विषय का भेद नहीं है। भिन्न विषयत्व में तो असङ्गति प्रमुखों को जागरूकता से होती है।

प्रसिद्ध कारण विना कार्य की उत्पत्ति विभावना अलंकार होता है।

---

genus (2) with a quality (3) with its action (4) with a singular material (5) a quality opposed to a quality (6) a quality opposed to an action (7) a quality opposed to a singular material (8) an action opposed to an action (9) an action opposed to a singular material (10) a singular material opposed to a singular material. Here Vidyādhara shows no originality either in point of presentation or in point of presenting illustrations. However one or two of his illustrations are as follows— O king Narsingha ! your sword in the form of raising clouds has alone a lot of harm to the wives of your enemies.

Here the genus (cloud) by its very nature always does good to all. Therefore quality of being injurious is incompatible with its genus. However this incompatibility is only apparent, because the word (Dhārādhara) has a double meaning, a raining cloud and a sword. If we accept the other meaning i. e. the sword the incompatibility disappears. It is the nature of the sword to kill and bring about death.

31 - Vibhāvanā—The appearance of an effect in absence of its generally accepted sense leads to this figure.

For example, we obtain all heavenly pleasures without having performed any sacrificial oblations.''

Here the effect heavenly pleasures are impossible, according to Indian way of thinking, without sacrificial oblations and yet they have obtained, this is a marvel and the figure of speech bases itself on the happy impression, such a marvel creates on the

इह कारणान्वयंव्यतिरेकानुविधायित्वात् कार्यस्य कारणाभावे कार्यस्याप्यभाव इति कारणमन्तरेणोपनिबद्ध्यमानायां कार्योत्पत्तौ परिस्फुरतो विरोधस्य परिहाराय प्रसिद्धेतरकारणगतत्वेन वस्तुतोऽस्तित्वमापूरयन्ती प्रसिद्धकारणविरहोपनिबन्धनरूपा नियमेन भङ्गिरङ्गीकरणीया। अपरथा विरोधस्य परिहर्तुमशक्यत्वात्। अत एव विशिष्टतयास्यां कार्यस्य विभावनादन्वर्थाभिधाना विभावना। किं चात्र कारणविरहेणोपक्रान्तत्वात् कार्यमेव वाध्यत्वेन प्रतीतिगोचरी भवति। न पुनरनेन कारणविरह इत्यस्याः परस्परवाधकत्वानुप्राणितो विरोधः कथमिव विषयापहारमाचरति। एवं बलवत्या कार्यानुत्पत्या कारणसत्तायामेव वाध्यमानायां भवन्ती विशेषोक्तिरपीतरेतरबाधकत्वलब्धस्वरूपाद्विरोधाद्विभक्तविषयत्वेन स्थितिमातनुते। उदाहरणम्--

---

अत्र कारणान्वयं व्यतिरेकानुविधायित्वात् कार्यस्य कारणाभावे कार्यस्याप्यभाव इति कारणं विनोपनिबद्धमानायां कार्योत्पत्तौ परिस्फुरतो विरोधस्य परिहाराय प्रसिद्धापरकारणगतत्वेन वस्तुतोऽस्तित्वमापूरयन्ती प्रसिद्धकारणं विनोपनिपन्धनरूपा नियमेन भङ्गिः स्वीकरणीया। इतरथा विरोधस्य परिहारायासमर्थत्वं कारणम्। अतः विशेषरूपेणास्यां कार्यस्य विभावनादन्वर्थाभिधाना विभावना। किं चात्र कारणं विनोपक्रान्तत्वेन कार्यस्यैव बाध्यत्वेन प्रतीतिदृष्टिगता। पुनरनेन कारणराहित्यम्। अस्याः परस्परबाधकत्वादनुप्राणितो विरोधः। कथं विषयापहारमाचरति। एवं बलवत्या कार्यानुत्पत्या कारणसत्तायामेव बाधिता सती विशेषोक्तिरपि। इतरेतरबाधकत्वप्राप्तस्वरूपेण विरोधस्य कारणविभक्तविषयत्वेन स्थितिमाप्नोति। उदाहरणम्--

---

यहाँ कारण अन्वय व्यतिरेक के अनुविधायी होने से कार्य के कारण भाव में कार्य का भी अभाव होता है। इसमें कारण के विना उपनिबद्धमान कार्य की उत्पत्ति में परिस्फुरित विरोध के परिहार के लिए प्रसिद्ध दूसरे कारणता तत्त्व से वस्तुतः अस्तित्व की आपूर्ति करती हुई प्रसिद्ध कारण बिना उपनिवद्धन रूप नियम से भङ्गी स्वीकरणीय है। दूसरे प्रकार से विरोध के परिहार करने के लिए असमर्थता कारण है। इसलिए विशेष रूप से इसमें कार्य की विभावना से अन्वर्थयुक्त विभावना अलंकार है और क्या? यहाँ कारण बिना उपक्रान्तता से कार्य की ही बाध्यता से प्रतीति दृष्टिगत होती है। पुनः इससे कारणविहीनता नहीं है। इसकी परस्पर बाधकता से अनुप्राणित विरोध है। किस प्रकार विषय के अपहार का आचरण होता हैं। इस प्रकार बलवती कार्यानुत्पत्ति कारण सत्ता में बाधित होती हुई विशेषोक्ति भी दूसरे बाधकता प्राप्त स्वरूप से विरोध के कारण विभक्त विषयता से स्थिति को प्राप्त है। उदाहरण –

अयज्ञः स्वर्लोकः सुकृतमतपः क्लेशसुभगं,
सुधासारोऽनभ्रः फलमकुसुमश्रीसहचरम् ।
अशौर्यं साम्राज्यं निधिरखननायासमुलभो,
नृसिंह क्षोणीन्दो नयनपथमस्माकमगमः ॥१५९॥

अत्र स्वर्लोकादेः प्रसिद्धयज्ञादिकारणाभावो निरतिशयसुखजनकत्वे नोपनिबद्धः ।
यथा वा—

भूत्या भासय सर्वतोऽपि विदुषो मुञ्चद्विजिह्वान् वृषं,
स्वात्मन्येव निवेशय प्रकटय ज्ञाने तृतीयां दृशम् ।
दुर्गाश्लेषरसं जहीहि जहिहि प्रीतिं च दोषाकरे,
लोकोत्तुङ्गकलिङ्गनाथ तदपि ज्ञातो भवानीश्वर ॥१६०॥

---

पृथिव्यां नरसिंहनरेशो दृष्टः । चन्द्रश्चास्माकं नेत्रैः; । यज्ञेन विना स्वर्गलोकः, तपसा विना यशः क्लेशेन विना सुखं, मेघेन विना चन्द्रः, कुसुमेन विना फलं, लक्ष्म्या सह शौर्येण विना साम्राज्यं, खननेन विना निधिः, सुलभोऽनायासेन ।

अत्र स्वर्गलोकादीनां प्रसिद्धयज्ञादीनां कारणाभावः । निरतिशयसुखोत्पादकतयोपनिबद्धा अथवोदाहरणमत्र —

लोके सर्वोच्चः कलिङ्गाधिपतिः । सर्वतोऽपि प्रभुः ज्ञायते विभूत्या प्रकाशिताः भवन्तु सर्वेऽपि विदुषः । शत्रुः त्यजतु । स्वात्मन्येव शङ्करस्य वासोऽस्तु । ज्ञाने तृतीयं नेत्रं प्रकटयतु । दुर्गारसे सम्बन्धजन्यानन्दं त्यजतु चन्द्रः दोषसमूहानां प्रीतिं त्यजतु ।

---

नरसिंह नरेश पृथ्वी में चन्द्रस्वरूप हमारे नेत्र से देखे गए । जिसे यज्ञ के बिना स्वर्गलोक तपस्या के बिना यश, बिना कष्ट के सुख, बिना बादल के चन्द्रमा, फूल बिना फल, शूरता बिना लक्ष्मी सहित साम्राज्य बिना खने हुए खजाना अनायास प्राप्त है ।

यहाँ स्वर्गलोक आदि के प्रसिद्ध यज्ञ आदि कारण का अभाव है । निरतिशय सुखोत्पादकता से उपनिबद्ध है । अथवा जैसे —

लोक में सर्वोच्च कलिङ्गाधिपति सब कुछ होने पर भी आप ईश्वर (प्रभु) जाने जाते हैं । ऐश्वर्य से प्रकाशित हों सभी विद्वान् । शत्रु खलों को छोड़े । अपनी आत्मा में ही शंकर का निवास हो । ज्ञान में तृतीय नेत्र को प्रकट करें । दुर्गा रस सहित उत्पन्न आनन्द को त्याग दें चन्द्र रात्रि समूह में प्रीति को छोड़े ।

---

mind. This should be noted, however, that though heavenly pleasures are impossible, in general, without sacrificial oblations, they may as well result from some other cause and this cause must be mentioned directly or indirectly. In this illustration the full sentence will run as under, 'owing to you, O king Narsingha ! we are enjoying the heavenly pleasures even though we have never recoursed to sacrificial oblations.''

अत्र परगतत्वेनोपात्तं भूतिकरणकं भासनमीश्वरज्ञानं प्रति न भवति कारणं तथापीश्वरज्ञानमभूदिति विभावनेयम्। श्लेषप्रतिभोत्थापितातिशयोक्तिप्रभाविततेति संकरः।

**यदि कारणसाकल्ये कार्यासिद्धिस्तदा विशेषोक्तिः ॥ १६१ ॥**

इह यदि विद्यमानापि सामग्री न कार्यमाविष्कुरुते तदा सामग्र्येव कथमपि न भवति। अथ कमपि विशेषं प्रकाशयितुं सत्यामप्येतस्यां कार्यानुत्पत्तिरुपनिबद्ध्यते तदा विशेषप्रतिपादनायोक्तिरिति यौगिकत्वमप्यत्राश्रयति इयं च निमित्तस्योक्तत्वानुक्तत्वाभ्यां भवन्ती न द्वैविध्यातिवर्तिनी। तत्रोक्तनिमित्ता यथा—

---

इह परगतत्वेन प्राप्तभूतिकरणभासनमीश्वरज्ञानं प्रति न कारणं भवति। तदपीश्वरज्ञानमभवत्। अत्र विभावनेयम्। श्लेषप्रतिभोत्थापितातिशयोक्तिप्रभाविततेति संकरः। यदि सम्पूर्णकारणे कार्योत्पत्तिर्न भवति, तत्र विशेषोक्तिः।

अत्र यदि वर्तमानापि सामग्री कार्यस्याविष्करणं न करोति तथा सामग्री कथमेव नास्ति। अधुना किमपि विशेषवस्तुप्रकाशनाय सत्यतायामपि कार्यानुत्पत्योपनिबद्धता विशेषप्रतिपादनायोक्तिः यौगिकत्वस्यापि करोत्याश्रयणं; निमित्तोक्तानुक्तताभ्यां द्विविधोऽयमलंकारो भवति। उक्त निमित्ता यथा—

---

यहाँ परगतत्व से प्राप्त विभूतिकरण भासन ईश्वर ज्ञान के प्रति कारण नहीं होता है। तिस पर भी ईश्वर ज्ञान हुआ। यह विभावना ही है। श्लेष प्रतिभा से उत्थापित अतिशयोक्ति प्रभावित होने पर संकर अलंकार होता है।

यदि पूर्ण कारण होने पर कार्य की उत्पत्ति न होती हो, तो वहाँ विशेषोक्ति है। यदि वहाँ वर्तमान सामग्री भी कार्य का आविष्करण नहीं करती है, तब सामग्री ही किसी प्रकार की नहीं होती है। अब किसी भी विशेष वस्तु को प्रकाशित करने के लिए इस सत्यता में भी कार्य की अनुत्पत्ति से उपनिबद्धता होती है, तो विशेष प्रतिपादन के लिए यह उक्ति यौगिकत्व का भी आश्रयण करती है। यह निमित्त की उक्तता और अनुक्तता के लिए होती हुई दो प्रकार की है। अर्थात् उक्त विमित्ता एवं अनुक्त निमित्ता दो भेद हैं। उक्त निमित्ता विशेषोक्ति का उदाहरण—

---

In the example, "the real cause of the effect heavenly pleasures has been made mention of. In this figure too Vidyādhara has added nothing to the traditional definition of this figure.

2 —Viśeṣokti—This is just the antethesis of (vibhāvanā, that is, this figure occurs when a well known cause even though fully present fails to produce its effect. There must be some reason be-

अयं स ते वीर नृसिंह देव, प्रतापभानुः प्रथितोदयश्रीः ।
चित्रं न दत्ते रिपुसुन्दरीणां विकासलक्ष्मीं नयनाम्बुजेभ्यः ।। १६२ ।।

अत्र तपनोदये कारणे सत्यम्बुजविकासलक्ष्मीलक्षणं कार्यं नाभूदिति विशेषोक्तिः । रिपुसम्बन्धित्वं च निमित्तमुपात्तम् । किंत्वियं रूपकोपजीवनेन प्रवृत्तेत्यनयोरङ्गाङ्गिभावेन संकरः आश्चर्यस्य रूपकं प्रतिसाधकत्वात् । अनुक्त निमित्ता यथा—

उत्तिष्ठ कन्दखननाय गृहाण चापं,
गाहस्व काननमिति प्रहितोऽपि बध्वा ।
आकारितोऽपि सह केलिसखैः किरातैरद्रेर्न
वीर विजहाति दरीमरिस्ते ।। १६३ ।।

अत्र प्रस्थापनाह्वनयोर्वनगमनं प्रति कारणत्वेऽपि तदनुत्पत्तौ नरसिंहकार्मुकस्मरणविज्जृम्भमाणभयविह्वलितत्वमनुक्तमपि निमित्तं प्रतीयते ।

---

वीर नरसिंह देव ! तव सोऽयं प्रतापसूर्यः ख्यातोदितश्रीः, शत्रुवधूनां कमलनयनाय विकासलक्ष्मीः नु विचित्रम् ।

अत्र सूर्योदयकारणे कमलविकासनं कार्यं नाभूदिति विशेषोक्तिः शत्रुसम्बन्धिता च निमित्तता कथिता । परन्तु रूपकोपजीवनेनाङ्गाङ्गिभावसंकरः । आश्चर्यस्य रूपकं प्रति साधनं भवति । अनुक्त निमित्ता यथा—

कन्दलाभायोत्तिष्ठ, धनुः गृहाण, वनमाश्रयतु । इति शत्रुवधूभिः कथितोऽपि किरातैः सह सखीभिः क्रीडमानाः शत्रवःते हे वीर नरसिंह ! पर्वतगुहां न त्यजन्ति ।

अत्र प्रस्थानाह्वानयोः वनगमनं प्रति कारणतायामपि तदनुत्पत्तौ नरसिंहस्य धनुषः स्मरणेन विजृम्भितभयेन विह्वलानुवृत्तेरपि निमित्तस्य प्रतीतिर्भवति ।

---

वीर नरसिंह देव तुम्हारा वह यह जो प्रताप सूर्य है, इससे प्रसिद्ध श्री उदित है । शत्रु बधुओं के कमलनयन के लिए विकास लक्ष्मी नहीं है । इसमें विचित्रता है ।

यहाँ सूर्योदय कमल विकास में कार्य न होना विशेषोक्ति है । शत्रु सम्बन्धी हेतुता कही गई । परन्तु रूपकोपजीव्य अङ्गाङ्गि भाव संकर है । आश्चर्य रूपक के प्रति साधन है । अनुक्त निमित्त का उदाहरण—

कन्दमूल खनने हेतु उठें । धनुष ग्रहण करें । वन का आश्रयण करें । इस प्रकार शत्रु बधुओं के कहते हुए भी किरातों द्वारा सखा के साथ क्रीडा करते हुए बुलाये जाते हुए भी हे वीर नरसिंह ! तुम्हारे शत्रु पर्वत की गुफा को नहीं छोड़ते हैं । यहाँ प्रस्थापन आह्वान वन गमन के प्रति कारणता होने पर भी उसकी अनुत्पत्ति में नरसिंह के धनुष के स्मरण से विजृम्भित भय से विह्वल अनुवृत्ति भी निमित्त प्रतीत होती है ।

इह च कार्यासिद्धिः कार्यविरुद्धसिद्धिमुखेन क्वचिदुपनिबध्यते विभावनायामिव कारणविरहः कारणविरुद्धमुखेन । तथा सति—

ये पतन्ति तव हस्तसीकराः पाणिशुक्तिविवरे द्विजन्मनाम् ।
उत्कलेन्द्र नवमौक्तिकावलीस्तत्कलत्रहृदये सृजन्त्यमी ॥ १६४ ॥

इत्यत्र किं विभावना विशेषोक्तिर्वा । तथा हि स्वात्यम्भः कणानां मौक्तिकोत्पत्तिं प्रति कारणत्वं प्रसिद्धम् । अभावेऽप्येषामेषात्रोपनिबद्धेति कारणाभावे कार्योत्पत्तौ विभावना तावत् कारणाभावश्च हस्तसीकरा इति कारणविरुद्धमुखेनोपन्यस्तः ।

---

अत्र च कार्यासिद्धिः कार्यविरुद्धमुखेन कुत्रोपनिबध्यते, विभावनायामिव कारणेन विना कारणं विरुद्धमुखेन भवति । तथा सति ।

द्विजानां पाणिशूक्तिविवरे ते हस्तसीकराः ये पतन्ति, उत्कलाधिपतिर्नवीनमौक्तिकावलीस्तत्वधूनां हृदये सृजन्ति ।

इतीह किं विभावना विशेषोक्तिर्वा । तथा हि स्वातीजलकणानां मौक्तिकोत्पादनं प्रति ख्यातकारणत्वम् । अभावेऽप्यत्रोपनिबद्धम् । कारणाभावेऽस्याः कार्योत्पादने विभावना तदा च कारणाभावे हस्तसीकराः । अत्र कारणं विरुद्धमुखेनोपन्यस्तम् ।

---

यहाँ कार्य की असिद्धि कार्य विरुद्ध सिद्धि की प्रमुखता से कहीं उपनिबद्ध है । विभावना से कारण बिना कारण विरुद्ध मुख से होता है । वैसा होने पर—

द्विजों के पाणि सूक्ति विवर में हस्त से जो बूंद गिरते हैं, उत्कलाधिपति के नवीन मुक्ता की यह एकावली (हार) उनकी स्त्रियों के हृदय में सृजन करते हैं ।

इसमें यहाँ क्या विभावना है ? अथवा विशेषोक्ति है । वैसे निश्चय ही स्वाती के जल कणों से मोती उत्पन्न होने के प्रति कारणता प्रसिद्ध है । अभाव में भी यह यहाँ उपनिबद्धन है । इसके कारण अभाव में कार्योत्पत्ति में विभावना है और तब कारण अभाव हस्त बिन्दु है । यह कारण विरुद्ध मुख से उपन्यस्त किया गया ।

---

hind the failure of this cause to produce its effect. If this reason has been stated, it is the case of (uktanimittā) viśeṣokti and if the reason has not been stated, it is the case of (Anuktanimittā) viśeṣokti), into which subdivision this figure can be divided.

Vidyādhara seems to have rejected the third subdivision called ( Acintyanimittā ) accepted by ( ĀnandVardhana ), Abhinava Gupta and Mammaṭa three great authorities of the (Dhvani) school

हस्तसीकराणां मौक्तिकोत्पत्ति प्रत्यकारणत्वात् । हस्तशब्दस्य द्वैविध्येऽप्यत्राभेदाध्यवसायोऽतिशयोक्त्या सा चास्यामव्यभिचारिणी । किं चात्र हस्ताम्भः कणानां मौक्तिकानुत्पत्ति प्रति कारणत्वे सत्यपि मौक्तिकानुत्पत्तिर्नाभूदिति कारणसद्भावे कार्यानुत्पत्तिरिति विशेषोक्तिरपि । कार्यानुत्पत्तिश्च मौक्तिकानि सृजन्तीति कार्यविरोधोत्पत्तिमुखेन द्योतिता । अत एवानयोरस्फुटत्वम् । उभयोरपि साधकबाधकप्रमाणविरहिण्योः सन्देहेन संकरः । असंगत्या च सहाङ्गाङ्गिभावेन ॥

**अनयोः समसमयत्वे पौर्वापर्यस्य वा विपर्यासे ।**
**कार्याशुभावगमिका द्विविधातिशयोक्तिराख्याता ।। १६५ ॥**

---

हस्तसीकराणां मौक्तिकोत्पदानं प्रति कारणत्वं न । हस्तशब्दस्य द्विविधाप्यत्राभेदाध्यवसाय: अतिशयोक्त्या च सास्यां न व्यभिचरिता । किं चात्र हस्तजलकणानां मौक्तिकानामनुत्पत्ति प्रति कारणत्वेऽपि मौक्तिकानामुत्पत्तिर्न स्यात् । कारणसद्भावे कार्यानुत्पत्तिरिति विशेषोक्तिः कार्यानुत्पत्तिश्च मौक्तिकानि सृजन्तीति कार्यविरोधः । उत्पत्तिमुखेन द्योत्यते । अत एवानयोरस्पष्टत्वम् । द्वयोरपि साधकबाधकप्रमाण्यराहित्ये सन्देहेन संकरः । असंगत्या च सहाङ्गाङ्गिभावेन । एतयोः कारणकार्ययोः समसमयत्वे पौर्वापर्यविपर्यये द्विविधातिशयोक्तिः ।

---

हस्त सीकरों का मोती की उत्पत्ति के प्रति कारणत्व नहीं है । हस्त शब्द के द्वैविध्य में भी यहाँ अभेद अध्यवसाय है और अतिशयोक्ति से वह इसमें व्यभिचरित नहीं है और क्या यहाँ हस्त के जल कणों के मोती की अनुत्पत्ति के प्रति कारणत्व होने पर भी मोती की अनुत्पत्ति न होवे । इस कारण सद्भाव में कार्य की अनुत्पत्ति यह विशेषोक्ति भी है और कार्य की अनुत्पत्ति मोतियों का सृजन करती है । इसमें कार्य विरोध मुख से प्रकाशित है । इसलिए इन दोनों में अस्पष्टता है । दोनों के भी साधक बाधक प्रमाण रहित होने पर सन्देह संकर है और असंगति के साथ अङ्गाङ्गि भाव सकर है ।

इन दोनों कार्य कारण के समसमयत्व में पौर्वापर्य्य के विपर्यय में दो प्रकार की अतिशयोक्ति होती है ।

---

to which vidyādhara subscribes. Thus the rejection of this third type is surprising. Vidyādhara shows his awareness of the controversy raising round this third type from the time of Ruyyaka.

33—Hyperbole—It should be noted that another figure of the same name has already been dealt with the second figure with the

इह कार्यकारणयोर्नियतोत्तरपूर्वकालभावित्वे सत्यप्येतद्रूपान्यथाकरणं कार्यस्याशुभावित्वलक्षणविशेषप्रकाशनैकप्रयोजनम् । यथा—

कोशगृहचिरनिषण्णा रिपुनृपलक्ष्मीर्निजासिलतिका च ।
उत्कलभूपाल कथं युगपद् भवता समाकृष्टा ।। १६६ ।।

अत्र रिपुश्री समाकर्षणं प्रत्यसिलता समाकर्षणं कारणमेकैकान्येनोपनिबद्धम् । द्वितीया यथा —

कवीन्द्राणामासन् प्रथमतरमेवाङ्गणभुवश्चल
मृङ्गासङ्गाकुलकरिमदामोदमधुराः ।
अमी पश्चात्तेषामुपरि पतिता वीर भवतः
कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ।। १६७ ।।

अत्र कविकुलैश्वर्यरूपकार्यानन्तरं नृसिंहनृपावलोकनलक्षणं कारणमुपात्तम् ।

---

अत्र कार्यकारणयोः नियतोत्तरपूर्वकाले भावित्वे तद्रूपान्यथाकरणं कार्यस्य शीघ्रभावित्वलक्षणप्रकाशनैकप्रयोजनम् । उदाहरणम्—

हे उत्कल नरेश ! कथं भवता कोशगृहे चिरात् स्थिता शत्रु नरेशाणां लक्ष्मीः; लतारूपनिजखड्गश्च युगपदेव समाकृष्टौ ।

अत्र शत्रुलक्ष्मीसमाकर्षणं प्रत्यसिलतासमाकर्षणं कारणमेकैकत्वेनोपनिबद्धम् । द्वितीयोदाहरणम् ।

श्रेष्ठकवीन्द्रेषु प्रथमस्तु भूमिः अङ्गणः । चलायमानानां भ्रमराणां सङ्गे व्याकुलहस्तिनां मदस्य गन्धामोदो मधुरः । पश्चादमी तेषूपरि भागे पतन्ति ' हे वीर ! भवतः कटाक्षक्षीरसागरपर्यन्तं प्रसारितम् । हस्तिनः दत्ताः कविभ्यः ।

अत्र कविकुलैश्वर्यरूपकार्यं पश्चाद् नृसिंहनरेशदर्शनलक्षणं कारणं प्राप्तम् ।

---

यहाँ कार्य कारण में नियत उत्तर पूर्व काल में होने वाले में भी उसके रूप को अन्यथा करने में कार्य के शीघ्र होने के लक्षण विशेष प्रकाशन करने में प्रयोजन है । जैसे—हे उत्कल नरेश ! किस प्रकार आप के द्वारा कोश गृह में बहुत दिनों से बैठी शत्रु राजाओं की लक्ष्मी और लता रूप अपनी तलवार एक साथ ही खींच ली गई ।

यहाँ शत्रु लक्ष्मी खींचने में असिलता खींचने का कारण एक दूसरे से उपनिबद्ध है । दूसरा उदाहरण—

नरसिंह कवियों में श्रेष्ठ पहले ही अङ्गण भूमि के हुए । चलायमान भौंरों के संग व्याकुल हाथी के मद के गन्ध मधुर हैं । पश्चात् ये उनके ऊपर गिरते हैं । ऐसे हाथी कवियों को दान में दिये गये हैं । हे वीर ! आपके कटाक्ष क्षीरसागर तक लहरों के सहचर होकर चले हैं ।

**एषा प्रङ्गतिरुक्ता हेतोः कार्यस्य भिन्नदेशत्वे ॥ १६८ ॥**

इह न पर्वतनितम्बचुम्बिनं जनयति धूमं महानससङ्गतो हुतवह इति दृष्टान्तावष्टम्भादभ्युपेतेऽपि कार्यकारणयोर्भिन्नदेशगतत्वेन जन्यजनकत्वविरहे कारणाद्भिन्नाश्रयगतत्वेन कार्यस्योपनिबन्धेन समुचितायाः संगतेरविद्यमानत्वादियमन्वर्थाभिधाना कार्यकारणविरोधावसरप्राप्तनिर्देशा । यथा—

**प्रतिभट मुकुटेषु खड्गधारा परिपतिता भवतो नृसिंह भूप ।**
**सरभसमगलत्तदङ्गनानां गुरुकुचभारतटीपटीरपङ्कः ॥ १६९ ॥**

अत्र धारापरिपतनं चन्दनच्यवनस्य भिन्नदेशो हेतुः ।

**आयोधने वीर नृसिंह देव समुद्धृतेयं भवतासिवल्ली ।**
**म्लाना पुनः शत्रुविलासिनीनां पयोधरे चन्दनपत्रवल्ली ॥ १७० ॥**

अत्र म्लानत्वस्य कार्यस्य समुद्धरणं कारणं व्यधिकरणतयोपात्तम् । राज्ञा त्वङ्गीकृतस्य चित्रहेतुनाम्नो हेतु भेदस्यात्रैवान्तर्भावो द्रष्टव्यः ।

---

अत्र कार्यकारणयोर्भिन्नदेशत्वं निबद्धं तत्रासङ्गतिः ।

अत्र न पर्वतसमीपवर्ति धूमः महानससङ्गतोऽग्निः, दृष्टान्तावरोधेनानयोः कार्यकारणयोर्भिन्नदेशगतत्वेन कार्यस्योपनिबन्धनेन समुचितसङ्गतेः न वर्तमानेनार्थयुक्तकार्यकारणविरोधावसरः प्राप्तः । उदाहरणम्—

हे नरसिंह नरेश ! भवतः खड्गस्य धारा नरेशाणां मुकुटेषु पतति । सा तु शत्रुवधूनामुत्तुंगस्तनतटे स्वच्छपङ्को यथा शीघ्रमेवाभवत् ।

अत्र धारापतनं चन्दनच्यवनस्य भिन्नदेशस्य हेतुः ।

युद्धे वीर नरसिंह देव ! अयं ते खड्गः पतति । पुनश्च शत्रुवधूनां स्तनतटे चन्दनपत्रवल्ली मलिना जाता ।

इह म्लानं प्रति कार्यस्य समुद्धृतकारणम् । व्यधिकरणं तूपात्तम् । भोजराजेन चित्रहेतुः हेतुभेदः स्वीकृतः । अत्रान्तर्भावो दर्शनीयः ।

---

यहाँ कवि कुल ऐश्वर्य रूप कार्य के बाद नरसिंह नरेश के अवलोकन का लक्षण कारण प्राप्त है ।

जहाँ कार्य कारण में भिन्नदेशता निबद्ध हो, वह असङ्गति अलंकार है ।

यहाँ न पर्वत के समीपवर्ती धुआँ है, रसोई से संसर्ग किए हुए अग्नि में दृष्टान्त के रुकने से इन दोनों के कार्य कारण में भिन्न देश गतत्व से कार्य के उपनिबन्धन से समुचित सङ्गति के वर्तमान न रहने से अन्वर्थयुक्त कार्य कारण विरोध अवसर प्राप्ति का निर्देश है । जैसे—

हे नरसिंह नरेश ! आप की तलवार की धारा शत्रुओं के मुकुट पर गिर गई। उन शत्रु बधुओं के बड़े स्तन भार से तट पर सफेद कीचड़ शीघ्र ही हो गया।

यहाँ धारा का गिरना चन्दन के च्यवन के भिन्न देश का हेतु है।

युद्ध में वीर नरसिंह देव यह आप की तलवार उठी है। पुनः शत्रु बधुओं के स्तन पर चन्दन पत्र बल्ली म्लान हो गई।

यहाँ मुरझा जाने से समुद्भूत कारण है। व्यधिकरण के लिए उपात्त है।

भोजराज द्वारा स्वीकृत चित्र हेतु नाम के हेतु भेद का यहाँ ही अन्तर्भाव देखने योग्य है।

---

same name namely (Atiśayokti) and its discussion as a separate figure is due to Ruyyaka's treatment of it as such this figure occurs when the cause and effect make their appearance—

Simultaneously and when the effect appears first and the cause latter, which is a peculiarity in that a cause must make its appearance prior to the appearance of effect.

Accordingly it has been divided into two types. 1–Simultaneity of cause and effect and 2–Priority of an effect and posteriority of cause. The examples are, "O king Narsingha you have simultaneously drawn the sword from its Scabbard and the prowess of your enemies to yourself."

Here the drawing of the sword is the cause and the victory over the enemies, its effect and should naturally be in the sequence of prior and posterior, but they have been shown to be simultaneous in order to suggest the excellence of the king. The second example is, 'O king Narsingha ! you have given in charity great elephants in hundreds to a multitude of poets, even without ascertaining how far they are worthy of your attention. You were moved to pity on them only afterwards. Here being moved to pity is the cause and charity, the effect. The subversion of their order as shown in the example has led to this figure in its second type.

34—Asangati—Where the cause and effect are shown to re-

**विषमं विरूपघटना विसदृशकार्यविभीष्टयोर्जननम् ॥ १५१ ॥**

अस्याप्यत्र विरोधावसर एव निरूपणकारणम् । इदं तु त्रिविधम् । अत्र विरूपयोः सर्वथाननुरूपयोर्घटनादेकं विषमम् । यथा—

**क्व तव नृसिंह देव भुवनत्रयलङ्घियशः,**
**क्व च कविता मम स्वरसवलितफल्गुपदा ।**
**इह दिवमारुरुक्षुरहमस्मि तुषारमहः**
**किरणपरम्परासु रचितैः पदचङ्क्रमणैः ॥ १५२ ॥**

---

विषमार्थे सति निबन्धनेनैव विषमालङ्कारः, तत्र विरूपघटनाविरुद्धकार्योपत्तिस्तथानर्थोत्पादकरूपेण त्रिविधः ।

अस्यापीह विरोधस्यावसर एव निरूपणस्य कारणम् । अयं तु त्रिविधोऽलंकारो भवति । अत्र द्वयोर्विरूपयोः सर्वथाननुरूपघटनादेकं विषमम् । उदाहरणम्—

नरसिंह देव ! क्व तव भुवनत्रयलङ्घितं यशः, क्व च मम काव्यं रसपदयुक्तं वल्गुरहितं च । इह स्वर्गारोहणेऽहं तथैवेच्छुको यदा, दिनं तुषारमयं किरणपरम्परायां निर्मितपदसंक्रमणैः कथं सम्भवेत् ।

---

विषम अर्थ निबन्धन ही विषमालंकार होता है । वह विरूप घटना, विरुद्ध कार्योत्पत्ति तथा अनर्थोत्पाद भेद से तीन प्रकार का अलंकार है ।

इसका भी यहाँ विरोधावसर ही निरूपण कारण है । यह तो तीन प्रकार का होता है । यहाँ दो विभिन्न रूपता के सर्वथा अनुरूप न होने वाली घटना से पहला विषम होगा । जैसे—

नरसिंह देव ! कहाँ तुम्हारा यश तीनों भुवनों में फैला है और कहाँ मेरी कविता का स्वर लगाम रहित है और अच्छे पदों से युक्त नहीं है । यहाँ मैं स्वर्ग पर चढ़ने की इच्छा वाला वैसे ही हूँ, जैसे दिन तुषारमय है । किरण की परम्परा में निर्मित पद संक्रमण द्वारा संभाव्य है ।

---

side in two different strata, unconnected by the relation of interaction, it will be a case of this figure. For example, 'Your sword cuts of the head of your enemy, but the effect does not make its appearance on the substratum, where the sword has been active; it appears instead; on the breast of the wives of such enemies from which drops down the onionment of sandal paste, generally the effect must appear where the cause is operative as for exam-

अत्र सर्वथाननुरूपयोर्यशःकवितयोः संघटनं कृतम्। कारणगुणप्रक्रमेण कार्ये गुणारम्भः कारणानुविधायित्वात् कार्यस्येति स्थितौ सत्यामपि यदि कयापि भङ्ग्यान्यथाभाव उपनिबध्यते तदा विसदृशकार्योत्पत्तिर्द्वितीयं विषमम्। यथा—

राकागर्वित शर्वरी सहचरप्रस्तावसौवस्तिकैः,
क्षीराम्भोधितरङ्गकान्तिलहरीवैवर्ण्यकर्णे जपैः।
चित्रं वीर नृसिंह देव भवतः कीर्तेर्विलासैः कृतः,
स्वैरं वैरिबधूमुखे कथमहो मालिन्यमुद्रादरः॥ १७३॥

इह धवलतरयशः पूरकर्तृकतया मालिन्यस्य विसदृशस्यैव कार्यस्योत्पत्तिरभेदाध्यवसायसामर्थ्यादुपनिबद्धा। कथमप्यभिमतमर्थं निष्पादयितुं यतमानस्य तदनवाप्तिस्तावदास्तां यावदनर्थान्तरमपि परापतति तृतीयं विषमम्। यथा—

---

अत्र सर्वथाननुरूपयशः काव्ययोः संघटनं, कारणगुणप्रक्रमेण कार्ये गुणारम्भोऽस्ति। कारणानुविधायित्वेन कार्यस्येति स्थितौ यदि कयापि भङ्ग्यान्यथाभावो जनितः तर्हि विरुद्धकार्योत्पत्तिर्भिन्नविषमं द्वितीयम्। यथा—

पूर्णचन्द्रेण सह रजनीतारागणैः सह सौवस्तिकैः क्षीरसागरस्य तरङ्गस्य शोभायाः वैवर्ण्यसूचकैः हे वीर नरसिंह देव ! भवतो यशः विलासैः कृतः कथं शत्रुवधूनां मुखमालिन्यमुद्रादरः।

इहोत्कृष्टाच्छं यशः पूरकर्तृकत्वेन मलिनतया विसदृशस्यैव कार्यस्योत्पत्तिरभेदाध्यवसायसामर्थ्यादुपनिबद्धा। कस्याप्यभीष्टस्यार्थस्य निष्पादने प्रयत्नस्य तदप्राप्तिः तावदपरानर्थेऽपि तृतीयं विषमम्। यथा—

---

यहाँ सर्वथा अनुरूप रहित यश तथा कविता दोनों का संघटन किया गया। कारण गुण प्रक्रम से कार्य में गुण का आरम्भ होता है। कारण के अनुविधायित्व से कार्य की इस स्थिति में होते हुए भी यदि किसी के द्वारा भी भङ्गी से अन्यथा भाव उत्पन्न होता है, तो विरुद्ध कार्य की उत्पत्ति दूसरा विषम होता है। जैसे—

पूर्ण चन्द्र सहित रात्रि, उसका निवास सहचर तारागण के प्रस्ताव में सुन्दर बस्ती के समान होता है। क्षीर सागर की तरङ्ग की शोभा लहरी की विवर्णता, चुगली करने वालों द्वारा हे वीर नरसिंह देव ! विचित्र बात है। आप के यश के विलासों द्वारा यह किया गया है। अरे कैसे ! अपने आप शत्रु बधू के मुख में मलिनता की मुद्रा का आदर हो सकता है।

यहाँ उत्कृष्ट स्वच्छ यश लहर कर्तृकत्व से मलिनता की विसदृशता के ही कार्य की उत्पत्ति अभेदाध्यवसाय सामर्थ्य से उपनिबद्ध है। किसी भी अभीष्ट अर्थ

**उदितवति प्रतापतपने तव वैरिवधू,**
**वदनसरोरुहं भवति वीर कलिङ्गपते ।**
**अपि कलया कयापि न विकासविलास-**
**मुपैत्यपि तु विवर्णतां नयनतापकरीं भजते ॥ १७४ ॥**

अत्र सत्यपि प्रतापतपनोदये वैरिवधूवदनसरोरुहस्य विकासविलासलाभो नाभूदिति । तावत्तिष्ठतु प्रत्युत नयनतापकरविवर्णता लक्षणोऽनर्थः प्रादुरासीत् ।

**अस्य प्रथमभिदायाः सममिति कविभिर्विपर्यये कथितम् ॥ १७५ ॥**

विषमवैधर्म्यादिहास्याभिधानम् । अस्य विषमस्य विरूपसंघटनारूपायाः प्रथमभिदाया विपर्ययोऽनुरूपसंघटनारूपश्चारुत्वहेतुत्वादलङ्कारत्वेन गणितः । इतरभेदद्वयविपर्ययस्य तु तदभावान्नालङ्कारत्वम्—

---

हे वीर कलिङ्ग नरेश ! तव प्रतापसूर्योस्योदये शत्रुवधूनां मुखकमलं कयापिकलया विकासस्य विलासं नावाप्नोति । प्रत्युत वैवर्ण्यं नेत्रतापकरं भजते ।

इह प्रतापभानूदये शत्रुवधूनां मुखकमलस्य विकासस्य विलासलाभो न स्यात् । तदा नेत्रं तापकरं वैवर्ण्यलक्षणमनर्थजनकम् ।

कविभिः विषमस्य विपर्ययः सममिति गदितम् । समार्थनिबन्धनयुक्तोऽयमलंकारः । विषमस्य वैधर्म्यादिहास्यास्पदम् । विषमस्य विरुद्धसंघटनारूपायाः प्रथमभिदायाः विपर्ययोऽनुरूपसंघटनारूपायाः सुन्दरतायाः हेतुत्वेनालंकाररूपः परिगणितः । अपरभेदद्वयं विपर्ययस्य तु तदभावेनालंकारत्वम् ।

---

के निष्पादन करने में प्रयत्न के उस प्राप्ति की हीनता है । तब दूसरा अनर्थ जभी हो तो दूसरे के लिए तीसरा विषम होगा । जैसे—

हे वीर कलिङ्ग नरेश ! तुम्हारे प्रताप सूर्य के उदय होने पर शत्रु वधुओं के मुख कमल सदृश किसी भी कला से विकास के विलास को नहीं प्राप्त हैं । प्रत्युत विवर्णता नेत्र तापकारी होता है ।

यहाँ प्रताप सूर्य के उदय होने पर भी शत्रु वधुओं के मुख कमल के विकास का विलास लाभ न होवे । इसमें तब तो नेत्र ताप करने वाली विवर्णता लक्षण अनर्थ प्रादुर्भूत होता था ।

कवियों द्वारा विषम का उलटा सम कहा गया है ।

सम अर्थ निबन्धन सम अलंकार है । विषम के वैधर्म्य से यहाँ इसका अभिधान है । इस विषम की विरुद्ध संघटना रूप प्रथम प्रकार का विपर्यय अनुरूप संघटना रूप सुन्दरता हेतु से अलंकार रूप गणना के अन्तर्गत है । दूसरे दो भेद विपर्यय तो उसके अभाव से अलंकार के अन्तर्गत नहीं है ।

अनुरूपसमागमस्तु प्रस्तूयतेऽत्रेति समम् । यथा—

कौमुदीव तुहिनांशुमण्डलं, जाह्नवीव शशिखण्डमण्डनम् ।
पश्य कीर्तिरनुरूपमाश्रिता, त्वां विभाति नरसिंह भूपते ।। १७६ ।।
कारणविपरीतफलोत्पत्तौ यत्नो विचित्रमित्युक्तम् ।। १७७ ।।

यथा—

मलिनयितुं खलवदनं विमलयति जगन्ति देव कीर्तिस्ते ।
मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ।। १७८ ।।

अत्र विमलीकरणलक्षणस्य कारणस्य मलिनीकरणरूपं कार्यं विपरीतमेव प्रयत्नविषयत्वेनोपात्तम् । यदि मलिनयितुमभिलषति किमिति विमलयतीति कारण प्रतिषेधद्वारात्र कार्यवैपरीत्यप्रतीतिः । यदि धवलं कारणं तर्हि कथं जनयति मालिन्यमिति । कार्य वैपरीत्यप्रतीत्या कारणप्रतिषेधस्तु विषयो विषमालंकारस्य ।

---

इह सममिति प्रस्तूयतेऽनुरूपसमागमस्तु । उदाहरणम् —

चन्द्रज्योत्स्ना कौमुदीव चन्द्रखण्डमण्डनं गंगेव । हे राजन् नरसिंह ! पश्यानुरूपं यशः शोभते तव । कारणवैपरीत्ये फलोत्पादने प्रयत्नस्य वैचित्र्यमित्युक्तम् । उदाहरणम्—

हे देव ! तव यशः संसारे स्वच्छं करोति । खलमुखं मलिनयति । मित्रस्याह्लादनाय तव प्रतापोऽपि सूर्याय द्रुह्यति । इह विमलीकरणलक्षणस्य मलिनीकरणरूपं कार्यं विरुद्धमेव । यत्नविषयतयोपात्तम् । यदि मालिन्यायाभिलषति तर्हि कथं विमलयति । कारणनिषेधेनात्र कार्यविपरीततायाः प्रतीतिः यदि धवलत्वं कारणं तर्हि कथं मलिनत्वमुत्पादयति । विषमालंकारस्य विषयः, कार्यविपरीततया कारणप्रतिषेधः ।

---

अनुरूप समागम तो यहाँ सम अलंकार में प्रस्तुत किया जाता है । जैसे—

चन्द्रज्योत्स्ना जैसे कौमुदी, गंगा जैसे शिव शोभित हैं । हे नरसिंह नरेश ! देखो उसी अनुकूल आश्रित तुम्हारी कीर्ति शोभित है ।

कारण के विरुद्ध फल उत्पत्ति में प्रयत्न विचित्र अलंकार है । जैसे—

हे देव ! तुम्हारा यश संसार को स्वच्छ बना रहा है । यह खल के मुख को मलिन करने के लिए है । मित्र को प्रसन्न करने के लिए तुम्हारा प्रताप भी सूर्य से शत्रुता करता है ।

यहाँ स्वच्छ बनाने वाले लक्षण कारण के मलिन करने वाला रूप कार्य के विपरीत है । यही विषयत्व से प्राप्त है । यदि मलिन करने के लिए अभिलषित हो, तो क्यों विमल करता है । इस कारण निषेध द्वारा यहाँ कार्य विपरीतता की प्रतीति

ple, this sprout appears just where the seed has been sown. But if the seed were sown on the earth and the sprout were to appear in the sky; it will be a case of this figure of speech based on the incompatibility of the strata of the cause and effect. Here too vidyādhara has followed the line of Mammaṭa and Ruyyaka and not of Bhojarāja and others.

35—Viṣama—When the resulting event is completely opposed to its causative action or the effect is incompatible in every wise leads to a catastrophe, it is a case of this figure of speech.

For example, "O king Narsingha ! When the sun of your fame began to rise; the lotus faces of the wives of the enemies began hanging down and were never again in a bloom. The rise of the sun always causes the bloom of the lotuses; but here it has been shown to bear just the opposite result. In the treatment of this figure vidyādhara has followed the lines of both Mammaṭa and Ruyyaka.

36—Sama—This figure is just opposite of ( Viṣama ) that is to say, when the events and effect and the salutary results are just as expected from their causative factors, they lead to this figure of speech.

In the treatment of this figure vidyādhara has followed Ruyyaka though Panditrāja Jagannātha has opposed both Ruyyaka and Vidyādhara.

'O king Narsingha ! it is only proper that your name should be associated with such great fame well deserved by your countless charitable actions.

37—Vicitra—This figure is very much like (Viṣama). In that here too the effect is completely incompatible with the causes with the only difference that the compatibility here not so much between the cause and effect as between the causative effort and its desired fruit. Here too Vidyādhara follows Ruyyaka and gets full support from Panditrāja Jagannātha. For example, 'O king

अधिकमिदं गदितं तदशानानुरूपताश्रयाश्रयिणोः ॥ १७९ ॥

अत्र विरोधस्य प्रक्रान्तत्वमेवैतन्निरूपणकारणम् । अत्रानारूप्ये हि विरोधस्य जागरूकत्वात् ।

यदिह न दिशां सीम्नि व्योम्नः स्थलेऽप्यमितं यश,
स्तव कथमपि ज्योत्स्नागौरं नृसिंह नरेश्वर ।
तदिदमखिलं चित्रं पञ्चाशता परमक्षरैः
कृतपरिकरे वाग्व्यापारे निवेशयते कविः ॥ १८० ॥

अत्र यथा दिगन्ताद्याधाराधेयस्य यशसो महत्त्वमुपनिबद्धं तथा वाग्व्यापारस्य पारिमित्येऽपि यशसो महत्त्वम् ।

भवति क्रिययोरजननं यद्यन्योन्यं तदान्योन्यम् ॥ १८१ ॥

---

अधिकमिदं कथितं यत्राधाराधेययोः अननुरूपतां याति । अत्र विपरीतस्य प्रक्रान्तत्वमेवैतन्निरूपणकारणम् । अत्रानारूपतायां हि विरोधस्य कारणं जागरूकत्वात् ।

नरसिंह राजन् ! तव ज्योत्स्नागौरं कथं स्थलेऽपि यशः प्रकाशते विततम् । आकाशस्य सीम्नि ते यशः दिशापर्यन्तं विचित्रमिदम् । कविकृतपरिकरे वाग्विलासे पञ्चाशदक्षरैः निवेशयते यथात्र दिगन्ताद्याधाराधेयस्य यशसो महत्त्वमुपनिबद्धं तथा वाग्व्यापारस्य यशसो महत्त्वम् ।

परस्परक्रियायाः विरुद्धत्वेऽन्योन्यालंकारो भवति ।

---

होती है । यदि धवल कारण है, तो कैसे मलिनता उत्पन्न होती है । कार्य की विपरीतता प्रतीति से कारण प्रतिरोध हो तो विषम अलंकार का विषय है ।

अधिक अलंकार आधार एवं आधेय दोनों की अनुरूपता न होने पर होगा । यहाँ विरोध का प्रस्ताव ही इसके निरूपण का कारण है । निश्चय ही यहाँ अनुरूप साहित्य में विरोध की जागरुकता होती है ।

नरसिंह नरेश ! तुम्हारा किस प्रकार का यश ज्योत्स्नागार है । स्थल में भी फैला है । आकाश की सीमा में जो है नहीं, वह सब विचित्र है । कवि कृत परिकर वाग् विलास में पचासों अक्षरों द्वारा निवेशन करता है । अब जैसे दिगन्त आदि आधार आधेय यश के महत्व से उपनिबद्ध है । वैसे वाग् व्यापार पारमिति में भी यश का महत्व है ।

परस्पर क्रिया के विरुद्ध होने पर अन्योन्य अलंकार है ।

---

Narsingha ! your fame whitens the entire universe in order to blacken the faces of villains'.

परस्परस्य क्रियाजननस्य विरुद्धत्वादत्र निरूपणावसरोऽस्यालङ्कारस्य ।

**पृथ्वी पूर्वापरगिरिघनोत्तुङ्गवक्षोजनम्रा,**
**भूषा बाह्वोरजनि भवतः श्रीनृसिंह क्षितीन्द्र ।**
**बाहुश्चास्याः सुरगजकरस्थूलदीर्घः समग्रां,**
**कान्ति पुष्णात्यघट घटनाचातुरीयं विधातुः ॥ १८२ ॥**

अत्र भुजस्य भूमिरभवद्भूषणं तस्याश्चायमित्यनयोर्भूषणक्रियां प्रत्यन्योन्यजनकत्वमुक्तम् । अत एवोपमानोमेयभावः प्रतीयते ।

भेदास्तु सरस्वतीकण्ठाभरणे द्रष्टव्याः ।

**आधेयमनधिकरणं युगपद्द्येकमप्यनेकत्र ।**
**यदसंभावितवस्त्वन्तरकरणं च त्रिधा विशेषोऽसौ ॥ १८३ ॥**

इह विरोधावसर एवास्य निरूपणमुचितम् । त्रिधा क्रमेण यथा—

---

परस्परक्रियोपजननं विरुद्धमत्र निरूपणस्यावसरोऽस्यालंकारस्य ।

हे नरसिंह नरेश ! भवतो भूषितबाहुना पृथिव्याः पूर्वापरपर्वताः घनोत्तुङ्ग वक्षस्थलानां नम्राः स्तनाग्राः शोभिताः । बाहुश्च देवानां गजस्य शुण्डादण्ड इव स्थूलदीर्घः । ब्रह्मणोऽघटितघटना पटीयसी समग्रां शोभां पुष्णाति ।

अत्र भुजस्य भूमिरभवत् भूषणम् । तस्याश्चायमित्येतयोर्भूषणक्रियां प्रत्यन्योन्यजनकत्वमुक्तम् । अत एवोपमानोपमेयभावः प्रतीयते ।

भेदास्तु भोजराजस्य सरस्वतीकण्ठाभरणेऽवलोकनीयाः । विशेषोऽलंकार आधारेण विनाधेयस्थितिकथनम् । परिमितैकवस्तुना सहानेकावस्थानं तथा शक्यवस्तुकरणं त्रिधा विशेषोऽलंकारः । त्रयाणां क्रमेणोदाहरणमिह—

---

परस्पर क्रिया जनन के विरुद्ध यहाँ निरूपण का अवसर इस अलंकार के सम्बन्ध में है ।

हे नरसिंह नरेश ! आप की भूषित भुजा में पृथ्वी के पूर्व पश्चिम पर्वत ऊँचे बादल को स्पर्श करने वाले वक्षस्थल के स्तन झुकने वाले हो गए और बाहु देवताओं के हाथी (ऐरावत) के सूँड़ के समान मोटे एवं लम्बे हैं । ब्रह्मा की अघटित घटना पटीयसी सम्पूर्ण शोभ की पुष्टि एवं अभिवृद्धि करती है ।

यहाँ भुजा की भूमि भूषण और इन दोनों में यह भूषण क्रिया के प्रति परस्पर जनकत्व कहा गया है । इसीलिए उपमानोपमेयभाव प्रतीत होता है ।

भेद तो भोजराज कृत सरस्वतीकण्ठाभरण नामक ग्रन्थ में दर्शनीय है ।

विशेष अलंकार आधार के बिना आधेय स्थिति कथन परिमित एक वस्तु के साथ अनेक अवस्थान तथा अशक्य वस्तुकरण तीन प्रकार का होता है । यहाँ विरोध का अवसर ही इसके निरूपण में उचित है । तीनों का क्रमशः उदाहरण—

निपीतोऽयं वीर क्षणमपि विलासस्तव गिरा;
महो यावज्जीवं मनसि विदुषां पल्लवयति ।
रसालानां स्वादं कुवलयदलानां परिमलं,
प्रसादंज्योत्स्नानामपि च शरदारम्भसुहृदाम् ॥१८४॥

अत्र गिरां विलासस्याधारस्य श्रवणाञ्जलिपुटपानानन्तरक्षणेऽवस्थानाऽसंभवेऽप्याधेयानां माधुर्यादीनां गुणानामवस्थितिरुक्ता ।

क्वणद्गीर्वाणस्त्री वलयतुमुलोऽजेयसुभट,
स्वयं ग्राहोद्ग्राहाद्द्रुतमपगतो वीर समरात् ।
समस्तोऽप्येष त्वां भयविधुरधीरध्वसु,
वने वने शैले शैले पुरि पुरि च पश्यत्यरिजनः ॥१८५॥

---

अहो तव वाणी विलासः क्षणमपि निपीतोऽयं, यावत् विदुषां मनसि प्राणाः पल्लविताः । आम्रस्वादः कमलदलानां सौगन्ध्यं प्रकाशस्यापि प्रसन्नता तथा सुन्दरहृदयेषु शरदारम्भः ते वाणी विलासेनैव भवति ।

अत्र वाणीविलासस्याधारस्य श्रवणाञ्जलिपुटपानस्य पश्चात् क्षणमपि स्थितसंभावनायामाधेयमाधुर्यादिगुणानां स्थितिः कथिता । समस्तोऽयं शत्रुसमूहोऽपि त्वां प्रत्येकं पथि, वने, पर्वते, पुरे च पश्यति । द्रुतमपगतोवीरसमरात् । देवाङ्गनानां वलयानि ध्वनितानि ।

---

अरे ! तुम्हारी वाणी का विलास इस वीर ने क्षण भर भी पी लिया है । विद्वानों के मन में प्राण पल्लवित होता है । आमों का स्वाद, कमल दलों की सुगन्ध तथा प्रकाश की प्रसन्नता भी एवं सुन्दर हृदयों में शरद ऋतु का आरम्भ रस वाणी से होता है ।

यहाँ वाणी के विलास के आधार के श्रवणाञ्जलि पुट पान के बाद क्षण में अवस्थिति की संभावना होने पर भी आधेय माधुर्य आदि गुणों की अवस्थिति कही गई है ।

समस्त यह शत्रु समूह भी तुम्हें भय रहित रास्तों में प्रत्येक वन में पर्वत, पर्वत में पुर पुर में देखता है । और ऊंचे सुन्दर वीर स्वयं ग्रहण करने से शीघ्र हट गए । वीर रण क्षेत्र से हट गए । देवताओं की स्त्रियों के वलय ध्वनि करते हैं ।

---

Here the whitening and blackening are incompatible as causes and effects; so that the effort at whitening to achieve blackening is really surprising.

अत्रैकस्याप्याधेयस्य वीरस्य यौगपद्येन मार्गादिष्वनेकेषु स्थितिरुपनिबद्धा ।

मन्दारमालोकयितुं गृहीतव्रतं मदीयं नयनं यदासीत् ।
तत् साम्प्रतं वीर नरसिंहदेव, त्वदीक्षणेनाजनि पूर्णकामम् ।।१८६।।

अत्र त्वां पश्यता मम नयनेन सुरतरुर्दृष्ट इति प्रतीतेरसंभावितमेव तद्दर्शनं कृतम् ।।

किञ्चित् केनापि यथा विहितं तद्वस्तु ततोऽन्येन ।
क्रियतेऽन्यथा तथैव व्याघातोऽयं समाख्यातः ।।१८७।।

---

इहैकस्याप्याधेयस्य वीरस्यानेकेषु मार्गादिषु स्थितिरुपनिबद्धा ।

कल्पवृक्षं द्रष्टुं व्रतधारकं नयनं पूर्णकामं हे वीर नरसिंह देव ! तव दर्शनेनाभवत् ।

इह त्वां पश्यता मम नयनेन कल्पद्रुमो दृष्टः । एवं प्रतीतेरसंभावितमेव तद्दर्शनं कृतम् ।

किञ्चित् केनापि कर्त्रा स्वेन साधनेन यत्वस्तु यथावत् करणीयम् । तदनन्तरमपरेण कर्त्रा तत् साधनेन तदेव वस्तु कृतमन्यथा, तर्हि व्याघातोऽयं भवति ।

---

यहाँ एक भी आधेय वीर के साथ अनेक मार्गादि में स्थित है ।

कल्प वृक्ष को देखने के लिए व्रत धारण करने वाला मेरा नेत्र जो था, वह इस समय हे वीर नरसिंह देव ! तुम्हारे देखने से पूर्ण काम वाला हो गया ।

इसमें 'तुम्हें' देखते हुए मेरे नेत्र द्वारा कल्प वृक्ष देखा गया । इस प्रकार की प्रतीति की असंभावना का ही दर्शन हुआ ।

किसी से भी कोई वस्तु दूसरे से अन्यथा किया जाय, वहाँ व्याघात होगा ।

---

38—Adhika—When the base and the thing based on it are incompatible with each other, this figure occurs and subdivided into two types. 1—When the base is too big and he thing based thereon is too small. 2—When the thing based on a base is too big and the base is too small. 'O king Narsingha ! your fame is too big for getting contained within a limited space of ten quarters and how funny it will be if any one were try to limit it within the short space of verbal description, this figure is again based on Ruyyaka's (Alankārsarvswa).

येनोपायेन यत् किमपि कार्यं कोऽप्येकः करोत्यपरः पुनस्तेनैवोपायेन तदन्यथा कुरुते तदा कृतस्य कार्यस्य व्याघातहेतुत्वाद् व्याघातनामालङ्कारः। यथा—

तेजसा जगतस्तापं कृतं किरणमालिना।
नरसिंह महीपाल तेजसैव निरस्यति ॥१८८॥

अत्र तेजोरूपेण येनोपायेन किरणमालिना तापः कृतस्तेनैव त्वयापहृत इति कृतस्य कार्यस्य व्याहतत्वादयं व्याघातः।

सौकर्येण निबद्धा कार्यविरुद्धा क्रिया भवेद्यत्र।
ख्यातोऽपिमनव्याहृतिहेतुर्व्याघात एषोऽपि ॥१८९॥

---

कार्यस्य व्याघातहेतुत्वाद् व्याघातालंकारः। केनापि कर्त्रा स्वेन साधनेन यत्वस्तु यथावत् करणीयम्। तदनन्तरमपरेण साधनेन तदेव वस्तु कृतमन्यथा।

उदाहरणम् —

सूर्यतेजसा जगत् तप्तं नरसिंहनरेशस्य तेजसैव दूरीभवति। इह तेजो रूपेण येनोपायेन सूर्येण तप्तं तेनैव त्वयापहृतं। एवं कृतस्य कार्यस्य व्याहतत्वादयं व्याघातः। कस्यापि कार्यस्य निष्पादनहेतुः, संभावितकारणविशेषणसौलभ्येन तस्य विरुद्ध कार्यनिष्पादनं भवति। तदपि संभाव्यकार्यस्य व्याहतिहेतुना व्याघातनामापरालंकारो भवति।

---

जहाँ कर्ता जिस साधन द्वारा जिस वस्तु को जैसा करे, तदनन्तर दूसरे कर्ता से उसी साधन द्वारा वही वस्तु अन्यथा किया जाय, तो वह किए गए कार्य के व्याघात हेतुता से व्याघातालंकार है। जैसे—

सूर्य द्वारा तेज से जगत् तप्त किया गया। नरसिंह नरेश तेज से ही इसे दूर करते हैं।

यहाँ तेज रूप जिस उपाय से सूर्य द्वारा तप्त किया गया, उसी से ही तुम्हारे द्वारा अपहृत हुआ। इस किए गए कार्य की व्याहतता से व्याघात है।

किसी कार्य की निष्पत्ति हेतु संभावित कारण विशेष की सुलभता से उसके विरुद्ध कार्य निष्पादन जो होता है, वह भी संभाव्यमान कार्य के व्याहति हेतु होने से 'व्याघात' नाम का दूसरा अलंकार है।

---

39 —Anyonya—When two actions are opposed each other, this figure is the result. For example, "this earth is so big in expanse and so heavy to bear has been reduced to merely an ornament of just one of your two hands". This too is based on (Alankārsarvaswa of Ruyyaka).

किमपि कार्यं कर्तुं यत् संभावितं भवति कारणं तद्यदि तत्कार्यविरुद्धकार्यकारित्वेन सौकर्यादुपपाद्यते तदा संभाव्यमानकार्यव्याहतिहेतुत्वादयमपि व्याघात एव । कार्यविरुद्धक्रियायाश्चात्र सौकर्यं कारणस्य सुतरां तदनुगुणत्वात् । अभिमतेतरस्य पुनरिह कारणस्य सुकरतयोपपद्यमानत्वादभिमतकार्यानुत्पत्तावनभिमतप्रादुर्भावे च भवतो विषमालंकाराद्भिन्नविषयत्वेन स्थितः । यथा—

जटाबन्धं बल्काबरणमित्यादि ॥१८९॥ अ

अत्र नरसिंहदेववितरणसदृशस्य लाभकरणं यत्तपः संभावितं तल्लाभविरुद्धमलाभंप्रति सौकर्यादुपपादितम् । यथा वा—

---

किमपि कर्म कर्तुंयत् संभाविबं कारणं भवति । तद्यदि कार्यविरुद्धकार्यकारित्वेन सुलभेन प्रादुर्भूतम् । तदा संभाव्यकार्यव्याहतिहेतुत्वादयमपि व्याघातः । अत्र च कार्यविरुद्धक्रियायाश्च सौलभ्यं कारणस्य शीघ्रतयानुगुणत्वस्य कारणेन भवति । इह पुनः अभिमतापरस्य कारणस्य सुलभतयोत्पादिताभिमतकार्यानुत्पतावनभिमतम् । प्रादुर्भावे च विषमालंकारे सति भिन्नविषयत्वरूपेणावस्थितम् । यथा—

जटाबन्ध बल्कावरणमित्यादि ।

इह नरसिंहदेववितरणसदृशस्य लाभकरणं यत्तपः संभावितं, तल्लाभकरं यत्तपः संभावितं, तल्लाभविरुद्धमलाभं प्रति सुलभतयोपपादितम् । अथवा यथा—

---

किसी कार्य को करने के लिए जो संभावित कारण होता है, वह यदि कार्य विरुद्ध कार्य कारित्व से सुलभता से उत्पन्न होता हैं । तब असंभव कार्य व्याहति हेतु होने से यह भी व्याघात ही है और यहाँ कार्य विरुद्ध क्रिया की सुलभता से उत्पन्न अभिमत कार्य की अनुत्पत्ति में अनभिमत है और प्रादुर्भाव में विषमालंकार होने से भिन्न विषयत्व रूप में स्थित है । जैसे—

जटाबन्धंबल्का वरणमित्यादि श्लोक में ।

यहाँ नरसिंह देव के वितरण (दान) समान लाभ कर जो तप संभावित है, वह लाभ विरुद्ध अलाभ के प्रति सुलभता से उत्पादित है । अथवा जैसे—

---

40—Viśeṣa—When a thing is described as standing without a base Or a very small thing hardly enough to cover one base is shown to cover countless bases or an impossible thing, is shown as taking shape, these will be the cases of three types of this

figure, because in each case the poet attempts to hit at some uniqueness inherent in a thing.

"O king Narsingha ! those who have even for a moment were blessed with the opportunity of hearing of your speech begin to enjoy the excellent taste of mangoes, the fine scent of lotus flowers and the pleasantness of the moonlight."

Here what is described is that what is to be enjoyed by the mind alone is being enjoyed by the tongue, the nose and the eyes, that is, a thing associated with one base has become associated with a number of bases which is an impossibility, but the way of description leads to a peculiar type of aesthetic pleasure. The description of such excellence is a necessary ingredient of this figure, as much as it is of the (vakrokti) of Bhāmaha. The line of followed here too is the one of (Alankārasarvaswa).

41 & 42—Vyāghāta—The first of the two types occurs where an agent with the instrumentality of a certain material shapes a thing in one way where as another agent recoursing to the same instruments gives its quite different shape. For example, "The sun with the instrumentality of light makes the world hot while the king Narsingha with the same instrument i. e. the light of his valour removes this heat and in fact all heat that had become troublesome. The subversion of the nature of the effect without recoursing to different sets of instruments is the backbone of this figure and justifies its name which literally means subversion. The second type occurs, when the instrumentality naturally associated with one set of results leads to a different set and most unexpected results. For example, "The enemies of king Narsingha attempted at obtaining victory with the instrumentality of their armour have most unexpectedly obtained (surśrī) that is instead of usual result, victory they have obtained the most unexpected result, i.e. death. This also is in accordance with the ( Alankārasarvaswa ) of Ruyyaka. Having dealt with figures based on opposition or incongruity, the author takes up those which look like chains, that is,

जयश्रियं प्राप्तुमकामयन्त, नृसिंह युद्धात्तव वैरिवीराः ।
त्वया तु चक्रीकृतकार्मुकेण, सुरश्रियं संगमितास्ततस्ते ॥१९०॥
इत्थं निरूप्य कतिचिद्विरोधगर्भानलङ्कारान् ।
कथयामो वयमधुनालङ्काराञ् शृङ्खलाकारान् ॥१९१॥
यद्यत्पूर्वं तत्तद्यथोत्तरं चेत् क्रमेण संश्रयति ।
हेतुत्वं भवति तदा कारणमालेत्यलङ्कारः ॥१९२॥
वितरणे करुणा तव कारणं, वितरणं सुकृतस्य निबन्धनम् ।
सुकृतहेतुयशो यशसा न किं भवति वीर नृसिंह महीपते ॥१९३॥

---

हे नरसिंह ! रणात्तव शत्रुवीराः विजयश्रियं प्राप्तुमिच्छितवन्तः । परन्तु त्वया तु धनुषा भ्रमिताः अर्थात् ते तदनन्तरं सुरश्रियं प्राप्ता दिवंगताः । एवं कतिचिद्विरोधगर्भानलंकारान्निरूप्याधुना वयं शृङ्खलाकारानलंकारान् कथयामः । यत्-यत् पूर्वं तत्तत् यथोत्तरं यदि कारणं क्रमेण भवति, तदा कारणमालेति भवत्यलंकारः । हे वीर नरसिंह नरेश ! वितरणे ( दाने ) तव करुणा कारणं, वितरणं च सुकृतेन निबद्धम् । सुकृतस्य हेतुर्यशः । यशसा किं न भवति । अर्थात् सर्वमेव भवति ।

---

हे नरसिंह ! युद्ध से तुम्हारे शत्रु वीर विजयश्री प्राप्त करना चाहे, किन्तु तुम्हारे द्वारा तो धनुष से भ्रमित कर दिए गए । अर्थात् वे स्वर्ग सिधार गए ।

विरोधगर्भ अलंकार का निरूपण कर शृङ्खलाकार अलंकार का निरूपण करते हैं । पूर्व-पूर्व का क्रम से उत्तर-उत्तर के प्रति कारण होना कारणमाला अलंकार होता है । हे वीर नरसिंह नरेश ! दान देने में तुम्हारी करुणा कारण है । दान सुकृत (पुण्य) से सम्बद्ध है । सुकृत का हेतु यश है । यश से क्या नहीं होता है ? अर्थात् सब कुछ होता है ।

---

those in which the preceding and the succeeding objects are connected with each other like links of a chain.

43—Kāraṇamālā—When each prior thing becomes the cause of its posterior, this figure occurs. For example, "the sentiment of pity is the cause of charities done by king Narsingha and the charities have become the cause of spiritual merit, which in its turn has become the cause of the fulfilment of all the desires of king Narsingha". What Vidyādhara means to pay is that every result flowing from its initial cause does not finally maintain the position of the result alone, but turns into the shape of a cause producing another result which in its turn becomes a cause producing another result and so on, till the final result is so-

यत्र विशेषणभावं पूर्वं-पूर्वं प्रति क्रमेणैव ।
भजति परं परमेषालङ्कृतिरेकावली कथिता ॥१९४॥
राज्ञां सभाः सकवयः कवयो निसर्ग,
-सारस्वतप्रसरनिर्मितरम्यकाव्याः ।
काव्यानि वर्णितभवच्चरितान्यतीव,
चित्राणि वीर भवतश्चरितानि भान्ति ॥१९५॥
यत्रोत्तरोत्तरगुणावहत्वमुल्लसति पूर्वपूर्वस्य ।
तदिदं मालादीपकमित्याम्नातं विपश्चिद्भिः ॥१९६॥
मालारूपविच्छित्तिविशेषावलम्बनेन दीपक;
प्रस्तावं त्याजयित्वास्य लक्षणमिह दर्शितम् ।
तव क्रियन्ते करुणाकटाक्षैः श्रियः कवीनां नरसिंह भूप ।
ताभिर्विकासा मनसः पुनस्तैः सूक्तानि तैस्त्वद्गुणवर्णनानि ॥१९७॥

---

यत्र विशेषणं पूर्वं-पूर्वं प्रति क्रमेणापरः परस्, तदैकावली भवत्यलंकारः। सभा राज्ञां कविना सह कविः स्वभावतो विद्वतायुक्तः। तेन रचितं मनोरमं काव्यं, काव्ये भवतोऽतितरेण चित्रं चरितम्। हे वीर! चरितानि सुशोभितानि। यत्र पूर्वस्योत्तरोत्तरत्वोपस्कारकत्वं निबद्धं तत्र मालादीपकमिति कथितं विद्वद्भिः। मालारूपचारुत्वविशेषावलम्बनेन दीपकप्रस्तावं त्यक्त्वास्य लक्षणमत्र प्रदर्शितम्। हे नरसिंह नरेश! तव करुणाकटाक्षैः कवीनां श्रीः। तया च मनसो विकासाः। पुनस्तैः काव्यं, तेन तव गुणवर्णनानि च।

---

जहाँ विशेषण पूर्व-पूर्व के प्रति क्रम से ही पर पर का हो, वह एकावली अलंकार है। कवि से राजा की सभा, कवि स्वभाव से विद्वतायुक्त, उनके द्वारा रचित सुन्दर काव्य, काव्य में आपके अत्यन्त विचित्र चरित्रों का वर्णन, हे वीर! आपके चरित्र सुशोभित होते हैं।

जहाँ पूर्व का उत्तरोत्तर उपस्कारकत्व निबद्ध हो, वह माला दीपक अलंकार विद्वानों द्वारा माना गया है। माला रूप सुन्दरता विशेष अवलम्बन द्वारा दीपक का प्रस्ताव त्याग करा इसका लक्षण यहाँ दिखाया गया है। हे नरसिंह नरेश! तुम्हारे करुणा कटाक्ष से कवियों की श्री होती है। उससे मन का विकास होता है। पुनः उनसे सूक्त बनते हैं। उनके द्वारा तुम्हारे गुणों का वर्णन होता है।

---

great that it need not change into a cause since it is the highest conceivable achievement. This figure has also quite a number of other figures now been discussed, are all based on the (Alankārasarvaswa) of Ruyyaka.

अत्र कटाक्षादिभिः क्रमेण श्रीप्रभृतीनामुत्कर्षः । करणक्रियानिबद्धनं च दीपकम् ।।

वस्तुस्पृहणीयत्वे विश्रान्ति चेद्यथोत्तरं तनुते ।
सारो नाम तदानीं कथितोऽलङ्कारसारज्ञैः ।।१९८।।
एके चन्द्रकलावचूडमपरे मौली तदीये स्थितां ।
स्वर्गङ्गामितरे तदाश्रितपदाम्भोजं मधुध्वंसिनः ।।
सर्वे तन्मनसि स्थितां श्रियमनुध्यायन्ति सैषापि यद् ।
भ्रूभङ्गैकवशंवदा स जयति श्रीमान् नृसिंहो नृपः ।।१९९।।

---

इह कटाक्षादिभिः क्रमेण क्रयादीनामुत्कर्पकरण क्रियानिबद्धनं च दीपकम् । यत्र पूर्वविक्षयोत्तरस्य सारत्वं निबद्धं, तत्र तदानीं सारो नाम कथितोऽलंकारः तत्वज्ञैः । मस्तके चन्द्रकला शिरसि स्वर्गङ्गा स्थिता । अपरे चाश्रितं विष्णुचरणकमलम् । सर्वे च तन्मनसि स्थितवैभवस्य ध्यानम् । सेयमपि लक्ष्मीः भ्रूभङ्गस्य वशे स्थिता । एतादृशो लक्ष्मीवान् स नरसिंहो नरेशो विजयते । अर्थात् सः सर्वोत्कृष्टः ।

---

यहाँ कटाक्षादि द्वारा क्रमशः श्री आदि का उत्कर्ष करने की क्रिया निबन्धन दीपक है । जहाँ पूर्व-पूर्व की अपेक्षा उत्तरोतर सारत्व निबद्ध होता है । वहाँ उस समय सार नामक अलंकार तत्त्वज्ञों द्वारा कहा गया है ।

प्रथम शिव के मस्तक पर चन्द्रकला है । दूसरे सिर पर गङ्गा स्थित हैं । दूसरे उसका आश्रयण विष्णु का चरण कमल है । सभी उनके मन में स्थित वैभव का ध्यान करते हैं । यह वह लक्ष्मी है, जिसकी भ्रूभङ्गिमवश में करती है, ऐसे लक्ष्मीवान् उस नरसिंह नरेश की जय हो अर्थात् वे सर्वोत्कृष्ट हैं ।

---

44 —Ekāvalī —when each adjectival phrase or adjective takes the shape of a noun requiring another adjective to qualify it and this sequence continues till the highest conceivable adjective, has been brought into being, it is a case of this figure. For example, "a court is embellished by nice poets and each poet is embellished with a spiritual gift from the Goddess of learning leading him to create nice poetry. Poetry in its turn, is embellished with the excellent characters, it seeks to describe characters in their turn, are embellished by insuperable uniqueness."

45—Mālā Deepaka —Where the next group of words or phrases is subservient to its immediately preceding group of words or phrases and the sequence contiues through out an entire poem, it is a case of Māladeepaka.

इह भगवतः खण्डेन्दुचूडस्यापेक्षया सुरसिन्धोरुत्कृष्टत्वं तदपेक्षया परमपुरुषस्य तदपेक्षया लक्ष्म्यास्तदपेक्षया श्रीमतो नृसिंहदेवस्य । यथा वा—

अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते,
सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकार ।
धत्ते खद्योतलीलामयमपि गगने श्रीनृसिंह क्षितीन्द्र,
त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥२००॥
वाक्यार्थो यदि हेतुर्भवति पदार्थो विशेषणद्वारा ।
द्विविधं कथयन्ति तदालङ्कारं काव्यलिङ्गमिति ॥२०१॥

नेदमनुमानम् । ज्ञाप्यज्ञापकभावाभावात् । समर्थ्यसमर्थकभावेऽप्यत्र नार्थान्तरन्यासाविर्भावः ।

---

अत्र भगवतः शिवस्यापेक्षया सुरसिन्धोरुत्कर्षः । तदपेक्षया परमपुरुषस्य विष्णोः, तदपेक्षया लक्ष्म्यास्तदपेक्षया श्रीमतो नरसिंहस्य । अथवोदाहरणम्-अन्तर्विष्णोस्त्रिलोकी स शेषनागोपरि शेते । निवसति च सोऽप्येकदेशेऽस्ति सिन्धौ, तथापि गण्डस्थलेऽगस्त्यो रक्षितवान् । आकाशोऽयं खद्योतलीलयापि युक्तः । हे नरसिंह नरेश ! तव कीर्त्या कर्णनीलकमलमपि दर्शनीयं च शोभां प्राप्नोति । वाक्यार्थो यदि कारणं स्यात् तर्हि पदार्थविशेषणद्वारेण काव्यलिङ्गालंकारोऽयं भवति । द्विविधोऽयं भवत्यलंकारः । काव्यलिङ्ग--नानुमानम् । ज्ञाप्यज्ञापकभावाभावात् । समर्थ्यसमर्थकभावेऽप्यर्थान्तरन्यासाविर्भावो न भवति ।

---

यहाँ भगवान् शिव की अपेक्षा सुरसिन्धु का उत्कर्ष है । उसकी अपेक्षा परम पुरुष विष्णु की उसकी अपेक्षा लक्ष्मी की, उनकी अपेक्षा श्रीमान् नरसिंह देव की उत्कृष्टता है । जैसे—वह शेषनाग पर भी सोते हैं, जो विष्णु त्रिलोकी है । निवास करते हैं क्षीरसागर के एक स्थान में, उस सागर को भी अगस्त्य ने गण्डस्थल में रख लिया । आकाश में जुगनू क्रीड़ायुक्त हो जाता है । हे नरसिंह नरेश ! तुम्हारी कीर्ति से कर्णनील कमल भी देखने योग्य शोभा पाता है । वाक्यार्थ यदि कारण होता है, तो पदार्थ विशेषण द्वारा इसे काव्यलिङ्ग अलंकार कहते हैं, जो दो प्रकार का होता है । यह अनुमान नहीं है । ज्ञाप्यज्ञापक भाव का अभाव कारण होता है । समर्थ्य समर्थक भाव में भी यहाँ अर्थान्तरन्यास का आविर्भाव नहीं है ।

---

However it is a misnomer as for Deepaka is concerned as pointed out by the commentators of (Kāvya Prakāśa). Vidyādhara has been very cautious in providing his illustrations, where the word (Kriyante) as a helping verb is associated with each agent. The verse illustrative of this figure in 'Ekāvalī' presents the following idea. "O king ! When you look at some poet with

समर्थवाक्यार्थस्य समर्थकवाक्यार्थं प्रति सापेक्षत्वात् । यत्रेतरनिरपेक्षस्य वाक्यार्थस्य हेतुत्वं तत्रार्थान्तरन्यासः । ततश्च सामान्यविशेषरूपवाक्यार्थगत एवार्थान्तरन्यासो भवितुमर्हति यत्र संभवतीतरनिरपेक्षत्वम् ।

नापि दृष्टान्तः सामान्यरूपयोरेव विशेषरूपयोरेव वाक्यार्थयोरेव परस्परनैरपेक्ष्येण हेतुत्वे तस्य संभवात् । यदि तु कार्यकारणरूपयोरेव तयोः परस्परसव्यपेक्षत्वेन हेतुत्वं तदा तावदेकं वाक्यार्थवृत्तिकाव्यलिङ्गम् । अत्र च वाक्यार्थ एव हेतुरतस्तद्वाचकस्य हि शब्दादेरुपदाने पौनरुक्त्यम् । यदा पुनः पदार्थस्य हेतुत्वं तदा यदि तृतीयान्तं पञ्चम्यन्तं वा पदमुपादीयते तदा हेतुत्वमात्रं नालङ्कारः । यदा तु विशेषणद्वारा कारणोपनिबन्धस्तदा पदार्थवृत्तिकाव्यलिङ्गम् । एवमिदं द्विभेदम् क्रमेण यथा —

---

समर्थवाक्यार्थस्य समर्थवाक्यार्थं प्रति सापेक्षत्वम् । यत्रापरनिरपेक्षवाक्यार्थस्य कारणं तत्रार्थान्तरन्यासः । तदनन्तरं सामान्यविशेषरूपयोः वाक्यार्थगत एवार्थान्तरन्यासः । यत्रापरस्य निरपेक्षत्वं संभवति । दृष्टान्तोऽपि न । द्वयोः सामान्यरूपयोरेव द्वयोर्विशेषरूपयोरेव वाक्यार्थे परस्परनिरपेक्षतया हेतुत्वे तस्य संभावनाकारणात् । यदि कार्यकारणरूपयोरेवैतयोः परस्परव्यपेक्षत्वसहितं हेतुत्वं तदैकवाक्यार्थवृत्तिकाव्यलिङ्गम् । अत्र वाक्यार्थ एव हेतुः । तस्य वाचकस्य निश्चयेन शब्दादेरुपादाने पुनरुक्तता यदा पुनः पदार्थस्य हेतुत्वं तदा यदि तृतीयान्तपञ्चम्यन्तपदयोरुपादानम् । हेतुत्वं नालंकारोऽस्ति । यदा तु विशेषणेन कारणमुपनिबद्धम्, तदा पदार्थवृत्तिकाव्यलिङ्गम् । एवं द्विभेदमिदम् । क्रमेणोदाहरणम् ।

---

समर्थ वाक्यार्थ के समर्थक वाक्यार्थ के प्रति सापेक्षत्व है । जहाँ दूसरे निरपेक्षवाक्यार्थ का कारण हो, वहाँ अर्थान्तरन्यास है और उसके बाद सामान्य विशेषरूप वाक्यार्थगत है । अर्थान्तरन्यास होने योग्य है, जहाँ दूसरे का निरपेक्षत्व संभव है । दृष्टान्त भी नहीं है । दो सामान्य रूप के ही दो विशेष रूप वाक्यार्थ में परस्पर निरपेक्षता से हेतुत्व में उसकी संभावना कारण है । यदि कार्य कारण रूप के ही उन दोनों की परस्पर व्यपेक्षत्व सहित हेतुत्व होता है, तो तब एक वाक्यार्थ वृत्ति काव्यलिङ्ग अलंकार होता है । यहाँ वाक्यार्थ ही हेतु युक्त है । उसके वाचक के निश्चय ही शब्दादिके उपादान में पुनरुक्तता है । जब पुनः पदार्थ का हेतुत्व है, तब यदि तृतीयान्त और पञ्चम्यन्त पद का उपादान होता है, तो हेतुत्व मात्र अलंकार नहीं है । जब विशेषण द्वारा कारण का उपनिबन्धन होता है, तब पदार्थ वृत्ति काव्यलिङ्ग है । इस प्रकार यह दो भेद है । क्रमशः जैसे—

compassion, he is made rich His riches lead to development of the poet's intellectual faculties, which development in turn generates in the poets the ability to create poems with genuine excellence and such poems attain the power of describing your fi e qualities."

Here the first thing has aided the other thing, the next, a third thing and so on till the highest point has been reached.

46—Sāra—when each next idea is more valuable in that, it is the real sumum bonum of the previous idea and this sequence is kept on till the highest point has been reached, it is a case of this figure of speech. Both Ruyyaka and Vidyādhara in their illustrations have succeeded in avoiding the monotony brought about by the use of the word (sāra).

47—Kāvyalinga—This figure is based on cause and effect, relationship and the credit of giving a definite shape to this figure goes to Udbhaṭa. Here an idea whether described in word or sentence justifies another idea, this figure occurs. It is just like inference ( Anumāna ) with the only difference that the cause inference is ( Gyāpaka ) i e. it is based on invariable concommittance, where as in this figure the cause only justifies and explains the effect, Which otherwise would have remained unintelligible in some of its aspect, because this effect is comparatively less known and thus having the tendency of looking strange unless it has been explained by some appropriate cause.

**अलं भोः पौलोमीसहचरपुरीवारमहिलाः ।**
**कुचाभोगे कालागरुभिरफलस्थासकविधिः ॥**
**कलिङ्गेन्दोः कीर्तिस्त्रिदशपरिषद्गीतमहिमा ।**
**समन्ताद्गात्रं वः सरसमनुलिम्पत्यविरलम् ॥२०२॥**

अत्र कालागरुस्थासकविधेरफलत्वे साध्ये कलिङ्गेन्दोरित्यादिवाक्यार्थो हेतुत्त्वेनोपात्तः ।

**त्वद्वैरिक्षितिपालसौधवलभी रिञ्छोलिशालामधु ।**
**च्छत्रोड्डीनसरोषघोरसरघादंशव्यथाव्याकुलाः ॥**
**मन्दाः स्यन्दनवाजिनः प्रतिपथप्रस्थानदौःस्थ्यं मुहुः ।**
**क्षोणीपाल नृसिंह देव नितरां कुर्वन्ति भासां प्रभोः ॥२०३॥**

इह रविरथतुरगगमनान्तराये साध्ये मन्दा इति विशेषणरूपः पदार्थो हेतुतया निर्दिष्टो मन्दतायाञ्च त्वद्वैरीत्यादि विशेषणरूपः ।

---

इन्द्रपुरीवाराङ्गनाः युष्माकं कुचाग्रभागे कालागरुभिर्यत्स्थितिविधानमस्ति तादृशी या महत्ता कलिङ्गनरेशस्य कीर्तिः सा युष्माकं सरसगात्रमविरलमनुलिम्पति । या महत्ता देवसभायां गीता तदफलमभवत् । अर्थात् कालागरूणां छाया कृष्णवर्णा तत्र स्वरयाप्तिं नादधात् । अत्र कालागरुस्थासकविधेरफलत्वे साध्ये कलिङ्गेन्द्वादिवाक्यार्थहेतुत्वेनोपात्तः । नरेश नरसिंहदेव ! तव शत्रुनरेशाणां भवनवलभीरिञ्छोलिशालामधुच्छत्रोड्डीनक्रुद्धसरघादंशनेन व्यथाव्याकुलाः सूर्यरथाश्वाः उन्मार्गगमनेन चलनेन च मुहुर्गमनसम्बन्धिप्रभोः प्रकाशस्य विस्तृतरूपतां कुर्वन्ति । अत्र रविरथतुरगगमनान्तराये साध्ये मन्दा इति विशेषणरूपः पदार्थो हेतुत्वेन निर्दिष्टो मन्दत्वस्य च त्वद्वैरीत्यादि विशेषणरूपः ।

---

इन्द्रपुरी की वाराङ्गनाएँ जिनके स्तन पर कालागरु से फल हीन स्थिति का विधान प्रयोजन है। और कलिङ्ग नरेश कीर्ति महिमा देवताओं की सभा में गाई जाती है। जो चारो ओर तुम्हारे सरस गात्र रस सहित घने रूप से अनुलिम्पित है।

यहाँ कालागरुस्थासकविधि के अफलत्व साध्य में कलिङ्गेन्दु आदि वाक्यार्थ हेतुत्व से उपात्त है।

नरेश नरसिंह देव ! सूर्य के धीमे रथ के घोड़े उलटे मार्ग में चलने से बार-बार आकाश में प्रभु आप के प्रकाश की विस्तृत रूपता करते है। तुम्हारे शत्रु नरेश के भवन बलभी स्थित मधुछत्ता से उड़े रोष युक्त घोर मधुमक्खी के काटने के कारण दुःख से व्याकुल हैं।

**अनुमतमनुमानमिदं यत्र स्तः साध्यसाधने कथिते ॥२०४॥**

अत्र साध्यसाधनकथनमात्राभिधानं व्याप्त्यादिप्रदर्शनं न कर्तव्यमित्युपदेशे पर्यवसितम् । इतरथा कथमेतत् तर्कानुमानतो भेदं भजेत् । किं च पञ्चावयवत्वे सत्यप्यवयवान्तरानुपादानं पौनरुक्त्यपरिहाराय । तथा हि केचिदवयवान्तराभिधानमधिकं मन्यमानास्तर्कानुमानेऽपि द्वित्रावयवत्वमेवाभ्युपगच्छन्ति । विशेषतश्चमत्काराय श्लेषरूपकापह्नुत्याद्यनुप्राणित्वेन विच्छित्यन्तरमादरणीयम् ? यथा—

**नरसिंह महीपाल विद्मस्त्वां मकरध्वजं ।**
**मार्गणास्तव संजाताः कथं सुमनसोऽन्यथा ॥२०५॥**

---

अत्र साध्यसाधने कथिते तत्रानुमतमनुमानमिदं भवति ।

अत्र साध्यसाधनयोः कथनमात्राभिधानम् । व्याप्त्या प्रदर्शनं करणीयमित्युपदेशेऽन्तः । अपरथा कथमिदं तर्कानुमानतो भेदः क्रियेत् ।

किं चानुमानं पञ्चावयवत्वेऽस्मिन्नपि परावयवस्यानुपादानस्य पुनरुक्ततापरिहाराय भवति । तथैव केचिदवयवान्तराभिधानमधिकमङ्गीकारं कुर्वन्तस्तर्कानुमानेऽपि द्वित्रावयवत्वमेवाप्युपजानन्ति । विशेषणचारुत्वकरणाय श्लेपरूपकापह्नुत्याद्यनुप्राणित्वेन चारुत्वमादरणीयम् । उदाहरणमत्र —

हे नरसिंह नरेश ! त्वां मकरकेतनं वयं जानीमः । सुमनसोऽन्यथा कथं तव मार्गणाः अर्थात् देवाभिन्नो भवान् ।

---

यहाँ रवि रथतुरगगमन विघ्न में साध्य में 'मन्दा' इसमें विशेषण रूप पदार्थ है, जो हेतुता से निर्देशित है और मन्दता का 'तद्वैरीत्यादि' विशेषणरूप है ।

जहाँ साध्य साधन दोनों कहे जाते हैं, अनुमित किया गया वही अनुमान अलंकार होता है । यहाँ साध्य साधन कथन मात्र का अभिधान है । व्याप्ति का प्रदर्शन नहीं करना चाहिए । इस उपदेश में अन्त होता है । दूसरे प्रकार से कैसे यह तर्क अनुमान से भेद किया जाय और क्या अनुमान के पञ्च अवयवत्व में इसके होने पर भी दूसरे अवयव का अनुपादान पुनरुक्तता परिहार के लिए है ? वैसे ही कोई अवयवान्तर अभिधान को अधिक मानते हुए तर्क अनुमान में भी दो तीन अवयवत्व को ही जानते हैं । विशेष चमत्कार के लिए श्लेष, रूपक अपह्नुति आदि से अनुप्राणित होने से सुन्दरत्व आदरणीय है । जैसे—

हे नरसिंह नरेश ! तुम्हें मकरध्वज हम जानते हैं । देव से दूसरा कैसे मार्गण तुम्हारा है, अर्थात् देवता से भिन्न किस प्रकार आप हों ।

---

For example, "Ladies of the divine region are not able to Comprehend why the black Sandal paste is failing to blacken

अत्र नरसिंहदेवविषयं मकरध्वजत्वं साध्यम्। तद्विशिष्टश्च धर्मी पक्षः। तत्र तावत् सुमनोमार्गणत्वं हेतुर्वर्तते सपक्षेऽप्यस्मिन्नपि मकरध्वजे वर्त्तते मकरध्वजादितरत्र क्वापि न वर्त्तते। तेन त्रिरूपो हेतुर्नरसिंहदेवनिष्ठं मकरध्वजत्वमनुमापयतीत्यत्रपक्षे व्याप्तिः सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिश्चेति हेतोस्त्रिरूपत्वं दर्शितम्। अथ व्याप्याद् सुमनोमार्गणत्वाद् व्यापकस्य मकरध्वजत्वस्य ज्ञानमिहेति श्लेषप्रतिभोत्थापितमिदमनुमानम्। रूपकादिच्छायानुगृहीतमप्यनयैव दिशा द्रष्टव्यम्। शुद्धमप्येतत् संभवति। यथा—

कार्याणि कारणगुणान्न परित्यजन्ती।
त्यव्याप्तमाहुरिह वीर नृसिंह देव॥
न्यग्गत्वरेण तव दानजलेन सूता।
मेरोः शिखामपि विलङ्घ्य विभाति कीर्तिः॥२०६॥

---

अत्र नरसिंहदेवविषयं मकरध्वजत्वं साध्यम्। तद्विशिष्टश्च धर्मी पक्षः। तत्र तदा सुमनसोमार्गणहेतुः विद्यमानः। द्वितीयपक्षेऽपि मकरध्वजे विद्यमाने सति मकरध्वजत्वेनाभिन्नं क्वापि न वर्तते। तेन त्रिरूपो हेतुः। मकरध्वजत्वमनुमानं नरसिंहदेवनिष्ठम्। एवं पक्षे व्याप्तिः। सपक्षे विपक्षाद्व्यावृत्तिः। एवंविधस्य हेतोः त्रिरूपत्वं प्रदर्शितम्। तत्पश्चात् व्याप्यसुमनसोमार्गणत्वेन व्यापकमकरध्वजस्य ज्ञानम्। अत्रेति-श्लेषप्रतिभोत्थितमिदमनुमानम्। रूपकादिच्छायागृहीतमप्यनयैव दिशा द्रष्टव्यम्। शुद्धमप्येतत् संभाव्यते। उदाहरणम्—वीर नरसिंह देव! कार्याणि कारणगुणान् न त्यजन्ति। अत्राव्याप्तं कथितम्। मेरोः शिखामुल्लंघ्य कीर्तिः सुशोभिता। या गतिशीला तवदानजलेनोत्पन्ना।

---

यहाँ नरसिंह देव विषयक मकरध्वजत्व साध्य है और उससे विशिष्ट धर्मी पक्ष है। तब वहाँ सुमन का मार्गण हेतु वर्तमान है। दूसरे पक्ष में भी मकरध्वज विद्यमान रहने पर मकरध्वज से दूसरी कहीं विद्यमानता नहीं है। इसलिए तीन रूपों वाला हेतु नरसिंहदेव निष्ठ है। मकरध्वजत्व का अनुमान होता है। इस प्रकार

---

their breasts; which failure is as a matter of fact due to perspiration caused by emotions of wonder and attachment arising in them, On hearing the eulogy of Narsingha sung by assembly of the gods.

Here it is difficult to explain why the black sandal paste fails to blacken breast unless the cause has been given to explain the failure.

अत्र राजाऽसंभवमनुमानस्याभिधानमकरोत् ।

प्रथमं निर्दिष्टानां यस्मिन्नर्थान्तराश्रयोऽर्थानाम् ।
अनुनिर्देशो भवति क्रमेण तत् स्याद्यथासंख्यम् ॥२०७॥

आयामश्लाघनीयं किमभिमतफलप्रापकं किं प्रियं किं ।
विस्तीर्णं किं स्थिरं किं विमलमथ च किं श्रूयतां श्रीनृसिंह ।
दोस्तम्भस्त्यागलीला मितवचनमुरोराजलक्ष्मीर्यशस्ते,
नाहीशो न द्युशाखी न मधु न गगनं नाद्रिनाथो न चन्द्रः ॥२०८॥

एकस्मिन् यदनेकं क्रमादनेकत्र वा भवत्येकम् ।
तमलङ्कारनिरूपणनिपुणाः पर्यायमब्रुवत ॥२०९॥

---

अत्र भोजराजेन त्वसंभवमनुमानं स्वीकृतम् । यत्रोद्देश्यमनुद्देशीनामर्थानां क्रमेण सम्बन्धः तत्र क्रमेण यथासंख्यम् । श्रीनरसिंहनरेशः कथं श्रूयते । कथमनायासेन प्रशंसनीयः । किमभीष्टफलप्रापकं किं च प्रियं विस्तीर्णं किं स्थिरं किं स्वच्छं किम् ? अधुना भुजस्तम्भस्य दानलीला यशः श्लाघनीयं स्वल्पवचनं प्रियं वक्षस्थलं विस्तीर्णं राजश्रीः स्थिररूपा, ते यशः स्वच्छं । नायं नागेशो, न स्वर्गद्रुमो न मधु नाकाशो न पर्वतराजो न चन्द्रः ।

यत्रानेकाधेयानां क्रमशः एकाधारसम्बन्धस्तत्र चैकाधेयस्य क्रमेणानेकाधारसम्बन्धस्तत्रालंकारतत्वज्ञैः पर्यायालंकारो भणितः ।

---

यहाँ पक्ष में व्याप्ति है। सपक्ष में रहते विपक्ष से व्यावृत्ति है और इस प्रकार हेतु तीन रूप में प्रदर्शित है। इसके बाद व्याप्य सुमन के मार्गणत्व से व्यापक मकरध्वज का ज्ञान होता है। यहाँ यह श्लेष से प्रतिभोत्थित अनुमान है। रूपकादि छाया से युक्त भी इसी दिशा से द्रष्टव्य है। यह शुद्ध भी सम्भव है। जैसे—

हे वीर नरसिंह देव ! कारण गुण को नहीं छोड़ते हैं। यहाँ भी अव्याप्त कहा गया। मेरु शिखर का उल्लंघन करके तुम्हारी कीर्ति सुशोभित है। जो गतिशील है और तुम्हारे जलदान से उत्पन्न है।

यहाँ तो भोजराज ने असंभव अनुमान का अभिधान किया।

जहाँ उद्देशी और अनुद्देशी के अर्थों का क्रमशः सम्बन्ध बांधा जाता है, वह क्रमपरक नाम का यथासंख्य अलंकार होता है।

श्री नरसिंह नरेश अब क्या सुनें। क्या अनायास प्रशंसनीय है ? कौन अभीष्ट फल प्राप्त कराने वाला है। क्या प्रिय है। विस्तृत क्या है। स्थिर क्या है। स्वच्छ क्या है। क्रमशः भुजा स्तम्भ की दानलीला, सूक्ष्म बचन, वक्ष स्थल, राजलक्ष्मी,

तुम्हारा यश सभी ये क्रमशः गणनीय हैं। न यह नागेश, न कल्पद्रुम, न मधु, न आकाश, न पर्वतराज, न चद्रमा है। यह नरसिंह नरेश ही हैं।

जहाँ अनेक आधेयों का क्रमशः एक आधार सम्बन्ध होता है और एक ही आधेय का क्रमशः अनेक आधार, सम्बन्ध होता है, वहाँ पर्यायालंकार होता है।

---

48—Inference ( Anumāna )—As already hinted, this figure arises when the cause and effect relationship is more like the one of logical infe ence The only difference between logical inference as such and this figure is that the figure must have a poetic approach both in the choice of the things described and presentation of the cause For example, "O king Narsingha ! you are none other than God cupid. How Could otherwise your arrows change into flowers.

There is a pun on the word ( Mārgaṇaḥ ) and ( sumanasaḥ ) In reality they mean beggars and Gods respectively and the real meaning of the sentence is that the king Narsingha is so great that even Gods stand in need of his help. However when we take the previous meanings i. e. your arrows are made of flowers, inference becomes justified, because flower's arrows can be associated with none other than the God cupid.

49—Yathāsankhyam—where the subjects are arranged in the same order as are their predicates, it is a case of th s figure. For example, "in this world, the most extensive, granting the cherished desire, most appealing to taste, the most pervasive and the most unshakable are the king of serpents, the wish granting tree, honey, the sky and the Himalya mountain."

Here each predicate occupies the same position in order as does its subject. This figure is just like Ruyyaka's Alankārasarvaswa.'

50—Paryāya—where one thing by turns is located at several bases or one base becomes the location by turns of several things, it is a case of this figure of speech. For example,

अत्र क्रमप्रक्रम एवास्य निरूपणकारणम् । यदा योगाद्येनैकस्यानेकत्र स्थिति-रुपनिबध्यते तदा विशेषविषयमप्याक्रामत्ययमित्याशयेनात्र क्रमग्रहणम् । न चैव परिवृत्तिः । विनिमयेन विनैवास्य प्रवृत्तत्वात् । पर्यायक्रमत्वमाश्रित्य प्रगल्भमानत्वादन्वर्थमस्याभिधानम् । क्रमेण यथा ।

काश्मीरपांशुरुचिरांशुकचारुहारैर्या प्राग्बभौ कुचतटी रिपुसुन्दरीणाम् ।
सैवाद्य भाति कुपिते त्वयि वीर भूभृद्धातुच्छटातरुपलाशरक्तसूत्रैः ॥२१०॥

अत्र कुङ्कुमरजः प्रभृतयो गैरिकप्रमुखाश्चैकस्मिन्नाश्रये कुचतटे क्रमवर्तिनः कथिताः ।

प्रागासीन्मकरन्दपिच्छिलतले पद्मस्य गर्भे ततः,
शौरेः कौस्तुभकान्तिपुरसुभगाभोगे भुजाभ्यन्तरे ।
आवासस्तव लक्ष्मि सम्प्रति पुनर्निर्व्याजमूर्छत्कृपा,
स्रोतः शीतलिते नृसिंह वसुधानाथस्य नेत्राञ्चले ॥२११॥

---

अत्र क्रमेण प्रक्रम एवास्य निरूपणकारणम् । यदा युगपदेवैकस्यानेकस्थाने स्थितिरूपत्वमुपनिबद्धं तत्र विशेषविषयो नोल्लंघितः । इत्याशयेनात्र क्रमग्रहणम् । न चैव परिवृत्तिः । विनिमयेन विनैवास्य प्रवृत्तिः । पर्यायक्रमत्वमाश्रयित्वा कथनेनान्वर्थकाभिधानम् । क्रमेणोदाहरणम् ।

यासां शत्रुवधूनां स्तनतटं पूर्वमेव केसरकणेन सुन्दरं प्रतीयते स्म तदेवाद्य हे वीर नरेश ! भवतो क्रुद्धे सति गेरुशोभां पलाशवृक्षरक्तवर्णपुष्पशोभां दधाति । अत्र केसररजः गैरिकप्रमुखश्चैकस्मिन्नाश्रये स्तनतटे क्रमवर्ति कथितम् । क्रमेणोदाहरणमिह । नरसिंहनरेशस्य शीतलनेत्रपुटे हि लक्ष्मि ! तव निवासः । पुनश्च व्याजरहितमूर्च्छायुक्तकृपास्रोतः । मकरन्दस्तु पूर्वमेवासीत् कमले । तदनन्तरं शौर्ययुक्तकौस्तुभमणिकान्तिपूर्णसुन्दरभुजयोर्मध्ये शोभितोऽभवत् ।

---

क्रमशः यहाँ प्रक्रम ही इस निरूपण का कारण है । जहाँ एक ही साथ एक की अनेक स्थान की स्थिति रूपता निबद्ध हो, वहाँ विशेष विषय भी उल्लंघित होता है । इस आशय से यह क्रम ग्रहण है और परिवृत्ति नहीं है । विनिमय के बिना ही इसकी प्रवृत्ति है । पर्याय क्रम का आश्रयण कर कहने से अन्वर्थक है । क्रमशः उदाहरण—जिन शत्रु बधुओं का स्तन का अग्रभाग पहले केसर रज से सुन्दर हारों से सुशोभित रहा । वही आज हे वीर नरेश ! आप के क्रुद्ध होने पर

---

"the breasts of the wives of your enemies that used to be embellished with saffron flowers previously are now decorated with red palās flowers. Here two things saffron flowers and palās

अत्रैकस्या एव लक्ष्म्याः पद्मगर्भादावनेकस्मिन्नाश्रये स्थितिः क्रमवर्तिनी ।

अधिकन्यूनसमानां न्यूनाधिकतुल्यवस्तुभिर्यत्र ।
विनिमय एषा कथिता परिवृत्तिः कोविदैस्त्रिविधा ॥२१२॥

विनिमयः किंचिन्मुक्त्वा कस्यचित् स्वीकारः । त्रिविधा अधिकपरिवृत्तिर्न्यूनपरिवृत्तिःसमपरिवृत्तिश्च । क्रमेण यथा ।

नरसिंह महीपाल मदान्धास्तव दन्तिनः ।
ददत्यरिनरेन्द्रेभ्यो दिवमाददते भुवम् ॥२१३॥

अत्राधिकाया दिवो दानान्न्यूनाया भुवो ग्रहणम् ।

---

अत्रैकैव लक्ष्मीः, तस्याःकमलगर्भादिष्वनेकाश्रयेषु स्थितिः क्रमशः विद्यमानासीत् । न्यूनाधिकतुल्याधिकन्यूनसमानां विनिमयः परिवृत्तिः कथिता । अधिकदानेन न्यूनोपादानमधिकपरिवृत्तिः न्यूनदानेनाधिकग्रहणं न्यूनपरिवृत्तिः । समेन समं स्वीकरणं, समपरिवृत्तिः । त्रिविधेयम् ।विनिमयं व्यतिरिच्य किंचिन्मुक्त्वा कस्यापि स्वीकरणं, न्यूनाधिकसमभेदेनेयं त्रिविधा परिवृत्तिः । क्रमेणोदाहरणानि—

नरसिंह नरेश ! तव गजाः मदान्धाः शत्रुनरेशान् स्वर्गं प्रेषितवन्तः ! भूमिं चाधिगृहीतवन्तः । इहाधिकस्वर्गप्रदानेन न्यूनभूमेर्ग्रहणम् । अत एवाधिकपरिवृत्तिः ।

---

गेरु की शोभा पलाश वृक्ष के रक्त वर्ण के पुष्पों से शोभित हैं । यहाँ कुङ्कमरज आदि गैरिक प्रमुख एक ही आश्रय स्तन तट में क्रमशः कहे गए । नरसिंह नरेश के शीतल नेत्र पुट में हे लक्ष्मी ! तुम्हारा निवास है । पुनः व्याज रहित मूर्च्छायुक्त कृपा का स्रोत है । मकरन्द पहले कमल के बीच में था । उसके बाद शूरता से युक्त कौस्तुभमणि की कान्ति से पूर्ण सुन्दर भुजाओं के मध्य में शोभित है ।

यहाँ एक ही लक्ष्मी के कमलगर्भादि में अनेक आश्रय में स्थिति क्रमशः विद्यमान है । न्यूनाधिक, तुल्य और अधिक न्यून सम का विनिमय परिवृत्ति अलंकार होता है । इसके अधिक दान से न्यूनोपादान अधिक परिवृत्ति, न्यूनदान से अधिक ग्रहण न्यून परिवृत्ति, सम से सम स्वीकार होना सम परिवृत्ति, तीन भेद किए गए हैं । कुछ को छोड़कर किसी को स्वीकार करने में विनिमय है । तीन प्रकार की परिवृत्ति अधिक न्यून सम परिवृत्ति हैं । क्रमशः उदाहरण—

---

flowers have got associated by turns with the same base namely breast. The Goddess of wealth had previously for its location below this flower and the next the chest of Lord Viṣṇu and now she has come to reside for ever in the eyes of king Narsinga Deva. The idea is that everyone. however prior he

तनौ दत्वा पाकोन्मुखशरसखीं कामपि रुचं,
रिपुस्त्रीभ्यस्तासां कलयसि कलिङ्गक्षितिपते ।
प्रभां ताटङ्कानां श्रवणकुसुमानां विलसितं,
स्मितानामालोकं स्तनमलयजानां श्रियमपि ॥२१४॥

इह न्यूनायाः शरपाण्डुराया रुचः समर्पणात् ताटङ्कप्रभाप्रभृतीनामधिकानामादानम् ।

प्रतिभटधरणिपतिभ्यो नाराचपरम्पराःशिता दत्वा ।
हरसि नृसिंह नरेश्वर तज्जयलक्ष्मीकटाक्षपरिपाटीः ॥२१५॥

अत्र नाराचपरम्परापरित्यागात् तुल्यगुणानां कटाक्षपरिपाटीनां कलनम् ।

एकस्यानेकत्रप्राप्तावेकत्र यो भवेन्नियमः ।
ख्याता सा परिसंख्या संख्यावद्भिश्चतुर्भेदाः ॥२१६॥

---

हे नरसिंह नरेश ! शरीरे पाकोन्मुखवाणसखीं प्रदाय कामपि कान्तिं शत्रुनरेशाणां वधूभ्यः तासां क्रीडा स्त्रीणां कर्णपुष्पाणां ताटङ्कानां प्रभा प्रकाशिता । तासां स्मितानां प्रकाशः स्तनचन्दनस्य शोभां विवर्द्धयति ।

अत्रन्यूनशरपाण्डुरकान्तिसमर्पणात् ताटङ्कप्रभाकान्त्यादीनामधिकस्यादानम् । हे नरसिंह नरेश ! शत्रुराजानं प्रति वाणपरम्परया तीक्ष्णदानम् । तज्जयलक्ष्मीकटाक्षपरिपाटीः । अत्र नाराचपरम्परापरित्यागात् तुल्यगुणानां कटाक्षपरिपाटीनामाकलनम् । एकस्यानेकत्रैकस्य प्राप्तौ परिवर्जनेनानेकस्य नियमनं यत्र भवति । तत्र परिवर्जनसंख्यानेन परिसंख्यालंकारो भवति । अस्याश्चत्वारो भेदाः ।

---

नरसिंह नरेश ! तुम्हारी हाथियाँ मदान्ध हैं । शत्रु नरेशों को स्वर्ग देते हैं । और उनकी भूमि का ग्रहण करते हैं ।

यहाँ अधिक स्वर्ग के दान से न्यून भूमि का ग्रहण किया गया है । अतः अधिक परिवृत्ति अलंकार है ।

हे कलिङ्ग नरेश ! शरीर में देकर पाकोन्मुखशरसखी को किसी भी कान्तिको शत्रु राजाओं की वधुओं के लिए, उनकी क्रीडा है । स्त्रियों के कर्णफूलों ताटङ्कों की प्रभा प्रकाशित है । उनकी मुस्कराहटों का प्रकाश स्तन के चन्दनकी शोभा को भी बढ़ाता है ।

यहाँ न्यूनशरपाण्डुरकान्ति समर्पण से ताटङ्क कर्णफूल की कान्ति आदि के आधिक्य का ग्रहण किया गया है । शत्रु राजाओं को वाणकी परम्परा तीक्ष्णता से प्रदान कर हे नरसिंह नरेश ! उस जयलक्ष्मी के कटाक्ष परिपाटी का हरण करते हैं ।

